# शार्ङ्गधरसंहिता ।

दामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण

विरचिता

आढ़मल्लेन विरचितया

दीपिकाख्यटीकया समन्विता च ।

पण्डित-श्री-आशुबोध-विद्याभूषणेन

तथा

पण्डित-श्री-नित्यबोध-विद्यारत्नेन च

विविधटिप्पन्या समलङ्कृता

संशोधिता प्रकाशिता च ।


प्रथमसंस्करणम् ।

कलिकाता महानगर्य्यां

वाचस्पत्ययन्त्रे

मुद्रिता ।

इं १९११ ।



सर्वं स्वत्वं संरक्षितम् ।


[redacted] ।

# सूचीपत्रम्।

## तृतीयोऽध्यायः ।



## चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः ।

# सप्तमोऽध्यायः ।

विषयाः पृष्ठाङ्काः ।



विषयाः पृष्ठाङ्काः ।

---

## मध्यखण्डः ।

## प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः।

## तृतीयोऽध्याय:।



## चतुर्थोऽध्याय:।



## पञ्चमोऽध्याय:।

---

# षष्ठोऽध्यायः ।

——

## सप्तमोऽध्याय: ।





——

## अष्टमोऽध्याय: ।

| विषयाः | पृष्ठाङ्काः। |
|---|---|



## नवमोऽध्यायः।



## दशमोऽध्यायः।

## एकादशोऽध्यायः ।

——

---

## उत्तरखण्ड: ।

## प्रथमोऽध्याय: ।



---

## द्वितीयोऽध्याय: ।

## तृतीयोऽध्यायः ।





## चतुर्थोऽध्यायः ।

---

# पञ्चमोऽध्यायः ।

## षष्ठोऽध्यायः।



## सप्तमोऽध्यायः।

## दशमोऽध्यायः।



## एकादशोऽध्यायः।

## द्वादशोऽध्यायः।



## त्रयोदशोऽध्यायः।

सटीक-

# शार्ङ्गधरसंहिता।

## [ पूर्वखण्डः ]।

---

## प्रथमोऽध्यायः।

---

### अथ परिभाषाध्यायः।

ग्रन्थकृन्मङ्गलाचरणम्।—

श्रियं स दद्याद्भवतां पुरारिर्यदङ्गतेजःप्रसरे भवानी।
विराजते निर्मलचन्द्रिकायां महौषधीव ज्वलिता हिमाद्रौ॥१॥

---

टीकाकृन्मङ्गलाचरणम्।—

करशिरसाऽच्युतमीशं भवभवपरिच्छित्त्यालमुपायम्। स्वर्गापवर्गयोरपि तापत्रयनाशार्थमभिवन्दे॥१॥ सगणगणेशं मतिदं विघ्नसमूहांश्च हन्ति यः। स्मरणे तदनु गुरोरपि चरणं गदहीन(दीन)मनुजानाम्॥२॥ ये दुर्जनाः परगुणाननुसूचयन्ति तेऽपि स्वभाववशगाः किमु वारणीयाः। ये शास्त्रबोधगुणदोषविचारदक्षास्ते सज्जनाः प्रणतिभिः खलु वन्दनीयाः॥३॥ श्रीवास्तव्यकुलप्रकाशमणयो ये पूर्वजा विश्रुताः श्रीहम्मीरपुरे महाजनतते येषां स्थितिः कथ्यते। ये कामं मदविह्वलामिव रवेः क्षीराब्धिपारङ्गतामत्याश्चर्यसुचान्द्रकान्तिविततां प्रख्यातकीर्त्तिं गताः॥४॥ तदन्वये किं बहुना प्रसिद्धः श्रीचक्रपाणिः कुलकैरवेन्दुः। नानागुणालोधसभूत्र यस्य समस्तवैद्योद्भटनादिरूपा॥५॥ तस्य कुञ्जसुभगस्य तनूजो भार्गवसंज्ञ इति भूपतिमान्यः। सुश्रुतादिकरहस्यविधिज्ञो यो यशांसि विपुलानि च लेभे॥६॥ तस्यात्मजो दीर्घमतिः प्रहृष्टो नाम्नाऽऽदमल्लोऽल्पनिबन्धदर्शी। तेन स्वगुर्वेचनतत्परेण विधास्यते शार्ङ्गधरप्रकाशः॥७॥ केचिच्छास्त्रविशारदाः कतिपये दिव्यौषधीकोविदाः नानाव्याधिपरीक्षणेषु चतुराः कर्मोत्सुकाश्चापरे। कामं तानधिकर्तुमुत्सुकमना नाहं समर्थो यतस्तेषां सन्निधिमेत्य चात्र रचितं यत्किञ्चिदेव शुभम्॥८॥ इन्दौकान्तपुरी पुरा पुरजिता काशीव विद्वज्जनैर्व्याप्ता यत्र सरःसरिद्गुणवरा धर्मवती पापहा। यस्यां हृद्गतवासुदेवचरणद्वन्द्वाम्बुजः क्ष्मापतिः ख्यातो धर्म इवास्ति धर्मगतिषु

ग्रन्थस्य प्रामाणिकत्वनिर्देशः।—

**प्रसिद्ध-*-योगा मुनिभिः प्रयुक्ताश्चिकित्सकैर्ये बहुशोऽनुभूताः।**
**विधीयते शार्ङ्गधरेण तेषां सुसङ्ग्रहः सज्जनरञ्जनाय॥ २॥**

श्रीजैवसिंहः प्रभुः ॥९॥ तस्यां शार्ङ्गधरोक्तानां योगानाञ्च प्रकाशिनी। क्रियते माऽऽढमल्लेन संहितायाः प्रदीपिका ॥१०॥ अभिनवनिबन्धरचनां श्रोतुं कः कोऽत्र लोलुपो भवति। यः कृपया परकाव्यं पश्यति सर्वं स वै धीरः ॥११॥

अथेह पृथुतरदुरधिगमायुर्वेदतत्त्वाङ्कितसङ्ग्रन्थपरिसमाप्त्यर्थं श्रोतॄणामपि प्रत्यूहव्यपोहार्थं मनसि विशिष्टेष्टदेवताप्रणामपूर्वकमाशीर्वचमादौ निबद्धवान् ग्रन्थकारः; तद्यथा, श्रियमित्यादि।—यदङ्गतेजःप्रसरे भवानी विराजते स पुरारिर्भवतां श्रियं दद्यादित्यन्वयः। यथा हिमाद्रौ ज्वलिता महौषधी राजते; क्व? सत्या निर्मलचन्द्रिकायां निर्मला या चन्द्रिका ज्योत्स्ना तस्यामित्यर्थः। "निर्मलचन्द्रिकायाम्" इत्यस्य स्थाने "निर्मलचन्द्रिकातः" इति केचित पठन्ति व्याख्यानयन्ति च। पुरारिः पुरनामा दैत्यविशेषः स एवारिर्यस्य, यद्वा—पुरस्यारिः पुरारिः शिव इत्यर्थः। श्रियमिति कल्याणं लक्ष्मीं वा। भवतामित्यत्र यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदाननित्यनेन चतुर्थी न स्यादित्यत आह—"विवक्षातः कारकाणि भवन्ति" इति न्यायादिह दित्सार्थे षष्ठ्यपि भवतीत्यर्थः। यदङ्गतेजःप्रसरे तमःसमूहे चर्वाङ्गे इति सम्बन्धः। एतेन विभूत्यालिप्ताङ्गस्यापि शुभ्रत्वादद्रिसाम्यम्। † "भवानी पार्वती चण्डी" इत्यमरः। अनेनाशीर्निर्देशं कथितवानाचार्य्यः; यतः,—"आशीर्नमस्क्रिया वस्तु-निर्देशो वाऽपि तन्मुखम्" इति त्रिविधं प्रबन्धमुखलक्षणं भवति। आशीर्ग्रहणमत्र दुष्कृतादीनां विपाकजन्यदुःखस्वरूपरोगनिवृत्त्यर्थं, तन्निवृत्त्या सुखश्रियः प्राप्तिरिति भावः॥ १॥

अथ ग्रन्थोऽयं सकलजनोपकारार्थं भवतु इति मत्वा सद्ग्रन्थस्य सम्बन्धः कथनीयः; तद्यथा—"सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनात् यतः। तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते॥" इति। अनेन तावत पूर्वं तमाह, प्रसिद्धयोगा इत्यादि।—ये प्रसिद्धयोगाः सन्ति तेषा सुसङ्ग्रहः सज्जनरञ्जनाय मया शार्ङ्गधरेण विधीयते विशेषेण क्रियते इत्यभिप्रायः, न तु क्रियते (?), यतश्चरकसुश्रुतादिमुनिभिरितस्ततो विस्तृता, मया संगृह्य प्रकारान्तरेण लिख्यते (?) इति भावः। एतेन ग्रन्थस्य विशिष्टत्वं दर्शितम्।

* "युज्यते इति योगः क्वाथचूर्णादिगणः" इति गूढार्थदीपिकाकारः।

† अमरकोषे तु "शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला। अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका॥" इति पाठः।

वैद्यस्य कर्त्तव्यनिर्देशः ।—

**हेत्वादिरूपाकृतिसात्म्यजाति-भेदैः समीक्ष्यातुरसर्वरोगान् ।**
**चिकित्सितं कर्षणबृंहणाख्यं कुर्वीत वैद्यो विधिवत् सुयोगैः ॥३॥**

कीदृशा योगाः ? मुनिभिः प्रयुक्ताः इति—त्रैकालिकदर्शी पुरुषातिशयो हि मुनिरुच्यते ; तैः पूर्वं कथिता इत्यर्थः । एतेन ग्रन्थस्य प्रामाण्यं कथितम् । पुनः कीदृशाः ? चिकित्सकैर्वैद्यैर्बहुशो वारं वारमनुभूता नानारूपरोगशमनादिभिर्दृष्टप्रत्यया इत्यर्थः । एतेनात्र सज्जनानां दर्शनादुत्कण्ठा स्यादित्यभिप्रायः ॥ २ ॥

इदानीं "रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्" इत्यादिमतमालोच्य शार्ङ्गधरोऽप्याह, हेत्विति ।—वैद्य आतुरसर्वरोगान् समीक्ष्य पश्चात् चिकित्सितं विधिवत् कुर्वीतेति, अन्यथा दोषः स्यात् । तथा ह्युक्तं—"यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक् । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥" इति । कैः कृत्वा समीक्ष्येत्याह—हेतुर्निदानम्, आदिरूपम् पूर्वरूपम्, आकृतिः स्वरूपं, सात्म्यम् उपशयः, जातिः सम्प्राप्तिरिति, एषां भेदैः नानात्वकल्पेन एते व्यस्ताः समस्ताश्च व्याधिबोधका ज्ञेया इत्यर्थः ; यद्वा—हेतुरादिर्येषां ते हेत्वादयः, ते च रूपादयश्च तैरित्यर्थः, एतेन हेत्वादिपञ्चभिः रूपादिभिश्च आतुररोगान् परीक्ष्येति भावः । तथा हि वाग्भटे—"दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम् । रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥" ( सूत्र० १म अ० ) इति । हेत्वादिपञ्चकं पूर्वं व्याख्यातमेव । रूपादित्रयं यथा—रूपमिति चाक्षुषं, तेन शरीरस्य स्थूलकृशतावर्णविकारादयः, एतेन दर्शनज्ञानमलङ्करोति । आकृतिरिति आ समन्तादेव कृतिः कृतिकारणमिति समुचितकौशल्येनैव नाड्यादिभिः शीतोष्णादिकज्ञानरूपमित्यर्थः, एतेन स्पर्शनज्ञानमलङ्करोति । सात्म्येन हितं कथ्यते, भवता किं सात्म्यम् ? इत्यादिवाक्येन प्रश्नज्ञानमलङ्करोति ; अथवा—सात्म्यमभिलषितं वदन्त्यन्ये, यतो येन यत् वाञ्छितं भवति तस्य तेनैव दोषादीनां बोधकत्वं ज्ञायते, इति दर्शनादिकं त्रयं कथितम् । जातिशब्देन विशिष्टेन्द्रियज्ञानमभिधीयते ; यतः सुश्रुते—"षड्विधो हि रोगाणां विज्ञानोपायः, तद्यथा—पञ्चभिः श्रोत्रादिभिः प्रश्नेन च" ( सूत्र० १०म अ० ) इति । अतो दर्शनादयस्त्रय एवादौ व्याख्याताः, शेषाः श्रोत्रादयो जातिभेदेन कथिताः । तदुक्तं सुश्रुताचार्येण—"तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणस्रावविज्ञानीयादिषु वक्ष्यन्ते सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः । स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयः स्पर्शविशेषा ज्वरशोफादिषु । चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्ण-

दिव्यौषधीनां बहवः प्रभेदा वृन्दारकाणामिव विस्फुरन्ति।
ज्ञात्वेति सन्देहमपास्य धीरैः सम्भावनीया विविधप्रभावाः ॥४॥
स्वाभाविकागन्तुककायिकान्तरा रोगा भवेयुः किल कर्मदोषजाः।
तच्छेदनार्थं दुरितापहारिणः श्रेयोमयान् योगवरान्नियोजयेत् ॥५॥

विकारादयः। रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः। गन्धेन्द्रियविज्ञेयाः परिष्ट-लिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः" (सूत्र० १०म अ०) इति हेत्वादयो व्याख्याताः। तत्राद्यः पक्षो व्यवहारसिद्धः, द्वितीयस्तु कल्पितोऽपि साधुः। समीक्ष्येति सम्यक्प्रकारेण विचार्य्य, एतद्ग्रहणं तज्ज्ञानविच्छेदार्थं, यतः "मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च। तथा दुष्परिदृष्टाश्च मोहयेयुश्चिकित्सकम् ॥" इति। चिकित्सा रोगापनयनं कर्म व्याधिप्रतीकारः धातुसाम्यार्था क्रिया चेत्यादिपर्य्याय-वाचकैः शब्दैश्चिकित्सा कथिता। तथा चोक्तं—"चतुर्णां भिषगादीनां शस्तानां धातु-वैकृते। प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ॥" (च० सूत्र० ९म अ०) इति। तत्राव द्विविधं कर्म—कर्षणं बृंहणाख्यमिति। कर्षणमिति प्रवृद्धदोषाणां, बृंहणमिति क्षीणानाम् ; तथा च—"क्षीणा वर्द्धयितव्याः" (सु० चि० ३३अ०) इत्यादि। तथा—"रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता" (वा० सूत्र० १म अ०) इति वचनात्। सुयोगै-रिति शोभनद्रव्यकृतप्रयोगैः शीघ्रमारोग्योत्पादकैरित्यर्थः। इदानीं द्रव्याणां विविध-प्रभावाः सन्ति तेषां हेतुभिः परीक्षां निराकर्त्तुमाह, दिव्यौषधीनामिति।—दिव्यौ-षधीना बहवः प्रभेदा वृन्दारकाणामिव विस्फुरन्ति प्रकटीभवन्ति इत्यर्थः, इति ज्ञात्वा विचार्य्य तदा (?) सन्देहमपास्य दूरीकृत्य विविधप्रभावा अपरिमितशक्तयोऽविच्छिन्न-शक्तयो वा सम्भावनीयाः तेषां सम्भावना कर्त्तव्येत्यर्थः, धीरैरिति ज्ञेयम्। एतेनाचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति तात्पर्य्यार्थः। दिव्यौषधीनामिति—दिव्यग्रहणमत्र द्रव्याणां विशिष्टत्वज्ञानार्थम्। वृन्दारकाणामिति—यथा देवानां भेदा अपरिमितास्तथैव द्रव्यभेदा इत्यभिप्रायः। प्रभावाश्चेत्यचिन्तनीयाः। धीरैरिति गम्भीरबुद्धिभिः, धीरा हि बाह्याध्यात्मिकाना हिताहितपरिच्छेदकारिणो भवन्ति, अतो धीरग्रहणमवानिश्चयार्थ-ज्ञापकत्वव्यवच्छेदार्थम्। अथ प्रयोजनमपि सर्वस्यैव स्यात्, तथा हि—"सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित्। यावत् प्रयोजनं नोक्तं तावत् तेन न गृह्यते ॥" इति। अत एव तदधिकृत्याह, स्वाभाविकेति।—स्वाभाविकादयो रोगाः कर्मदोषजा भवेयुः। किलेत्यागमनिश्चयार्थम्। तच्छेदनार्थं तेषामुपशमनिमित्तम्। योगवरान् प्रयोगश्रेष्ठान् नियोजयेत्; एतेन समस्तार्षतन्त्राभ्यन्तरस्थान् योगान्

ग्रन्थस्य अभिधेयः।—

प्रयोगानागमात् सिद्धान् प्रत्यक्षादनुमानतः।
सर्वलोकहितार्थाय वक्ष्याम्यनतिविस्तरान्॥ ६॥

विचिन्त्य आचार्य्येणाव ते युज्यन्त इति भावः। स्वाभाविका इति—स्वभावेन भवाः स्वाभाविकाः, ते क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः। आगन्तुका इति अभिघातनिमित्ताः, ते व्यालादिकृताश्च। कायिकान्तरा इति शारीरा अन्तर्जाताश्च, शारीरास्तेऽन्नपानमूलाः वातादिदोषद्वाराऽसृक्पित्तकामादयः। अन्तःशब्देन मनोऽभिधीयते, तदुद्भवा मानसा इत्यर्थः, ते कामक्रोधादिनिमित्ता मदमूर्च्छासन्यासग्रहभूतोन्मादादय इति। सुश्रुते स्वाभाविकादयो दर्शिताः। कर्मदोषजा इति—एके कर्मजाः, एके दोषजाः, अपरे कर्मदोषजाश्च। तथा चोक्तं—"कर्मप्रकोपेण कदाचिदेके दोषप्रकोपेण भवन्ति चान्ये। तथाऽपरे प्राणिषु कर्मदोष-प्रकोपजाः कायमनोविकाराः॥" इति। कर्मजादीनां संज्ञा केषाञ्चित् ज्ञापनार्थं लिख्यते यथा—"ये आमयाः स्वपरद्रविणापहाराङ्गवैङ्गनागमनविप्रवधादभिर्ये। दुष्कर्मभिस्तनुभृतामिह कर्मजास्ते नोपक्रमेण भिषजामुपयान्ति शान्तिम्॥" किञ्च—"दानैर्दयादिभिरतिथिद्विजदेवतानां गुर्वर्चनाप्रणतिभिश्च जपैस्तपोभिः। इत्युक्तपुण्यनिचयैरुपचीयमानाः प्राक्कर्मजा यदि रुजः प्रशमं प्रयान्ति॥" इति। अथ दोषजा यथा—"स्वहेतुदुष्टैरनिलादिदोषैरुपप्लुतेः स्वेषु परिस्रवाङ्गैः। भवन्ति ये प्राणभृतां विकारास्ते दोषजा भेषजसिद्धसाध्याः॥" उभयोत्पन्ना यथा—"दानादिभिः कर्मभिरौषधैश्च कर्मक्षये दोषपरिक्षये च। सिध्यन्ति ये यत्नवतां कदाचिन्न ते कर्मदोषप्रभवा विकाराः॥" इति। दुरितापहारिण इति—दुरितशब्देन दुःखमभिधीयते, तत्संयोगा व्याधय इत्युक्तत्वात्। श्रेयोमयानिति पुण्यस्वरूपान्। येऽन्येऽपि पुण्यमयास्ते दुःखच्छेदनाय सम्भवन्ति, उच्यते—"परदुःखविनाशार्थं महान्तो निजशक्तिभिः। कर्म कुर्वन्ति यत् पुण्यं तेन पुण्यमयाः स्मृताः॥" इति॥ ३—५॥

इदानीं प्रत्यक्षसिद्धयोगानां कथनेन सङ्क्षेपकरणेन च निजग्रन्थस्य माहात्म्यमाह, प्रयोगानिति।—आगमादिसिद्धान् प्रयोगान् सर्वलोकहितार्थाय अनतिविस्तरान् वक्ष्यामि कथयिष्यामीत्यर्थः। "अनतिविस्तरं यथा स्यात्" इत्येके पठन्ति। आगमादीनां लक्षणन्तु जेज्जड़ादिभिराचार्य्यैरुक्तं, तदेव सुबोधार्थं लिख्यते; यथा—आगमो वेदः, आप्तानां शास्त्रं वा। तथा हि—"सिद्धं सिद्धैः प्रमाणैस्तु हितञ्चात्र परत्र च। आगमः शास्त्रमाप्तानामाप्ताः तत्त्वार्थवेदिनः॥" इति। आगमात् सिद्धाः

अथानुक्रमणिका।—

पूर्वखण्डानुक्रमणिका।—

प्रथमं परिभाषा स्याद्भैषज्याख्यानकं तथा।
नाडीपरीक्षादिविधिस्ततो दीपनपाचनम्॥ ७॥
ततः कलादिकाख्यानमाहारादिगतिस्तथा।
रोगाणां गणना चेति पूर्वखण्डोऽयमीरितः॥ ८॥

श्रूयन्ते, यथा—"जीवेद्वर्षसहस्राणि योगस्यास्य प्रभावतः। वृद्धा च शतवर्षीया भवेत् षोडशवार्षिकी॥" इत्यादि। प्रत्यक्षादिति—यत्किञ्चिदर्थस्य साक्षात्कारि ज्ञानं तदेव प्रत्यक्षं, तथा हि—"यतोऽधिगतमश्रान्तं वस्तु प्रत्यक्षमुच्यते। इन्द्रियाणामसंज्ञानं वस्तु तद्भ्रमः स्मृतः॥" इति। तत्सिद्धा यथा—वमनविरेचनादिक्रियोगाः प्रत्यक्षफलाः। अनुमानत इति—अनु पश्चादव्यभिचारिलिङ्गाल्लिङ्गि ज्ञायते येन तदनुमानम्। तत्सिद्धा यथा—मृत्पाण्डुरोगेण मृद्भक्षणमनुमीयते, कृशां मक्षिकादिभक्षणं, त्वक्परिपाटनादिभिः पक्वामव्रणमिति। केन हेतुना तथा क्रियते इति विवक्षायां सर्वलोकहितार्थायेति ग्रहणं कृतम्। सर्वलोक इति—लोको हि द्विविधः स्थावरजङ्गमात्मकभेदेन, अत्र पुरुषप्राधान्यात् जना एव लोकशब्देन गृह्यन्ते। आर्षेणापि ग्रन्थेन ज्ञानं भविष्यति किमनेन तदुपजीविना ग्रन्थेनेत्याशङ्क्य अनतिविस्तरानिति ग्रहणं कृतं, न अतिशयेन विस्तरो यत्र तानिति। यतो बहुप्रपञ्चरचितानि ऊहापोहपूर्वपक्षसमाधानादिना तन्त्राणि सोद्वेगकराणि भवन्ति तस्मात् सङ्क्षिप्यामुल्लिखतीत्यर्थः॥६॥

* अथानुक्रमणिकामाह, अथेति।—अथ शब्दः आनन्तर्यार्थे मङ्गलार्थे वा। अनुक्रमणिका इति अध्यायानामनुक्रमणं त्रिखण्डानामित्यर्थः। इदानीं तामनुक्रमणिकां दर्शयितुमाह, प्रथममित्यादि।—परिभाषादिरोगगणनान्तैः सप्तभिरध्यायैः कृत्वा पूर्वखण्डोऽयमीरितः कथित इत्यर्थः, आचार्य्येण इति शेषः। ते के अध्याया इत्याह, प्रथममिति—प्रथममादौ परिभाषा तुलनादिकम्। द्वितीये भैषज्याख्यानकम्; भैषज्याख्यानकमित्यौषधभक्षणविधिः। तथेति ग्रहणात् द्रव्यरसगुणवीर्यविपाकादीनां कथनम् ऋतुषट्ककथनञ्च। नाडीपरीक्षादिविधिरिति तृतीयम्; आदिग्रहणादिह स्वप्नादीनां कथनम्। ततोऽनन्तरं दीपनपाचनादिलक्षणकथनं

* टीकाकारकृतव्याख्यादर्शनात् "अथानुक्रमणिका" इति पाठो मूलग्रन्थे आसीदित्यनुमीयते, अन्यथा "अथेति" इत्यारभ्य "त्रिखण्डानामित्यर्थः" इत्यन्तो ग्रन्थः टीकाकारस्य उन्मत्तप्रलाप इत्याशङ्का दूरपनेया इति।

मध्यखण्डानुक्रमणिका ।—

स्वरसः क्वाथफाण्टौ च हिमः कल्कश्च चूर्णकम् ।
तथैव गुटिकालेहौ स्नेहः सन्धानमेव च ।
धातुशुद्धी रसाश्चैव खण्डोऽयं मध्यमः स्मृतः ॥ ९ ॥

उत्तरखण्डानुक्रमणिका ।—

स्नेहपानं स्वेदविधिर्वमनञ्च विरेचनम् ।
ततस्तु स्नेहवस्तिः स्यात्तत्रापि निरूहणम् ।
ततश्चाप्युत्तरो वस्तिस्ततो नस्यविधिर्मतः ॥ १० ॥

---

चतुर्थम् ; * आदिशब्दात् संसन-भेदनानुलोमन-वमन-लेखन-स्तम्भनादिकथनम् । ततोऽनन्तरं कलादिकाख्यानमिति पञ्चमम्, आदिग्रहणात् सृष्टिक्रमशारीरादिकथनम् । तथेत्यनन्तरं आहारादिगतिरिति षष्ठम् ; आदिशब्दात् गर्भोत्पत्तिकुमारपोषणप्रकृत्यादि-लक्षणकथनञ्च । रोगाणां गणना चेति—इतिशब्देनावशिष्टं सप्तममित्यर्थः, एतेन नाड्या ये उक्ता रोगा ज्वरादयः तेषां गणना सङ्ख्याकथनमिति पूर्वखण्डाध्यायानु-क्रमः कथितः ॥ ७।८ ॥

अथ मध्यमखण्डानुक्रमणिकां दर्शयन्नाह, स्वरस इत्यादि ।—स्वरसादिरसान्तै-र्द्वादशभिरध्यायैर्मध्यमः खण्डः स्मृतः कथित इत्यर्थः । स्वरसादयो विख्याता एव, ते चाग्रे वक्ष्यमाणाः सन्ति । तत्र स्वरसेषु पुटपाकविधिकथनम् । क्वाथे प्रमथ्यादुष्णोदक-क्षीरपाकान्नक्रियाविधिकथनम् । फाण्टे मन्थविधिकथनम् । स्नेहग्रहणात् घृतकल्पना तैलकल्पना च । सन्धानमित्यनेन मद्यभेदकथनम् । धातुशुद्धिरित्यत्र सप्तधातूप-धातूनां शोधनमारणादिकथनम् । रसा इति बहुवचनेन सर्वेषां रसोपरसादीनां शोधनमारणादिकथनम् । इति मध्यमखण्डस्याध्यायानुक्रमो व्याख्यातः ॥ ९ ॥

इदानीमुत्तरखण्डानुक्रममाह, स्नेहपानमिति ।—स्नेहपानादिनेत्रकर्मप्रकारान्तै-

---

* "दीपनपाचनम्" इति मूलोक्तपाठे 'आदि'शब्दाभावात् टीकाकारस्य "आदिशब्दात्" इत्यादिग्रन्थः स्त्रोतस्य "दीपनपाचनादिलक्षणकथनम्" इत्यस्यैव व्याख्या न वा तत् सुधीभिः स्वयमेव विचार्य्यमिति । वस्तुतस्तु, चतुर्थे दीपनपाचनाध्याये संसनादीनां लक्षणसत्त्वात्, "नाडीपरीक्षादि" "कलादि" इति पूर्वापरयोः आदि-शब्दसद्भावाच्च दीपनपाचनमित्यत्र अनुक्तोऽपि आदिशब्दः सन्दंशपतितन्यायेन पूर्वा-परत आकृष्य योज्य इति ।

धूमपानविधिश्चैव गण्डूषादिविधिस्तथा।
लेपादीनां विधिः ख्यातस्तथा शोणितविस्रुतिः।
नेत्रकर्मप्रकारश्च खण्डः स्यादुत्तरस्त्वयम् ॥ ११ ॥

श्लोकानां सङ्ख्यामाह:।—

द्वात्रिंशत्सम्मिताध्यायैर्युक्तेयं संहिता स्मृता।
षड्विंशतिशतान्यत्र श्लोकानां गणितानि च ॥ १२ ॥

मानपरिभाषायाः प्रयोजननिर्देशः।—

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते मया ॥ १३ ॥

मागधीयं मानम्।—

त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः।
त्रसरेणुस्तु पर्य्यायनाम्ना * वंशी निगद्यते ॥ १४ ॥

त्रयोदशभिरध्यायैरुत्तरः खण्डः स्यात्। तत्र धूमपाने व्रणधूपनं गृहधूपनञ्च। गण्डूषे कवलादीनां लक्षणग्रहणात् कवलप्रतिसारणकथनम्। लेपेत्यादिग्रहणात् मूर्द्धतैलकर्ण-पूरणविधिकथनम्। शेषं सुबोधम्। इत्युत्तरखण्डाध्यायानुक्रमः कथितः ॥१०।११॥

इदानीं संहितानिरुक्तिपूर्वकं श्लोकसङ्ख्यामाह, द्वात्रिंशदिति।—यतः पूर्वोक्तानां त्रिखण्डानां द्वात्रिंशदध्यायैर्युक्तेयं, तस्मात् संहिता कथिता। "सम्मित" स्थाने "संहित" इति केचित् पठन्ति; तत्रापि स एवार्थः। अत्र संहितायां श्लोकानां गणितानि गणनानि षड्विंशतिशतानि, भवन्तीत्यध्याहार्य्यम्। अध्याय इति—पदसमूहो वाक्यं, वाक्यसमूहः प्रकरणं, प्रकरणसमूहोऽध्याय इति ॥१२॥

अथेदानीं तावत् पूर्वं परिभाषां दर्शयितुमाह, न मानेनेति।—मानेन परि-माणेन विना द्रव्याणां युक्तिः कर्त्तव्यविधिः क्वचित् कुत्रापि न जायते नोत्पद्यते, अत इत्यस्मात् प्रयोगकार्य्यार्थं प्रयोगाणां योगानां कार्य्यार्थं कर्त्तव्यविधिनिमित्तं मानं तुलनादि अत्र संहितायां मया आचार्य्येण उच्यते कथ्यते इत्यर्थः। भविष्य-मान-व्यवच्छेदार्थमुक्तं, तद्भविष्य-मानं वक्ष्यमाणमप्यस्ति ॥ १३ ॥

इदानीं परमाण्वादिगम्य-मानार्थं लक्षणमाह, त्रसरेणुरिति।—परमाणुभिर्यः

* "वंशी" इति गूढार्थदीपिकासम्मतः पाठः। "दंशरन्ध्रं प्रविष्टं यत् रजः, तत् वंशी, तस्याः त्रिंशता परमाणुना या सञ्ज्ञा सा वंशीत्यर्थः" इति गूढार्थदीपिकाकारः।

(जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
तस्य त्रिंशत्तमो भागः परमाणुः स कथ्यते ॥
जालान्तरगतैः सूर्य्यकरैर्ध्वंसी विलोक्यते ॥ )
षड्ध्वंसीभिर्मरीचिः स्यात्ताभिः षड्भिस्तु राजिका ।
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः ॥१५॥
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ।
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधान्यकौ ॥१६॥
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ।
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ॥१७॥
क्षुद्रमोरटकश्चैव द्रङ्क्षणं तन्निगद्यते ।
* ( क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥ )
कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिका ॥१८॥

त्रिंशता स एव त्रसरेणुः प्रोक्तः कथितो बुधैस्तद्देदिभिः पुरुषैः । "परमाणुः सुसूक्ष्मः स्वभावतो ग्राह्यो न चक्षुषा अनुमानेन च" इति केचित् । तथा हि—"जालान्तरगते भानौ यत सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते ॥" इति । त्रिंशतेति—परमाणूनां दर्शावसङ्ख्यैरित्यर्थः । त्रसरेणुरेव पर्य्यायनाम्ना एकार्थवाचक-शब्देन कृत्वा ध्वंसीति निगद्यते कथ्यते, यत्र समानार्थकता शब्दानां तत्र ते पर्य्याया उच्यन्ते इत्यर्थः । ध्वंसीलक्षणन्तु एतस्याग्रे केचित् पठन्ति, यथा—"जालान्तरगतैः सूर्य्यकरैर्ध्वंसी विलोक्यते" इति । सूर्य्यकरैरादित्यरश्मिभिः । अथ मरीचिप्रभृतीनां परम्परामाह, षड्ध्वंसीभिरिति ।—षड्ध्वंसीभिरेका मरीचिर्भवेदिति । मरीचिभि-र्मानसंज्ञकाभिर्मरीचिभिः षड्भिः सङ्ख्याभिरेका राजिका, कथिता इत्यध्याहारः, राजिका सर्षपभेदः । तिसृभी राजिकाभिरिति—राजिकात्रितयेनैकः सर्षपः प्रोच्यते कथ्यते बुधैरिति, सर्षपग्रहणेनात्र गौरसर्षपो ज्ञेय इति । अष्टसर्षपैः कृत्वा एको यवः कथितः, यवोऽन्नविशेषः । गुञ्जामाह—तच्चतुष्टयमित्यनेन गुञ्जा स्यात्, तेन एका गुञ्जा कथिता इत्यभिप्रायः, गुञ्जा रक्तिका वाच्या । अथ माषकमाह—षड्भिः षट्सङ्ख्याभिः रक्तिकाभिः गुञ्जाभिरेको माष इति ख्यातः, स एव हेमधान्यकपर्य्याय-नाम्ना कथित इति स्वमते, क्वचित सप्तभिः क्वचित् पञ्चभिर्दशभिर्वा गुञ्जाभिः कृत्वा

* पाठोऽयं गूढार्थदीपिकाकारसम्मतः ।

अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ।
विड़ालपदकञ्चैव तथा षोड़शिका मता ॥१९॥
करमध्यो हंसपदं सुवर्णं कवलग्रहः ।
उडुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते ॥२०॥
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ।
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ॥२१॥
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्त्यते ।
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते ॥२२॥
प्रसृतिभ्यामञ्जलिः स्यात् कुड़वोऽर्द्धशरावकः ।
अष्टमानञ्च स ज्ञेयः कुड़वाभ्याञ्च मानिका ॥२३॥

---

माषकः कथितः, स एव माषको मरीच्यादिभिर्विचार्य्यमाणोऽप न विरुद्धः, तच्च विस्तरभयान्न लिख्यते। इदानीं शाणपरिमाणं कोलपरिमाणञ्च वक्तुमाह, माषैरिति।—चतुर्भिर्माषकैरेकः शाणो धरणः टङ्कश्च कथितः। माषोऽत्र षड्भिर्गुञ्जाभिस्तुलित इति सर्व्वत्र। तद्द्वयमिति—शाणद्वयेनैवैकः कोलः। "कोलो बदरसंज्ञः" इति केचित्। तस्य पर्य्यायवाचकाः क्षुद्र-वटक-द्रङ्क्षणादयः, तेऽत्र टङ्कद्वयमानसंज्ञका बोद्धव्याः। कर्षमाह, कोलद्वयमिति।—कोलद्वितयमेव कर्षः स्यात्, स चतुःशाण इत्यर्थः। तस्य पर्य्यायसंज्ञकाः पाणिमानिकादयः, पाणिमानिका करतलं [illegible] भावः। अक्ष इति विभीतकफलं, तच्च कर्षमानसंज्ञम्। तिन्दुकं तिन्दुकफलम्। विड़ालपदकम् अङ्गुलिद्वयग्राह्यं चूर्णद्रव्यं, तत् कर्षसंज्ञमित्यर्थः। षोड़शिका षोडश-माषकपरिमितेत्यर्थः। शेषं सुगमम्। अर्द्धपलं पलनामञ्चाह, स्यात् कर्षाभ्यामिति।—कर्षद्वयेनार्द्धपलं कथितं, तदेव शुक्तिः। अष्टमिका च शुक्तिः प्रसिद्धा, अष्टमिका अष्टशाणसंज्ञमानविशेषः। पलमप्याह, शुक्तिभ्यामिति।—शुक्तिद्वयेनैव पलं बोद्धव्यं, पलं प्रसिद्धम्। एतस्यापि मुष्ट्यादयः पर्य्यायवाचका ज्ञेयाः। अत्र मुष्ट्यादिषु पलमेव कीर्त्त्यते नान्यत्। मुष्टिः बद्धान्तर्मुष्टिः। आम्रं फलम्। चतुर्थिकेति चतुःकर्ष इति भावः। षोड़शी षोडशशाणमिता, शाणोऽत्रैवोक्तो ज्ञातव्यः न तु व्यावहारिकः। विल्वं विल्वफलम्, एतत्संज्ञा पले बोद्धव्या। इदानीं प्रसृतिपूर्व्वकं मानिकान्तं मानमाह, पलाभ्यामिति।—पलद्वयेनैका प्रसृतिर्ज्ञेया, प्रसारिताङ्गुलिकरतलं प्रसृतिः, सैव द्वात्रिंशच्छाणमिता। प्रसृतिभ्यामिति—प्रसृतिद्वयेनैकाञ्जलिः, अञ्जलिस्तु करद्वय-

शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः।
शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थैस्तथाढकम् ॥२४॥
भाजनं कंसपात्रञ्च चतुःषष्टिपलञ्च तत्।
चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्मणः ॥२५॥
उन्मानञ्च घटो राशि-र्द्रोणपर्य्यायसंज्ञकाः।
द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः ॥२६॥
शूर्पाभ्याञ्च भवेद्द्रोणी वाहो गोणी च सा स्मृता।
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ॥२७॥
चतुःसहस्रपलिका षण्णवत्यधिका च सा।
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः॥
तुला पलशतं ज्ञेया सर्वत्रैवैष निश्चयः ॥२८॥

---

मिलितसम्पुटकाकारः प्रसिद्धः, स एव कुडवः अर्द्धशरावकश्च कथितः, कुडवः प्रसिद्धश्चतुःपलप्रमितः अर्द्धशरावकश्चतुःषष्टिशाणसंज्ञः। कुडवाभ्यामिति—कुडवद्वयेनैका मानिका, सैव शरावः, अष्टपलश्च शरावः, स तु साष्टाविंशतिशतसङ्ख्याकशाणैः कथितः। अथ प्रस्थाऽऽढके दर्शयितुमाह, शरावाभ्यामिति।—शरावद्वयेन एकः प्रस्थः, स च षोडशपलपरिमितो भवति। चतुःप्रस्थैः कृत्वा आढकमेकं, तच्च भाजनं कंसपात्रञ्च कथितं, भाजनादयोऽप्याढकस्यैव पर्य्याया इत्यर्थः, एतच्चतुःषष्टिपलपरिमितं बोद्धव्यम्। अथ द्रोणप्रभृति द्रोणीपर्य्यन्तमानमाह, चतुर्भिरिति।—चतुर्भिश्चतुःसङ्ख्याकैः आढकैः कृत्वा एको द्रोणः, स च कलशादिपर्य्यायनामभिरुपलक्षितो द्वात्रिंशच्छरावतुलितो ज्ञेयः। द्रोणाभ्यामिति—द्रोणद्वयेन शूर्पकुम्भौ कथितौ. शूर्पश्च कुम्भश्चेति। शूर्पश्चतुःषष्टिशरावको ज्ञेयः। शूर्पाभ्यामिति—शूर्पद्वयेन एका द्रोणी. सैव वाहो गोणी च कथिता. अत्र चतुःषष्टिप्रस्था भवन्तीति तात्पर्य्यार्थः। इदानीं खारीपरिमाणमाह, द्रोणीचतुष्टयमिति।—द्रोणीचतुष्टयं सम्भारं तत खारीशब्दवाच्यं, तेन षण्णवत्यधिकचतुःसहस्रपलमानेन सा ज्ञातव्या. अत एव सूक्ष्मबुद्धिभिरिति ग्रहणम्। अथ भारपरिमाणं तुलापरिमाणमप्याह, पलानामिति।—पलानां पूर्वप्रतिपादितानां यत सहस्रद्वयं तेन एको भारः प्रकीर्त्तितः कथितः; एतेन विंशतितुलाभिः परिमितो भवति। तुला च पलशतपरिमिता ज्ञेया। तथा चोक्तं—"तुला पलशतं तासां विंशति

माषटङ्काक्षबिल्वानि कुडवः प्रस्थ आढकम्।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥२९॥

गुञ्जादिकुडवान्तमानस्य समतानिर्देशः।—

गुञ्जादिमानमारभ्य यावत् स्यात् कुडवस्थितिः।
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ॥३०॥

द्वैगुण्यपरिभाषाया विषयनिर्देशः।—

प्रस्थादिमानमारभ्य द्विगुणं तत् द्रवार्द्रयोः।
मानं तथा तुलायाश्च द्विगुणं न क्वचित् स्मृतम् ॥३१॥

भार उच्यते। खारी भारद्वयेनैव स्मृता षड्भागनाधिका॥" इति। एव निश्चयः सर्वत्रैव सर्वदेशेष्वेव प्रयोगेषु वा ज्ञेय इत्यर्थः, न तु केवलं मगधदेशे। एवेति निश्चयार्थबोधकः। इदानीं सकलमानज्ञापनार्थं श्लोकेनैकेन मानमाह, माषेत्यादि।—माषादिखार्य्यवसाना यथोत्तरं चतुर्गुणा ज्ञेयाः। यो यस्मादुत्तरो यथोत्तरम्; एतेन किमुक्तं भवति? "माषाच्चतुर्गुणः शाणः शाणात् कर्षश्चतुर्गुणः। कर्षाच्चतुर्गुणं बिल्वमित्याद्या अपरे मिताः॥" इति। बिल्वमत्र पलं, राशिर्द्रोणसंज्ञः, गोणीत्यनेन द्रोणी कथिता ॥१४—२९॥

इदानीं द्रवार्द्रशुष्कद्रव्याणामनुक्तानां मानं निर्देष्टुमाह, गुञ्जादीति।—गुञ्जाप्रभृतिमानमारभ्य यावत् कुडवस्थितिः स्यात् तावद्द्रवादीनां मानं समं ज्ञेयम्। गुञ्जा आदिर्येषां ते माषक-कोलाक्ष-शुक्ति-प्रसृताः कुडवपर्य्यन्ताः। द्रवं तोयादि, आर्द्रं तत्क्षणोद्धृतं, शुष्कं सूर्य्यांशुभिः शोषितं चिरकालं धृतञ्च। एके "यावन्न कुडवस्थितिः" इति पठन्ति, तत्र—कुडवादर्वाक् सममिति। तथा हि—"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत। शुष्क द्रवार्द्रयोस्तावत् तुल्यं मानं प्रकीर्त्तितम्॥" इति। एतदपि तन्त्रान्तरे यथा—"प्रस्थादिमानमारभ्य द्विगुणस्य द्रवार्द्रयोः। * कुडवोऽपि क्वचिद्दृष्टो यथा दन्तीघृते मतम्॥" इति ॥ ३० ॥

प्रस्थादिमानमिति।—प्रस्थादिपरिमाणमारभ्य यावत् तुला पूर्य्यते, तावद्द्रवार्द्रयोर्द्विगुणपरिमाणं ज्ञेयम्। द्विगुणन्तु शुष्कद्रव्यादित्यर्थः; तथा च—"शुष्कद्रव्यस्य या मात्रा त्वार्द्रस्य द्विगुणा हि सा। शुष्कस्य गुरुतीक्ष्णत्वात्तस्मादर्द्धं प्रयोजयेत्॥"

---

* हारीतः कुडवस्यापि द्वैगुण्यमाह, तथा च—"आर्द्रद्रव्यस्य कुडवः पलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः॥" इति।

कुडवमितद्रवद्रव्यमानार्थं पात्रविशेषनिर्देश: ।—

मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् ।
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् ॥३२॥

योगानां नामकरणविधि: ।—

यदौषधन्तु प्रथमं यस्य योगस्य कथ्यते ।
तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चय: ॥३३॥

अथ कालिङ्गपरिभाषा ।—

औषधानां मात्रास्थिरीकरणविधि: ।—

स्थितिर्नास्त्येव मात्राया: कालमग्निं वयो बलम् ।
प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् ॥३४॥

---

प्रस्थादिमानानित्यादिशब्दात् षोडशपलमारभ्य यावत् पलशतं पूर्य्यते तावदित्यर्थ:। मानं तथा तुलाया: तुलाया उपरि मानं क्वचित कुत्रापि द्विगुणं न, तत्कार्य्यं द्रवार्द्रयोरिति शेष:। उपरि मानमिति द्रोणादिकम। तथा च—"द्वैगुण्यं न तुलामानादिति मानविदो विदु:। यतो द्रवार्द्रगुरुत्वादे: प्रासाङ्गत्वात लौकत: ॥" एतदभिप्राय स्नेहपाकविषये प्रायशो मन्यन्ते केचित ॥ ३१ ॥

इदानीं द्रवमानार्थं कुडवपात्रनिर्माणमाह, मृदिति।—मृदादिवस्तुभिर्निर्मित यत भाण्डं भवति तत्परिमितं द्रवद्रव्यं कुडवसंज्ञितं वदेत। कथम्भूतम ? आयाम परिणाहाभ्यां चतुरङ्गुलप्रमाण, तथा उच्चेनापि (?) चतुरङ्गुलम। वेणु: वंश, लोहमष्टविधं, तच्च सुवर्ण-रजत ताम्रार-घोष-त्रपु सीसक लोहसंज्ञम ; आदि-ग्रहणाच्चर्म-शृङ्ग दन्तोपलादय:। अङ्गुलशब्देनात्राङ्गुष्ठनखतलभागं गृह्णन्ति। केचित मध्यमाङ्गुलिकायास्तु मध्यमपर्वमिताङ्गुलमिति। यद्वा—चतुर्भिरङ्गुलिभि: परिमित चतुरङ्गुलम् इति प्रसिद्धम्। एतत् परिमाणं द्रवद्रव्यार्थं बोद्धव्यम ॥ ३२ ॥

अथ प्रयोगाणामादिद्रव्याङ्कितसंज्ञा निर्देष्टुमाह, यदिति।—यस्य योगस्य गण स्वरूपस्य प्रथममादिपाठतं यदौषध भवति तन्नाम्नैव स याग. कथ्यते इत्यत्र विनिश्चयो ज्ञातव्य:। यथा—क्षुद्रादि, गुडूच्यादीति तात्पर्य्यार्थ:। मगधदेशे प्रायश. प्रचरतीत्यतो मागधपरिभाषा कथ्यत ॥ ३३ ॥

इदानीं कालिङ्गपरिभाषां दर्शयितुमाह—अथेति। तत्रादौ मात्राव्यवच्छेदार्थं श्लोकमेकं पठन्ति केचित्, तमाह, स्थितिरिति।—मात्राया: परिमाणस्य स्थिति. व्यवस्था नास्ति, यत: कालादिकमवेत्त्य परिमाणं युञ्ज्यादित्यभिप्राय:। काल:

कालिङ्गमानोक्तौ हेतुः।—

यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः कलौ।
अतस्तु मात्रा तद्योग्या प्रोच्यते सुश्रसम्मता ॥२५॥

अथ कालिङ्गमानम्।—

यवो द्वादशभिर्गौर-सर्षपैः प्रोच्यते बुधैः।
यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ॥२६॥
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित्।
स्याच्चतुर्माषकैः शाणः स निष्कष्टङ्क एव च ॥२७॥
गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः।
चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः॥
चतुःपलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः ॥२८॥

शीतोष्णवर्षालक्षणः, भेषजग्रहणकालो वा। अग्निरपि चतुर्विधो मन्दतीक्ष्णविषम-समभेदेन। वयोऽपि त्रिविधमादिमध्यान्तम्। बलमपि हीनोत्तममध्यमम्। प्रकृतिरपि त्रिधा हीनमध्योत्तमा, अथवा देशजातिशरीरादिभिः प्रकृतेर्बहवो भेदाः। दोषोऽपि त्रिविधो वातादिभेदेन। देशोऽपि द्विविधो भूमिदेहप्रभेदेन। भूमिदेशस्तु त्रिधा जाङ्गलानूपसाधारणभेदेन, देहदेशोऽपि त्रिधैव पूर्वोक्तः ॥ २४ ॥

अथ भक्षणार्थं प्रागुक्ता कालिङ्गपरिभाषाऽस्ति अतस्तामपि दर्शयन्नाह, यत इति।—यतः कारणात् कलौ कलियुगे ईदृशा नराः सन्ति, अतः स्थितिहेतोः तद्योग्यैषा नराणां विहिता मात्रा भक्षणद्रव्यपरिमाणं प्रोच्यते कथ्यते इत्यर्थः। कथम्भूता? सुश्रसम्मता इति मानवेदिभिः पुरुषैर्विचार्यमाणा इत्यर्थः। कीदृशास्ते नराः? मन्दाग्नय इति स्वल्पाहारिणः। ह्रस्वा इत्यल्पकायाः। हीनसत्त्वा इति स्वल्पबलाः ॥२५॥

इदानीं तत्तुलनमाह, यव इत्यादि।—द्वादशभिर्द्वादशसङ्ख्याकैर्गौरसर्षपैरेको यवः, गौरग्रहणं तदन्यजातिव्यवच्छेदार्थम्। ईदृशेन यवद्वयेन एका गुञ्जा स्याद्भवेत्। त्रिगुञ्जा गुञ्जात्रयः एको वल्लसंज्ञः, वल्लः प्रसिद्धः परिमाणः। अष्टाभिरष्टसङ्ख्याभिः गुञ्जाभिः कृत्वा एको माषः कथितः, माषोऽत्र टङ्कस्य चतुर्थांशः। क्वचिदिति कुत्रापि सप्तभिर्गुञ्जाभिः कृत्वा माषको ज्ञेय इति तन्त्रान्तरीयमतं, तच्च विषकल्पे प्रचरित-मिति वदन्ति केचित् सर्वत्राप्रसिद्धत्वात्। गुञ्जाऽप्यत्रैवोक्ता ज्ञेया। चतुर्माषकैः

कालिङ्गान्मागधमानस्य श्रेष्ठतानिर्देशः ।—

कालिङ्गं मागधञ्चेति द्विविधं मानमुच्यते ।
कालिङ्गान्मागधं श्रेष्ठं मानं मानविदो विदुः ॥३९॥

युक्तायुक्तविचारः ।—

नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु ।
विना विडङ्गकृष्णाभ्यां गुड़धान्याऽऽज्यमाक्षिकैः ॥४०॥

---

कृत्वा एकः माषः, स एव निष्कः टङ्कश्च पर्य्यायनाम्ना कथितः। षड्भिः सङ्ख्याकैः माषकैः कृत्वा एको गद्याणः, स च सार्द्धटङ्कैकेन परिमितो भवति। गद्याण इति परिमाणसंज्ञाशब्दः। दशमाषकैरेव एकः कर्षः स्यात्, कर्षोऽक्षः कथितः, स च सार्द्धद्विशाणमितः। चतुःकर्षैः कृत्वा पलमेकं प्रोक्तं कथितम्; पलं प्रसिद्ध कर्षेणैव उक्तं, मानतस्तत् पलं दशशाणमितं बोद्धव्यम्। इंद्दशेस्तुभिः पलैः कृत्वा कुडवमेकं, तच्चत्वारिंशच्छाणपरितुलितं भवति। प्रस्थाद्याः पूर्ववत् मताः इति प्रस्थाद्यव-शिष्टं मागधपरिभाषावत् ज्ञेयमनुक्रमणेत्यर्थः, न तु तत्तुल्यमानम्; एतेन कुडवाद्यवशेष-मानमप्यनेन प्रतिपादितपलेन परिमितं बोद्धव्यम्; न तु मागधपरिभाषोक्तपलेनेति तात्पर्य्यार्थः॥ ३६—३८॥

यद्यपि देशान्तरे बहूनि मानानि सन्ति तथाऽपि द्वे परिमाणे प्रसिद्धे इति विचार्य्याह, कालिङ्गमिति।—"कलिङ्गम्" इति केचित् पठन्ति। कलिङ्गदेशे प्रचुरं प्रसिद्धं यत् तत् कालिङ्गम्। मगधदेशे प्रायशः प्रचरतीति मागधमानम्। इति द्रव्याणां परिमाणमिति द्विविधं द्विप्रकारमुच्यते मानवेदिभिः कथ्यते इत्यर्थः। इति कालिङ्गपरिभाषा॥ ३९॥

इदानीं द्रव्याणां युक्तायुक्तविचारमाह, नवानीति।—अखिलकर्मस्विति दशधा द्रव्यकल्पनाविशेषु नूतनद्रव्याणि योज्यानीति भावः, यत "सर्वत्र चीरवद्वीर्य्य-युक्तं भवति भेषजम्। तेषामलाभे गृह्णीयादनतिक्रान्तवत्सरम्॥" इति। विडङ्गादिद्रव्यं विना, तेन विडङ्गप्रभृतिकं पुरातनं गुणकरमिति तात्पर्य्यार्थः। पुरातनत्वं संवत्सरा-दुपरि भवति। तत्र धान्यं धान्यकम्, आज्यं घृतं, तदप्यपक्वं ज्ञेयं, पक्वन्तु हीनवीर्य्यं स्यात्। तथा हि—"घृतमब्दात् परं पक्वं हीनवीर्य्यं प्रजायते। तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम्॥" इति। पुराणं कृष्णादिगुण-संयुक्तत्वात्॥ ४०॥

Uttarpara Jaikrishna Public Library
Acca. No. 2706-2 Date 8.12.68

शुष्कद्रव्यग्रहणस्य द्विगुणपरिभाषायाश्चापवादः।—

गुडूची कुटजो वासा कुष्माण्डश्च शतावरी।
अश्वगन्धा सहचरः शतपुष्पा प्रसारिणी॥
प्रयोक्तव्याः सदैवार्द्राः द्विगुणान् नैव कारयेत्॥४१॥
(शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्मसु।
आर्द्रञ्च द्विगुणं युञ्ज्यादेष सर्वत्र निश्चयः॥)

अनुक्तविषयिणी परिभाषा।—

कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत्।
भागेऽनुक्ते तु साम्यं स्यात् पात्रेऽनुक्ते च मृन्मयम्॥४२॥
(द्रवेऽनुक्ते जलं ग्राह्यं तैलेऽनुक्ते तिलोद्भवम्॥)

इदानीं ये सर्वकालेष्वार्द्रा अद्विगुणा द्रव्यविशेषा योज्यास्तानाह, गुडूचीति।—गुडूचीपूर्वकप्रसारिणीपर्यन्ता ओषध्यः सदैव सर्वस्मिन् काले ऋतौ वा तात्कालीनोद्धृता प्रयोक्तव्याः, एते च द्रव्यविशेषा द्विगुणा न कार्य्या वीर्य्योत्कृष्टत्वात्। गुडूची प्रसिद्धा। कुटजो वृक्षविशेषः स च कौरैयाशब्दवाच्यः। वासा आटरूषकः। सहचरः कुरण्टकः, पियावासा इति ख्यातः। प्रसारिणी स्वनामख्याता। एतस्याग्रे "शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्मसु। आर्द्रञ्च द्विगुणं युञ्ज्यादेष सर्वत्र निश्चयः॥" इति श्लोकं पठन्ति केचित्, स चोक्तमेवार्थं द्रढ़यति, अतो न दोषः पौनरुक्त्या। द्विगुणमत्र एकद्रव्यभागापेक्षया, तत् पूर्वमुक्तं, न तु सकलसमानात्। सर्वत्रेति कल्पनासु॥४१॥

इदानीमनुक्तप्रयोगे तल्लक्षणकालादिकमाह, काले इत्यादि।—काले सेवनभक्षणसमयेऽनुक्ते अप्रकाशिते सति प्रभातं प्रातःकालमेव स्यात्। तथा अङ्गे द्रव्यावयवेऽनुक्ते सति जटा मूलं स्यादित्यर्थः। भागे द्रव्याणां परिमाणेऽनुक्ते सति साम्यं स्यात् सर्वेषां समता भवतीत्यर्थः। पात्रे इति द्रव्यस्य करणार्थं स्थापनार्थञ्च भाजनेऽनुक्ते सति तदा मृन्मयं मृत्पात्रं ग्राह्यम्। चकारात् द्रवानुक्तविषये पानीयं, तथा चोक्तं—"द्रवेऽप्यनुक्ते जलमेव देयं भागेऽप्यनुक्ते समता विधेया। अङ्गेऽप्यनुक्ते विहितन्तु मूलं कालेऽप्यनुक्ते दिवसस्य पूर्वम्॥" इति॥४२॥

द्विरुक्तद्रव्ये कर्त्तव्योपदेशः।—

एकमप्यौषधं योगे यस्मिन् यत् पुनरुच्यते।
मानतो द्विगुणं प्रोक्तं तद्द्रव्यं तत्त्वदर्शिभिः ॥४३॥

द्विविधचन्दनयोः प्रयोगव्यवस्था।—

चूर्णस्नेहासवा लेहाः प्रायशश्चन्दनान्विताः।
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् ॥४४॥

औषधानां गुणस्थितौ गुणहानौ च कालनिर्देशः।—

गुणहीनं भवेद्वर्षादूर्द्ध्वं तद्रूपमौषधम्।
मासद्वयात्तथा चूर्णं हीनवीर्य्यत्वमाप्नुयात् ॥४५॥

अथ योगेषु पुनरुक्तद्रव्यस्य मानमाह, एकमिति।—यत्र योगे एकं वाऽपि द्रव्यं द्विपर्य्यायनाम्ना कथितं तदेवौषधं मानतः परिमाणात् द्विगुणं कार्य्यं, द्विगुणिता च एकद्रव्यभागापेक्षया इति तत्त्वदर्शिभिरायुर्वेदरहस्यज्ञापकैः प्रोक्तमित्यर्थः। तथा हि—"घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते। तत् ज्ञातव्यमिहार्य्येण मानतो द्विगुणं भवेत् ॥" इति ॥ ४३ ॥

इदानीं सामान्यचन्दनग्रहणं योगविशेषेषु विभजन्नाह, चूर्णेति।—चूर्णादयः कल्पनाः चन्दनग्रहणेन श्वेतचन्दनान्विता ज्ञेयाः; आसवग्रहणेन सर्वे सन्धानकाश्च, लेहग्रहणेन गुटिकाग्रहणं, यथा—लवङ्गादिचूर्णे लाक्षादितैले त्रिफलाघृते द्राक्षासवे च्यवनप्राशावलेहे द्रष्टव्यम्। कषायलेपयोस्तु चन्दनग्रहणेन रक्तचन्दनं योज्यमित्यर्थः। कषायः स्वरसादिपञ्चकः, तेन स्वरसक्वाथफाण्टहिमकल्कादयः। लेपो दशाङ्गप्रभृतयः। प्राय इति ग्रहणात् कुत्रापि व्याध्यनुरूपं बोद्धव्यम्। न चात्र नियमार्थं, प्रायःशब्दो यतो न्यूनमाचष्टे क्वचित्। तथा हि—"प्रायःशब्दो विशेषार्थ क्वचिन्न्यूनेऽपि दृश्यते" इति। कर्पूरैलादिचूर्णं रक्तचन्दनान्वितमिति प्रसिद्धं, व्याधिविहितत्वात्। तथा चोक्तं—"रक्तं शीतं गुरु स्वादु छर्दितृष्णाऽस्रपित्तजित्। तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम् ॥" इति ॥ ४४ ॥

इदानीं प्रसिद्धद्रव्याणां कालातिक्रमेण हीनगुणत्वमाह, गुणहीनमिति।—वर्षादूर्द्ध्वं संवत्सरादुपरि तद्रूपमौषधं गुणहीनं भवेत् स्वकार्य्यकरं न भवतीत्यर्थः। तद्रूपमिति यादृशं द्रव्यस्वरूपं तादृशमेव तद्रूपं कथितं न तु चूर्णादि कल्पितम्। तथा च—"धातुरूपद्रव्यवर्जं न श्रेष्ठं वत्सरोषितम्" इति। तथा चूर्णं तालीशाद्यादिकं, मास-

हीनत्वं गुटिकालेहौ लभेते वत्सरात् परम्।
हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकात्तथा ॥४६॥
ओषध्यो लघुपाकाः स्युर्निर्वीर्य्या वत्सरात् परम्।
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः ॥४७॥

द्वयादुपरि हीनवीर्य्यस्य भावः हीनवीर्य्यत्वमाप्नुयात्, वीर्य्यहानिरप्यत्र भावमात्रं, न तु सर्वथा वीर्य्यरहितत्वम्; यतस्तन्त्रान्तरे दृश्यते हि लवणभास्करादीनां बहुपरिमाणं चिरकालसेवनार्थम्। तदुक्तं—"पिप्पली पिप्पलीमूलं धान्याककृष्णजीरकम्। सैन्धवञ्च विडञ्चैव पत्रं तालीशकेशरम्॥ एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च। मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम्॥ त्वगेले चार्द्धभागे च सामुद्रात् कुडवद्वयम्। दाडिमात् कुडवञ्चैव द्वे पले चाम्लवेतसात्॥" इति। एतत् सम्भारं बहुकालोपयोगिकम्, अन्यथा व्यर्थमेतत्, तस्मात् भावमात्रं चूर्णस्य मासद्वयादुपरि हीनं स्यादित्यभिप्रायः। गुटिका विजयादिगुटिका, लेहा खण्डखाद्यावलेहप्रभृतयश्चिरकालस्थिता अपि स्वगुणं न परित्यजन्ति, किन्तु किञ्चिद्गुणरहिता इति भावः। तथा तैलघृताद्याश्चतुर्मासाधिकादपि वत्सरात् परं स्वगुणं न परित्यजन्ति, किन्तु किञ्चिद्गुणरहिता इति भावः, चतुर्मासाधिकात् वत्सरात् परं षोडशमासादुपरि इत्यर्थः। एके "चतुर्मासाधिकास्तथा" इति पठन्ति; तत्र—चतुर्मासग्रहणेन वर्षाकालं मन्यन्ते, "वर्षायामुषितः स्नेहः पक्वो हीनत्वमाप्नुयात्" इति वचनात्। तथेति ग्रहणात् अत्रापि भावमात्रं, किन्तु द्रव्यसमूहपाकजस्य गुणस्य हानिर्न तु प्रकृतिगुणहानिः। तथा च "लेहः सिद्धो गुडादीनां गुणहानौ भवेद्ध्रुवम्। स्नेहाद्याः पूर्णवीर्य्याः स्युस्ते चतुर्मासतस्तथा" इति। केचित्तु "हीनत्वं स्यात् घृते पक्वे तैले वा वत्सरात् परम्" इति केषाञ्चिन्मतमवलोक्य पठन्ति; तन्न सर्वसम्मतं, यतः सर्वसम्मतं वाक्यमिदं दृश्यते, "घृतमब्दात् परं किञ्चिद्धीनवीर्य्यत्वमाप्नुयात्। तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम्॥" इति। लघुपाका ओषध्यो वर्षादुपरि निर्वीर्य्याः निःशेषेण वीर्य्यरहिता इत्यर्थः, स्युः, न तु हीनत्वम्; ताश्च यवगोधूमप्रमुखाः; तथा च—"एतेषु यवगोधूमतिलमाषा नवा हिताः। रूढाः पुराणा विरसा न तथा गुणकारिणः॥" इति। अथ चिरकालस्थिता ये उत्कृष्टगुणाः स्युस्तानाह, पुराणा इत्यादि।—पुराणाश्चिरकालस्थिताः, बहुसंवत्सरोषिता अपीत्यर्थः, गुणैर्युक्ता इति।—ते आसवादयो विशिष्टगुणान्विताः, भवन्तीत्यध्याहार्य्यम्। आसवा मद्यभेदाः, आसवा इति बहुवचनेन सर्वे सन्धानकाश्च ज्ञेयाः। धातव इति स्वर्णादयः, बहुवचनाच्च संसिद्धमृगाङ्कादयोऽपि बोद्धव्याः ॥४५—४७॥

युक्तायुक्तद्रव्ययोः ग्राह्यवर्ज्यत्वनिर्देशः।—

व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत् त्यजेत्।
अनुक्तमपि यद्युक्तं योजयेत्तत्र तद्बुधः ॥४८॥

औषध्याहरणोपयोगिदेशनिर्देशः।—

आग्नेया विन्ध्यशैलाद्याः सौम्यो हिमगिरिर्मतः।
अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः ॥
अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च ॥४९॥

औषध्याहरणविधिः।—

गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे।
आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि ॥
साधारणधराद्द्रव्यं गृह्णीयादुत्तराश्रितम् ॥५०॥

इदानीं रोगाणामुक्तानुक्तद्रव्यविशेषमाह, व्याधेरिति।—यस्य व्याधेरयुक्तमसात्म्यं यत् द्रव्यं गणेषूक्तमपि तत् त्याज्यम्; यथा—अतीसारे पथ्या। यत् गणेऽनुक्तमपि व्याधेः सात्म्यं तत्र तत् योज्यमिति व्यवहारः। यथा—अतीसारे स्तम्भनार्थं वत्सकपाठादि। तथा चोक्तं—"गणोक्तमपि यत् द्रव्यं भवेत् व्याधावयौगिकम्। तदुद्धरेत् यौगिकन्तु प्रक्षिपेदप्यकीर्त्तितम् ॥" ( सु० चि० १स० ) इति ॥ ४८ ॥

इदानीं द्रव्याहरणार्थं देशादिकथनमाह, आग्नेया इति।—यतो विन्ध्यशैलाद्या आग्नेयाः अग्निगुणभूयिष्ठाः; आदिग्रहणान्मलयसह्यपारियात्रा( पर्वता )दयः। हिमगिरिस्तु सौम्यो मतः सौम्यगुणभूयिष्ठ इत्यर्थः, अतो हेतोस्तदुद्भवानि द्रव्याणि तद्रूपाणि स्युरुष्णशीतवीर्य्याणि भवन्तीत्यर्थः। न केवलं शैलजातानि, अन्येष्वपि वनेषूपवनेषु च यानि प्ररोहन्ति तान्यपि हेतुभिः कृत्वा शीतोष्णवीर्य्याणि भवन्तीति तात्पर्य्यार्थः। हेतुरपि ऋतुस्वरूपमिति, एतेन यादृशम् ऋतुरूपं शीतोष्णादिकं भवति तादृशमेव तज्जातद्रव्यस्य वीर्य्यमित्यर्थः। आगमेऽपि "अग्नीषोमीयत्वाज्जगतः" इति। वनमुद्यानम्। उपवनं पुरुषव्यापारकृतं पूर्वमुक्तम् ॥ ४९ ॥

इदानीं द्रव्याणामाहरणक्रममाह, गृह्णीयादिति।—सुमनाः शोभनचित्तः, पुरुष इति शेषः, तानि पूर्वोक्तानि द्रव्याणि प्रातरुणोदये गृह्णीयादुत्पाट्य धारयेदिति भावः। कथम्भूतः? शुचिरिति बाह्याभ्यन्तरेण। आदित्यमुख इति पूर्वाभिमुखः। मौनीत्यजल्पकः। सुवासरे इति विशिष्टनक्षत्रादिसंयुक्ते दिने। किं कृत्वा? चित्ते

ओषध्याहरणे अनुपयोगिदेश:।—

वल्मीककुत्सितानूप-श्मशानोषरमार्गजा:।
जन्तुवह्निहिमव्याप्ता नौषध्य: कार्य्यसाधिका:॥५१॥

प्रयोगविशेषे ओषध्याहरणकाल:।—

शरद्यखिलकार्य्यार्थं ग्राह्यं सरसमौषधम्।
विरेकवमनार्थञ्च वसन्तान्ते समाहरेत्॥५२॥

ईश्वरं नमस्कृत्य। * साधारणधराद्द्रव्यमिति साधारणधरा जाङ्गलानूपमिश्रिता पृथ्वी तत्रोत्पन्नद्रव्यम। उत्तराश्रितमिति उत्तरदिग्विभागस्थितं, मूलं द्रव्यमिति शेष:। एतेन द्रव्याणां सवीर्य्यत्वं दर्शितम। केचित "उत्तराश्रित:" इति पुरुषविशेषणं पठन्ति; स च उत्तराभिमुखो भूत्वा च गृह्णीयादिति। गृह्णीयादिति द्विरुक्ति: निश्चयार्थज्ञापनार्थं, नान्यथा गृह्णीयादित्यस्य तात्पर्य्यार्थ:। एके तु गृह्णीयादिति पदं पूर्वश्लोकेन योजनीयमिति वदन्ति॥ ५०॥

इदानीं कुत्सितस्थानजातद्रव्यस्य परित्यागमाह,वल्मीकेति।—वल्मीकादिषु स्थानेषु जाता उत्पन्ना ओषध्यो न कार्य्यकरा:। तथा जन्तुवह्निहिमव्याप्ताश्च, अत्र व्याप्तशब्दो जन्त्वादिभि: प्रत्येकमभिसम्बध्यते। कुत्सितं बीभत्सस्थानम। आनूपं जलप्रायस्थानं, जलव्याप्तमित्यर्थ:। जन्तुव्याप्ता इति क्रिमिजग्धा:, वह्निव्याप्ता दावाग्निदग्धा:, हिमव्याप्तास्तुषाराभिव्याप्ता। ओषध्य इति बहुवचनेन अत्र पुष्पफलमूलत्वक्सारनिर्य्यासादयो बोद्धव्या:॥ ५१॥

इदानीमृतुविशेषेण विरेकवमनार्थमपि द्रव्याहरणकालमाह, शरदीति।—शरदि शरत्काले अखिलकार्य्यार्थं सकलप्रयोगनिमित्तं ग्राह्यम। वसन्तान्ते ग्रीष्मकाले समाहरेत् गृह्णीयादित्यर्थ:। यद्यपि अखिलकार्य्यग्रहणेनैव विरेकवमनमपि प्राप्तमेव, तथापि वाक्यानां द्वैविध्येन सामान्यविशिष्टत्वं दर्शितमिति न दोषोऽखिल-

* "ग्रन्थान्तरात् भूमेर्लक्षणमाह—'गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते'। (सु० सू० ३७अ०) तत्र समां गौरीं कृष्णां लोहितां दृषद्वतीं बहुजलां कठिनाञ्च भूमिमौषधग्रहणाय परीक्षेत। तत्र साधारणा भूमि: श्रेष्ठा। सुश्रुत: साधारणां भूमिमाह—'सर्वलक्षणसम्पन्ना भूमि: साधारणा स्मृता। द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषत:॥' (सु० सू० ३७अ०) इति" इति गूढार्थदी०।

द्रव्यविशेषे ग्राह्याङ्गनिर्देशः।—

अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो ध्रुवम्।
गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् ॥५३॥
न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्याद्बीजकादितः।
तालीशादेश्च पत्राणि फलं स्यात्त्रिफलादितः॥
धातक्यादेश्च पुष्पाणि स्नुह्यादेः क्षीरमाहरेत् ॥५४॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां
पूर्वखण्डे परिभाषा नाम प्रथमोऽध्यायः ॥ १ ॥

ग्रहणेन। तथा च—"ग्रीष्मे मञ्जरिकाग्रेषु वर्षासु दलचर्मणि। वसन्ते मूलमाश्रित्य द्रव्याणाञ्च रसस्य च ॥" ॥ ५२ ॥

अथानुक्तावयवानां द्रव्याणामङ्गग्रहणमाह, अतिस्थूलेति।—या ओषध्यः अतिस्थूलजटाः पृथुतरमूलाः, तासामोषधीनां त्वचो वल्कला ग्राह्याः, ताश्च वटनिम्बाम्रप्रभृतयः। ध्रुवमिति निश्चयेन। यानि सूक्ष्ममूलानि द्रव्याणि तानि सकलान्यपि गृह्णीयात्, बुद्धिमानिति शेषः। सूक्ष्ममूलानि गोक्षुरकण्टकारिप्रभृतीनि। सकलानीति मूलपत्रपुष्पशाखान्वितानि इत्यर्थः। "अतिस्थूलजटायाः स्युः" इति केचित् पठन्ति; तत्र अतिस्थूलजटाना त्वचो ग्राह्या इति दशमूलपक्षे प्रचारः। अथ द्रव्याणां प्रसिद्धाङ्गाहरणत्वेन विशेषमाह, न्यग्रोधादेरिति।—न्यग्रोधादेरित्यनेन विशेषो दर्शितः; न्यग्रोधो वटस्तत्प्रभृतेर्द्रव्यस्यानुक्तत्वात् त्वचो वल्कला ग्राह्याः, आदिशब्दात् प्लक्षजम्बूकपीतनकाश्वत्थप्रभृतयः। बीजकादित इति बीजको विजयसारो वृक्षविशेषस्तदादितस्तत्प्रभृतेः सारो मध्यस्थितः काष्ठविशेषो ग्राह्यः, आदिशब्दात् खदिरासनजम्बूकवञ्जुलादीनां ग्रहणम्। तालीशादेरिति तालीशः स्वनामख्यात. तदादेस्तत्पूर्वकात् पत्राणि पलाशानि ग्राह्याणि; आदिग्रहणात् पत्रककौमारीनागवल्लीपत्रशाकादयः। त्रिफलादित इति त्रिफला प्रसिद्धा, तदादितस्तत्प्रभृतेः फलं ग्राह्यम्; आदिग्रहणात् प्रियङ्गुकक्कोलमदनफलादयः। तालीशादेश्चेति चकारादनुक्तान्यपि पुष्पनिर्य्यासगुडादीन्यनुमानतो बोद्धव्यानि ॥ ५३।५४ ॥

इति श्रीवाचस्पत्यान्वयप्रकाशवैद्यश्रीभावसिंहात्मजेनाढमल्लेन
विरचितायां शार्ङ्गधरदीपिकायां प्रथमखण्डे
परिभाषानाम प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः ।

---

## अथ भैषज्याख्यानकाध्यायः ।

औषधभक्षणे पञ्चविधकालनिर्देशः ।—

भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः ।
कषायांश्च विशेषेण तत्र भेदस्तु दर्शितः ॥ १ ॥
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् ।
किञ्चित् सूर्य्योदये जाते तथा दिवसभोजने ॥
सायन्तने भोजने च मुहुश्चापि तथा निशि ॥२॥

पूर्वमुक्तं "भैषज्याख्यानकं तथा" इति, इदानीं तद्दर्शयन्नाह, अथेति ।—भैषज्यस्य आख्यानकं भक्षणकालादिकथनम् । तदधिकृत्याह, भैषज्यमिति ।—बुधो भैषज्यं प्रायशो बाहुल्येन प्रभाते अभ्यवहरेत् भक्षयेदित्यर्थः । भिषजा संस्कृतं द्रव्यं भैषज्यम् । बुध इत्यनेन औषधकालान् वीक्ष्य स्वबुद्ध्या शीलयेदित्यर्थः । नात्र प्रभातमेव सर्व्वेषां नियतकालम् ; अत एव वक्ष्यन्ते अत्रैव विशेषाः, यथा—कषायांश्च विशेषेणेति । विशेषग्रहणेन कषायान् प्रातरेवाभ्यवहरेत् नान्यत्र । कषायानिति बहुवचनेन स्वरसादयः पञ्च कषायसंज्ञका ज्ञातव्याः, तद्यथा—"स्वरसः कल्कनिर्य्यूहौ हिमफाण्टौ च विश्रुताः" इति । तत्र औषधभक्षणे भेदः कालभेदः दर्शितः कथित इत्यर्थः, वक्ष्यमाण इति शेषः । इदानीं तद्भेदमाह, ज्ञेय इति ।—भैषज्यग्रहणे औषधभक्षणनिमित्ते नृणां पञ्चविधः पञ्चप्रकारः कालः समयो ज्ञेयः । एतच्चाति-पातिव्याधिषु न कालनियम इत्येके भाषन्ते, यतः "अतिपातिषु रोगेषु नेक्षेद्विधिमिमं भिषक् । प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम् ॥" ( सु० सू० ५अ० ) इति । सत्यं, तथाऽपि कर्त्तव्यमेतत् । अथ पञ्चप्रकारान् तानाह, किञ्चिदिति ।—तत्र किञ्चित् सूर्य्योदये जाते सति एकः कालः, स तु प्रायशः कषायार्थमादौ प्रतिपादितः, "कषायांश्च विशेषेण" इति वचनात् । द्वितीयस्तु दिवसभोजने भेषजकालः, स पञ्चविधो भवति । भोजनाग्रे यथा—लवणार्द्रकं, भोजनमिश्रं यथा—हिङ्गु-घृतादिकं, भोजनमध्ये यथा—पानीयभक्तिकं, भोजनान्ते यथा—लवङ्गहरीतक्यादि, भोजनपूर्व्वान्ते चेति यथा—धात्रीलोहमक्तपित्ते । तृतीयकालस्तु सन्ध्यासमयभोजने

तत्र प्रथमकालः।—

प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः।
लेखनार्थञ्च भैषज्यं प्रभाते तत् समाहरेत्॥
एवं स्यात् प्रथमः कालो भैषज्यग्रहणे नृणाम्॥३॥

तत्र द्वितीयकालः।—

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत्॥ ४॥
समानवाते विगुणे मन्देऽग्नावग्निदीपनम्।
दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक्॥ ५॥

ज्ञेयः, सोऽपि द्विविधः, ग्रासे ग्रासान्तरे भुक्तान्ते चेति ; स चानुमानतो (?) बोद्धव्यः। चतुर्थकालस्तु वारंवारं कथितः, स द्विविधः, तत्र द्रव्यं सान्नं निरन्नञ्चेति। पञ्चमः कालस्तु निशि रात्रौ बोद्धव्यः॥ १।२॥

अथ तेषां प्रत्येकं विशेषविवरणमाह, प्राय इति।—पित्तकफोद्रेके सति विरेकवमनार्थयोः द्रव्यं प्रभाते भक्षयेदित्यभिप्रायः। यथा—पित्तोद्रेके विरेकः कफोद्रेके वमनम् इति। उद्रेकः दोषोत्कटः। * अन्यथा अस्मिन् कालेऽपि वमनविरेकयोर्न निषेधः। तथा हि "सद्योभुक्तस्य वा जाते † ज्वरे सामे विशेषतः। वमनं वमनार्हस्य शस्तमित्याह वाग्भटः॥" इत्यादिवचनात्। वमनातियोगेन विरेकं मृदु कारयेत् इत्यपि। न केवलं वमनविरेकनिमित्तं, लेखनार्थञ्च प्रातरेव ; ‡ लेखनं पतलीकरणं पुरुषाणां दोषाणाञ्च। पुरुषाणां यथा—स्थूलस्य मध्वम्बुनी, दोषाणां यथा—वायोस्तैलं, पित्तस्य घृतं, कफस्य मधु इति। एवमिति परिसमाप्तः प्रथमः कालः॥ ३॥

अथ द्वितीयकालमाह, भैषज्यमिति।—अपाने गुदस्थिते वाते विगुणे क्रुद्धे भोजनाग्रे भुक्तादौ, भक्षयेत् भैषज्यमिति शेषः। अरुचौ सत्यां चित्रभोज्यैर्भोज्यव्यञ्जनादिकैः सह मिश्रं मिलितं रुचिरं रुचिकरं यथा स्यात्तथा, भक्षयेत् भैषज्यमिति

* "अन्यथा अस्मिन्" इत्यत्र "अन्यस्मिन्" इति पाठो युक्तत्वेन प्रतिभाति।

† "ज्वरे सामे विशेषतः" इत्यत्र "ज्वरे सन्तर्पणोत्थिते" इति चक्रपाणिः।

‡ "लेखनार्थे कृशीकरणार्थे मेदोरोगादौ दन्तधावनार्थे च" इति गूढार्थदी०।

व्यानकोपे च भैषज्यं भोजनान्ते समाहरेत्।
हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात्॥
एवं द्वितीयकालश्च प्रोक्तो भैषज्यकर्मणि॥६॥

तत्र तृतीयकालः।—

उदाने कुपिते वाते स्वरभङ्गादिकारिणि।
ग्रासे ग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने॥ ७॥
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते च दीयते।
औषधं प्रायशो धीरैः कालोऽयं स्यात्तृतीयकः॥८॥

तत्र चतुर्थकालः।—

मुहुर्मुहुश्च तृट्छर्दि-हिक्काश्वासगरेषु च।
सान्नञ्च भेषजं दद्यादिति कालश्चतुर्थकः॥९॥

पूर्ववन्मन्तव्यम्। समानवाते नाभिस्थिते वायौ विगुणे प्रकुपिते सत्यग्निमान्द्येऽपि च अग्निदीपनमग्निकरं द्रव्यं भोजनमध्ये दद्यादित्यर्थः। तथा हिक्काक्षेपककम्पेषु सत्सु भोजनस्य पूर्वमन्ते च दद्यात्। आक्षेपको वातरोगे पठितः, कम्पोऽपि वातरोगे॥ ४—६ ॥

अथ तृतीयकालमाह, उदाने इति।—उदाने कण्ठस्थिते वाते कुपिते, कथम्भूते? स्वरभङ्गादिकारिणि, स्वरभङ्गो विकृतस्वरत्वं मूकत्वं वा, आदिग्रहणात् कण्ठगतरोगाणां ग्रहणम्। सान्ध्यभोजने सन्ध्यासमयभोजनेऽग्र ग्रासे कवले ग्रासान्तरे कवलयोर्मध्ये भैषज्यं देयमित्यभिप्रायः। तथा प्राणे हृदयस्थिते प्राणवाते प्रदुष्टे सति सान्ध्यस्य भुक्तस्याहारस्य अन्ते प्रान्ते औषधं देयमित्यर्थः। धीरैरिति गम्भीरबुद्धिभिः पुरुषैः। अयं तृतीयः कालः स्याज्जानीयात्। ननु वायोः प्राणादयः पञ्च भेदा दर्शिताः, पित्तकफयोस्तु कथं नोदाहृताः? उच्यते—अनिलस्तु दोषधातुमलादीनां प्रधानतमः प्रकोपकारणञ्च, अत एवास्य प्रकोपेण पित्तकफयोः प्रकोप एव "एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इति वचनात्। अन्यदपि "स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः। अचिन्त्यवीर्य्यो दोषाणां नेता रोगसमूहराट्" ॥ ७।८ ॥

अथ चतुर्थकालमाह, मुहुर्मुहुरित्यादि।—तृडादिषु सत्सु मुहुर्मुहुर्वारंवारं सान्नमिति भक्तमिश्रितं द्रव्यं दद्यात्। चकारात् क्वचिन्निरन्नव्यवहाराच्च दोषः। तृट् तृष्णा। गरमत्र विषम्। इति चतुर्थः कालः॥ ९ ॥

तत्र पञ्चमकालः ।—

ऊर्द्ध्वजत्रुविकारेषु लेखने बृंहणे तथा ।
पाचनं शमनं देयमनन्नं भेषजं निशि ।
इति पञ्चमकालः स्यात् प्रोक्तो भैषज्यहेतवे ॥१०॥

द्रव्ये रसादिपञ्चकानां सम्बन्धनिर्देशः ।—

द्रव्ये रसो गुणो वीर्य्यं विपाकः शक्तिरेव च ।
सम्बन्धेन क्रमादेताः पञ्चावस्थाः प्रकीर्त्तिताः ॥ ११ ॥

अथ पञ्चमकालमाह, ऊर्द्ध्वेति ।—रात्रौ पाचनशमनरूपमौषधं चान्नरहितं देयमिति भावः । कुत्र ? ऊर्द्ध्वजत्रुविकारेषु तथा लेखने बृंहणे च । जत्रु ग्रीवामूलं, तदूर्द्ध्वविकाराः शिरोरोगादयः । तथा च—"ऊर्द्ध्वजत्रुगरोगघ्नी सायं स्यादवलेहिका" इत्यादिवचनात् । लेखनं प्रवृद्धरोगाणाम् । कृशानां बृंहणमिति क्षीणदोषवर्द्धनमिति भावः । निशीति सामान्येन सकलरात्रावित्येके भाषन्ते, सम्प्रदाये तु प्रथमं यामं यावदित्यर्थः । "इति पञ्चमः कालः स्यात" इत्यस्य स्थाने "इत्येव पञ्चमः कालः" पाठः साधुः । भैषज्यहेतवे द्रव्यभक्षणनिमित्ते इत्येवं पञ्चमः कालः कथितः ॥ १० ॥

इदानीं द्रव्ये रसादीनां विशेषावस्थामाह, द्रव्ये इति ।—द्रव्ये प्रधानभूते रसादयः पञ्चावस्थाः कथिताः, सम्बन्धेन क्रमादिति ज्ञानक्रमात, ताश्च रसगुणवीर्य्यविपाकप्रभावादयः । रसाः षट् मधुरादयः, ते तु मधुराम्ललवणतिक्तोषणकषायाः । गुणा विंशतिः, ते यथा—गुरु-मन्द-हिम-स्निग्ध-श्लक्ष्ण-सान्द्र-मृदु-स्थिर-सूक्ष्म विशदा इति दश । विपर्य्ययास्तु—लघु-तीक्ष्णोष्ण-रूक्ष-खर द्रव-कठिन-सर-स्थूल-पिच्छिलाः ; एवं विंशतिगुणाः कथिताः । वीर्य्यमिति द्विविधं, शीतमुष्णञ्चेति । केचिदष्टविधमाहुः,—"शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णञ्च" इति, यतः,—"वीर्य्यसंज्ञा गुणा ह्येते तेऽपि द्रव्याश्रया मताः" इति वचनात् । विपाकस्तु त्रिविधः, स्वाद्वम्लकटुकात्मक इति । केचिद्गुरुलघुत्वाभ्यां द्विविधमाहुः । तत्र मधुरः कटुकश्च, यतो मधुराख्यो गुरुः कटुकाख्यो लघुरिति । शक्तिश्चाचिन्त्यप्रभावो द्रव्याणां, यथा—मणिमन्त्रौषधीनां विधिः । एतेऽपि रसादयो द्रव्याश्रिता भवन्ति, तस्मात् द्रव्यं प्रधानमित्याहुः । यदुक्तं—"पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात् । रसो नास्ति विना द्रव्यात् द्रव्यं श्रेष्ठमतः स्मृतम् ॥" ( सु० सू० ४० अ० ) इति । द्रव्यमिति सामान्यग्रहणेन मूलत्वक्सारनिर्य्यासादीन्यभिधीयन्ते । तत् यथा—"मूलत्वक्सारनिर्य्यास-नालस्वरस-पल्लवाः । क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः ॥

षड्रसाः।—

मधुरोऽम्लः पटुश्चैव कटुतिक्तकषायकाः।
इत्येते षड्रसाः ख्याताः नानाद्रव्यसमाश्रिताः॥ १२॥

भूतविशेषसंयोगे रसविशेषोत्पत्तिः।—

धराऽम्बुक्ष्माऽनलजल-ज्वलनाकाशमारुतैः।
वाय्वग्निक्ष्माऽनिलैर्भूत-द्वयैः रसभवः क्रमात्॥१३॥

भूतविशेषाधिक्ये गुणविशेषः।—

गुरुः स्निग्धश्च तीक्ष्णश्च रूक्षो लघुरिति क्रमात्।
धराऽम्बुवह्निपवन-व्योम्नां प्रायो गुणाः मताः।
एष्वेवान्तर्भवन्त्यन्ये गुणेषु गुणसञ्चयाः॥१४॥

---

पत्राणि पुष्पाः कन्दाश्च प्ररोहास्तुण्डिदादयः॥" (च० सू० दीर्घञ्जीवि०) "द्रव्यशब्देन गृह्यन्ते जङ्गमाः पार्थिवास्तथा॥" इति। जङ्गमा अपि यथा—"मधूनि गोरसाः पित्तं वसा मज्जाऽसृगामिषम्। विण्मूत्रचर्मरेतोऽस्थिस्नायुशृङ्गनखाः खुराः॥ जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः॥" (च० सू० दीर्घञ्जीवि०) इति। पार्थिवाश्च यथा—"सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा। मनःशिलाले मणयो लवणं गैरिकाञ्जने॥" (च० सू० दीर्घञ्जीवि०) इत्यादि॥ ११॥

अथ तेषां रसादीनां स्वरूपमाह, मधुर इति।—मधुरादयः षड्रसा द्रव्याश्रिताः स्वतोऽपि विख्याता एव। तत्र मधुरो घृतगुडादिः, अम्लः अम्लीकामातुलुङ्गादिः, पटुर्लवणपर्य्यायः स च सैन्धवादिः, कटुको मरीचादिः, तिक्तो निम्बादिः, कषायो हरीतक्यादिः॥ १२॥

एतेषां मूर्त्तीनाम (१) उत्पत्तिमाह, धरेत्यादि।—उत्पत्तिस्तु भूतद्वयेन भवति। भूतं पृथिव्यादि। क्रमादिति युक्तक्रमेण; तत् यथा—धराम्बुभ्यां मधुरो रसः, तेन पृथिव्यम्बुबाहुल्येन मधुररसः उत्पद्यते। एवं क्ष्माऽनलाभ्यामम्लः, जलज्वलनाभ्यां लवणः, आकाशमरुद्भ्यां कटुकः, वाय्वग्निभ्यां तिक्तः, क्ष्माऽनिलाभ्यां कषाय इति रसः॥ १३॥

अथ गुणाः, गुरुरिति।—गुरुस्निग्धादयो गुणाः क्रमात् धरादीनां कथिताः। क्रमो यथा—धराया गुरुः, अम्बुनः स्निग्धः, वह्नेस्तीक्ष्णः, पवनस्य रूक्षः, व्योम्नो लघुरिति। प्राय इति प्रायेण एतेऽत्र मुख्या गुणा गुणानां मध्ये कथिताः।

वीर्यम्।—

वीर्यमुष्णं तथा शीतं प्रायशो द्रव्यसंश्रयम्।
यत् सर्वमग्निषोमीयं दृश्यते भुवनत्रयम्।
अत्रैवान्तर्भविष्यन्ति वीर्याण्यन्यानि यान्यपि ॥१५॥

रसविशेषे विपाकविशेषः।—

( त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः। )
मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः।
कषायकटुतिक्तानां पाकः स्यात् प्रायशः कटुः ॥१६॥

रसानां विपाकविशेषे दोषविशेषोत्पत्तिः।—

मधुराज्जायते श्लेष्मा पित्तमम्लाच्च जायते।
कटुकाज्जायते वायुः कर्माण्येतानि पाकतः ॥१७॥

पञ्चगुणाश्रयत्वं भूतक्रमेण ज्ञातम्। एष्वेव पञ्चगुणेषु अन्येऽपि श्लक्ष्णमान्द्यमृदुप्रभृतिगुण-समूहा बोद्धव्याः, ते चाप्यनुमानतो निरूपणीयाः। गुणा इति बहुवचनत्वेन व्यवायी विकाशी चापरौ द्वौ द्वाविंशत्यर्थमिति केचित्, सत्त्वं रजस्तमश्चेति त्रयो महागुणाः कथिता इति केचित् ॥ १४ ॥

अथ वीर्यम्।—वीर्यमिति शक्तिः। तद्द्विविधमपि प्रायशो बाहुल्येन द्रव्यसंश्रयं द्रव्याधीनं भवति, द्विविधं शीतोष्णभेदेन, यस्माद्भुवनत्रयमग्न्यात्मकं सोमात्मकञ्च दृश्यते। अत्रैव शीतोष्णवीर्ये अन्यानि यानि वीर्याणि तान्यन्तर्भविष्यन्ति इति केचित् वदन्ति न स्वमतं, यतः प्रायश इति ग्रहणेन शीतोष्णं विशिष्टवीर्यम्। अन्यानीति स्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णादीनि। महाभूतानि तु क्ष्माऽम्बुज्वलना-काशमारुताः ॥१५॥

अथ विपाकमाह, मिष्ट इति।—प्रायशो बाहुल्येनात्र त्रिविध एव विपाकः मधुरोऽम्लः कटुक इति। विशिष्टो पाको विपाकः। तत्र मिष्टो मधुरः, पटुर्लवण एतयोर्मधुर इति मधुरविपाक इत्यभिप्रायः। अम्लोऽम्लमिति अम्लो रसः अम्लमेव पच्यते। कटुतिक्तकषायाणां रसानां कटुरिति कटुकविपाकः स्यात्। एतदभिप्रायेण तन्त्रान्तरे चोक्तं—"त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः" ( वा० सू० १५० ) इति ॥१६॥

अत एव विपाकानां त्रिविधं कर्म भवति, तदाह, मधुरादित्यादि।—मधुरात्

प्रभावः ।—

प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः ।
समाऽपि कुरुते दोष-त्रितयस्य विनाशनम् ॥ १८ ॥
क्वचित्तु केवलं द्रव्यं कर्म कुर्य्यात् प्रभावतः ।
ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा ॥१९॥

रसादिपञ्चकानां पृथक् पृथक् कार्य्यकारिता ।—

क्वचिद्रसो गुणो वीर्य्यं विपाकः शक्तिरेव च ।
कर्म स्वं स्वं प्रकुर्वन्ति द्रव्यमाश्रित्य ये स्थिताः ॥२०॥

मधुरविपाकात् श्लेष्मा प्रजायते प्रकोपमापद्यते इत्यर्थः। अम्लाच्चेत्यम्लविपाकात् पित्तमिति। कटुकादिति कटुकविपाकात् वायुरिति। एतानि कर्माणि यत् कुर्वन्ति तत् कर्म, कर्मशब्देनात्र दोषप्रकोपव्यापारलक्षणं धर्म इति ॥ १७ ॥

इदानीं प्रभावमाह, प्रभाव इति ।—विशिष्टो भाव उत्कृष्टा शक्तिरित्यर्थः। यथा धात्री आमलकीफलं रसादिभिरति रसगुणवीर्य्यविपाकादिभिः समा समानगुणा लकुचस्यापि, तथाऽपि तदेवामलकीफलं प्रभावाद्दोषत्रयनाशनं नियतमेव। इति रसादि-प्रभावः। केवलं द्रव्यप्रभावमाह, क्वचिदित्यादि ।—कुत्रापि केवलमेकद्रव्यमेव प्रभावतः कर्म कुर्य्यात्। यथा सहदेवीजटा शिरोबद्धा सती ज्वरं हन्तीति। अत एवाचिन्त्यो मणिमन्त्रौषधीनां प्रभाव इति विश्रुतिः। एके—"प्रभावस्तु यथा धात्री * लकुचस्य रसादिभिः" इति पठन्ति, तत्र—लकुचफलस्य रसादिभिः सह धात्री समानधर्मा, तथाऽपि धात्री प्रभावादेव दोषत्रयनाशनी भवति। लकुचफलं लकुचः क्षुद्रपनसः, "नारङ्गफलम्" इत्येके ॥१८।१९॥

अथ द्रव्याश्रितानां रसादीनां निर्म्मोत्कृष्टतामाह, क्वचिदिति ।—द्रव्यमाश्रित्य स्थिता ये रसादयस्ते स्वं स्वं कर्म प्रकुर्वन्ति। क्वचिद्रस इति, यथा—तिक्ता गुडूची उष्णवीर्य्याऽपि पित्तं शमयति। क्वचिद्गुणो यथा—कटुकं मूलकं श्लेष्माणञ्च वर्द्धयति स्निग्धगुणत्वात्। क्वचिद्वीर्य्यमिति, यथा—महत् पञ्चमूलं कषायं तिक्तानुरसं वातं शमयति उष्णवीर्य्यत्वात्। ननु गुणवीर्य्ययोः को भेदः ? उच्यते—य एव गुणा धात्रीफले त एव हरीतक्यां सन्ति, वीर्य्यविशेषोऽस्ति, यतः उष्णवीर्य्या हरीतकी शीतवीर्य्यं धात्रीफल-मिति; तस्माद्भिन्नत्वं प्रतिपादितमिति न दोषः। क्वचिद्विपाक इति, यद्द्रव्य परिणामकाले

* अयमेव पाठः साधुः ।

दोषाणां चयादौ ऋतुषट्कानां हेतुता।—

चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि।
ऋतुषट्कं तदाख्यातं रवे राशिषु सङ्क्रमात् ॥२१॥

राशिविशेषे ऋतुविशेषः।—

ग्रीष्मो मेषवृषौ प्रोक्तौ प्रावृट् मिथुनकर्कयोः।
सिंहकन्ये स्मृता वर्षास्तुलावृश्चिकयोः शरत् ॥
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः ॥२२॥

स्वाभाविकं रसं परित्यज्य रसान्तरं भजते तत्र विपाक इति संज्ञा, यथा—शुण्ठी कटुकाऽपि वातं शमयति मधुरपाकित्वात्। क्वचित शक्तिरिति, यथा—शक्तितः प्रभावतः, यतो रसगुणवीर्य्यविपाकैर्यत् कर्म कर्त्तुं न शक्यते तत् कर्म कुर्वन् प्रभाव इति संज्ञा, यथा—खदिरः कुष्ठं हन्ति। अत एवाह सुश्रुतः,—"अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः। आगमेनोपयोज्यानि भेषजानि विचक्षणैः॥" (सु० सू० ४० अ०) इति इत्यादिकथनम ॥२० ॥

अथ दोषापचयप्रकोपोपशमान् दर्शयन्नाह, चयकोपशमा इति।—दोषाणा वातादीनां चयकोपशमा इति चयः सञ्चयः, स च संहतिरूपा वृद्धिः, "स्वस्थानवृद्धिः" इत्यन्ये। कोपः प्रकोपः, स च प्रविलयरूपा वृद्धिः प्रकोपः। शमं इत्युपशमः, यथा—वातपित्तकफानां शरद्धेमन्तग्रीष्मेषु यथासङ्ख्यमुपशमः स्वभावत एव। तत् ऋतुषट्कं ग्रीष्मप्रावृड्वर्षाशरद्धेमन्तवसन्ताख्यमित्यर्थः। कुत इत्याह—रवेः राशिषु सङ्क्रमादिति * रवेः सूर्य्यस्य राशिषु मेषादिषु सङ्क्रमात् प्रवेशादित्यर्थः॥ २१ ॥

इदानीमृतुषट्कं राशिद्वयेन दर्शयन्नाह, ग्रीष्म इति।—मेषसङ्क्रान्तिप्रभृति वृष-

* "जीवितमरणे च मनुष्याणामायत्तेति स सूक्ष्मामपि कलां न लीयते इति कालः, कलयति उत्पादयति मरणं नयति वा भूतानीति कालः। तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेण अक्षिनिमेषिकाकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति। तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः, पञ्चदशाक्षिनिमेषाः काष्ठा, त्रिंशत्काष्ठाः कला, विंशतिकलो मुहूर्त्तः कलादशभागश्च, त्रिंशन्मुहूर्त्तमहोरात्रं, पञ्चदशाहोरात्राणि पक्षः, स च द्विविधः, शुक्लः कृष्णश्च, तौ मासः, तत्र माघादयो द्वादश मासाः, द्विमासिकम् ऋतुं कृत्वा षड्ऋतवो भवन्ति" इति गूढार्थदीपिका।

ऋतुविशेषे दोषाणां चयकोपप्रशमाः।—

**ग्रीष्मे सञ्चीयते वायुः प्रावृट्काले प्रकुप्यति।**
**वर्षासु चीयते पित्तं शरत्काले प्रकुप्यति॥**
**हेमन्ते चीयते श्लेष्मा वसन्ते च प्रकुप्यति॥२२॥**

वृषाद्यन्त्यवसानं ग्रीष्म-ऋतुः प्रोक्तः कथित इत्यर्थः। एवं मिथुनादिककर्कान्तं प्रावृट्, सिंहादिकन्यान्तं वर्षा-ऋतुः, तुलादिवृश्चिकान्तं शरत्, धनुरादिग्राहान्तं हेमन्तः, ग्राहो मकरः, कुम्भादिमीनान्तं वसन्त इति। एतेन राशिद्वयेन द्विमासिकमपि ऋतुषट्कं भवति। तद्दोषचयादिनिमित्तमभिहितं तत्त्वज्ञानार्थम्। यदुक्तं सुश्रुतेन—"दोषोपचयप्रकोपोपशमनिमित्तं, ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः" (सु० सू० ६ अ०) वर्षादयो यथासङ्ख्याताः। ये तु तन्त्रान्तरे—"मासैर्द्विसङ्ख्यैर्माघाद्यैः" (वा० सू० ३ अ०) इत्यादिना शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता भवन्ति, ते तु शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वाच्चयनिमित्ताः, यतो "मासराशिस्वरूपाख्यमतो यद्यच्चयावयम्" इति वचनात्। ननु प्रावृड्वर्षयोः को भेदः? उच्यते—* प्रथमः प्रवृत्तः कालः प्रावृट् तदनुबन्धी वर्षा इत्यत्र भेदः। एवं "शिशिरे शीतमधिकम्" (सु० सू० ६ अ०) "रौक्ष्यमादानजं शीतम्" (वा० सू० ३ अ०) इत्यनेन शिशिरहेमन्तयोरपि भेदोऽस्ति॥२२॥

पूर्वमुक्ता चयकोपप्रशमा ऋतवो भवन्ति, तत्रामीषु चादौ सुश्रुतादिभ्योऽप्युक्तत्वात् केवलप्रकोपे ऋतूनाह—"ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः, † तेषां माघफाल्गुनौ शिशिरः, चैत्रवैशाखौ वसन्तः, ज्येष्ठाषाढौ ग्रीष्मः, श्रावणभाद्रपदौ वर्षाः, आश्विनकार्त्तिकौ शरत्, मार्गपौषौ हेमन्त इति। ते एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालप्रविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च; तयोर्दक्षिणं वर्षाशरद्धेमन्ताः, तेषु भगवानाप्यायते सोमः, अम्ललवणमधुराश्च रसाः बलवन्तो भवन्ति उत्तरोत्तरञ्च सर्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्माः, तेषु भगवानाप्याय्यते अर्कः तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्ति उत्तरोत्तरञ्च

---

* "प्रथमः प्रवृष्टेः कालः" (च० चि० रोगभिषग्०) इति पाठः।

† "तेषां तपस्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः, शुचिशुक्रौ ग्रीष्मः, नभोनभस्यौ वर्षाः, इषोर्जौ शरत्, सहःसहस्यौ हेमन्तः इति" सुश्रुते "तेषाम्" इत्यादि "हेमन्त इति" इत्यन्तस्थाने पाठः।

यमदंष्ट्रा।—

*कार्त्तिकस्य दिनान्यष्टावष्टावग्रहायणस्य च ।
यमदंष्ट्रा समाख्याता स्वल्पभुक् चात्र जीवति ॥

दोषाणां चयादौ विहाराहारादीनामपि हेतुता।—

चयकोपशमान् दोषा विहाराहारसेवनैः ।
समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्य्ययम् ॥२५॥

---

काले न प्रकुप्यति ऋत्वादिस्वभावात्। कफस्य सञ्चीयमानस्य हिमानीवशात् तदानीं स्त्यानतैव भवति न प्रकोपः। वसन्ते च प्रकुप्यति इति च-कारग्रहणेनाव सञ्चयादिकमहोरात्रावपि जानीयात्। तद्यथा—"तत्र पूर्वाह्णे वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकं, शारदमर्द्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेत" (सु० सू० ६ अ०)। अथ दोषाणामुपशममाह, प्रायेणेत्यादि।— समीरणो वायुः, शरत्काले स्वयमेव कारणं विना प्रशमं याति प्राप्नोति; स्वयमेवेति स्वभावतः स्वलक्षणत इत्यर्थः। स्वलक्षणं पुनरेषां शीतोष्णवर्षादि। एवं वसन्तेऽपि पित्तं, प्रावृट्काले कफ इति। अत्र यत् शरद्वसन्तप्रावृट् चयोपशमार्थमुक्तं तद्राशि-परिवर्त्तनात्, अन्यथा तन्त्रान्तरविरोधः। प्रायेणेतिग्रहणात् दोषजा अपि व्याधयः प्रशमं यान्ति स्वयमेवेति सुश्रुतः। तथा हि—तत्र "पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां शरदि स्वभावत एव" (सु० सू० ६ अ०)। अत्र शीतोष्णवर्षालक्षणकालप्रभावादुपशमः; तस्मात् पूर्वयो न विरोधः ॥ २३।२४॥

इदानीं दोषाणामकालेऽपि चयादिनिमित्तं हेतुमाह, चयेत्यादि।—दोषा वातादयः समानैर्विहाराहारसेवनैः कृत्वा चयादीन् यान्ति प्राप्नुवन्तीत्यर्थः। विपरीतैरसमानैः कृत्वा अकाले अपशम ऋतावपि विपर्य्ययं नाशं प्राप्नुवन्तीत्यर्थः। समानैरिति दोषानुरूपकारणैः; तद्यथा—लघुरूक्षशीतादयो वातगुणसमानाः, विदाहिकटुकाम्लोष्णादयः पित्तगुणसमानाः, मधुरस्निग्धशीतादयोऽपि श्लेष्मगुणसमाना इति। एषां विपरीतैर्विपर्य्ययैः; यथा—गुरुस्निग्धोष्णादयो वातगुणविपर्य्ययाः, अविदाहिमधुरशीतादयः पित्तगुणविपरीताः, तिक्तोष्णरूक्षादयः श्लेष्मगुणविपरीताः इति ॥२५॥

---

* श्लोकोऽयं प्रक्षिप्त इति केचिन्मन्यन्ते।

वायोः प्रकोपे प्रशमे च कारणानि।—

लघुरूक्षमिताहारादतिशीताच्छ्रमात्तथा।
प्रदोषे कामशोकाभ्यां भी-चिन्ता-रात्रिजागरैः॥२६॥
अभिघातादपां गाहाज्जीर्णेऽन्ने धातुसङ्क्षयात्।
वायुः प्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति॥२७॥

पित्तस्य प्रकोपे प्रशमे च कारणानि।—

विदाहिकट्वम्लोष्ण-भोज्यैरत्युष्णसेवनात्।
मध्याह्ने क्षुत्तृषो रोधाज्जीर्य्यत्यन्नेऽर्द्धरात्रके॥
पित्तं प्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति॥२८॥

अथ दोषाणां प्रत्येकं प्रकोपशमकारणान्याह, लघ्वित्यादि।—लघ्वादिधातुसङ्क्षयान्तैः कारणैर्वायुः प्रकोपं याति प्राप्नोतीत्यर्थः। एतेषां प्रत्यनीकैर्विपरीतैश्च शाम्यतीत्यर्थः। आहारशब्दो लघ्वादिभिः प्रत्येकं सम्बध्यते, तेन लघ्वाहारात् रूक्षाहारात् मिताहारादित्यर्थः। लघुत्वं पाकतः, मितं स्वल्पं, रूक्षमस्निग्धम्। अतिशीतादित्यतिशीतसेवनात्। अतिश्रमादिति अतिशरीरायासात्, अतिशब्दोऽत्रापि योज्यः। प्रदोषे रजनीमुखे। कामशोकाभ्यामिति कामोऽभिलाषः स च स्त्रीसङ्कल्परूपः, अभिमतकामिन्याद्यप्राप्तिरिति भावः, शोको धनजनसुनाशादिना, भीर्भयं, कामशोकभयाद्यैरिति। अभिघातः शस्त्रलगुडादीनाम्। अपां गाहादतिजलावगाहात्, अतिशब्दोऽत्र पूर्वादनुवर्त्तते। जीर्णेऽन्ने आहारे परिपाकं गते सति। धातुसङ्क्षयादिति रसादिधातूनां क्षीणत्वात्, यदुक्तं—"धातुक्षयात् स्रुते रक्ते मन्दः सञ्जायतेऽनलः। पवनश्च परं कोपं याति तस्मात् प्रयत्नतः॥" (सु० सू० १४ अ०) इत्यादि। प्रत्यनीकैरिति लघ्वादीनां विपर्य्ययैः, तेऽप्यनुमानतोऽवगन्तव्याः॥२६।२७॥

अथ पित्तं—विदाहीति।—विदाहिभोज्यादिभिः कारणैः पित्तं प्रकोपं याति। एषां प्रत्यनीकैर्विपरीतैः कृत्वा शाम्यतीति। भोज्यशब्दो विदाह्यादिभिः प्रत्येकमभिसम्बध्यते, तेन विदाहिभोज्यैः कटुकभोज्यैरम्लभोज्यैरुष्णभोज्यैरिति। यद्वा—विदाहीति भिन्नार्थसूचकं ज्ञेयं, तेन विदाहि वंशकरीरादि पित्तकरत्वात्। उष्णभोजनञ्च वीर्य्यात् अम्बाद्य। अत्युष्णसेवनादित्यातपाग्नीनाम्। क्षुत्तृषोः रोधादिति क्षुत् क्षुधा तस्याः

अथकफस्य प्रकोपे प्रशमे च कारणानि।—

मधुरस्निग्धशीतादि-भोज्यैर्दिवसनिद्रया।
मन्देऽग्नौ च प्रभाते च भुक्तमात्रे तथाऽश्रमात्॥
श्लेष्मा प्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति॥२९॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां पूर्वखण्डे भैषज्याख्यानकं नाम द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

---

### अथ नाडीपरीक्षादिविधिरध्यायः।

नाडीपरीक्षाख्यानम्।—

करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः॥१॥

---

रोधात् हेट् तथा तस्या अवरोधात्, अवरोधो वेगधारणम्। एके "क्षुत्तृषो रोषात्" इति पठन्ति; तत्र—क्षुत्तृषोरतिवेगात्, रोषात् क्रोधात्, तथा च—"क्रोधात् पित्तं प्रकुप्यति" इति। प्रत्यनीकैरिति विदाहिभोज्यादीनां विपरीतैरिति सुगमम्॥२८॥

अथ कफस्य—मधुरेति।—मधुरभोज्यादिभिः श्लेष्मा प्रकोपं याति। एभ्यः प्रत्यनीकैः नाशकरैः शाम्यति शान्तिं प्राप्नोतीत्यर्थः। भोज्यशब्दोऽत्रापि मधुरादिभिः प्रत्येकमभिसम्बध्यते, तेन मधुरभोज्यैः स्निग्धभोज्यैः शीतादिभोज्यैश्च। आदिशब्दात् गुरुस्निग्धादीनां ग्रहणम्। दिवसनिद्रया कफवृद्धिः स्यात्, यतः,—"रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा" (च० सू७ अष्टौ निन्दितीय०) इति वचनात्। अश्रमादिति अव्यायामात् "व्यायामः कफनाशनम्" इत्युक्तेः॥२९॥

इति श्रीबालव्याख्यप्रकाशवैद्यश्रीभावसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां प्रथमखण्डे भैषज्याख्यानकं नाम द्वितीयोऽध्यायः॥ २॥

---

पूर्वमुक्तं नाडीपरीक्षादिविधिरिति तदनन्तरं नाडीपरीक्षामाह—अथेति। करस्येति।—जीवसाक्षिणी या धमनी सा करस्याङ्गुष्ठमूलेऽस्तीति क्रियापदं योज्यं, पण्डितैः

वातकोपे पित्तकोपे च नाडीलक्षणम् ।—

नाडी धत्ते मरुत्कोपे जलौकासर्पयोर्गतिम् ।
कुलिङ्गकाकमण्डूक-गतिं पित्तस्य कोपतः ॥ २ ॥

श्लेष्मकोपे त्रिदोषकोपे च नाडीलक्षणम् ।—

हंसपारावतगतिं धत्ते श्लेष्मप्रकोपतः ।
लावतित्तिरवर्त्तीनां गमनं सन्निपाततः ॥३॥

द्विदोषकोपे नाडीलक्षणम् ।—

कदाचिन्मन्दगमना कदाचिद्वेगवाहिनी ।
द्विदोषकोपतो ज्ञेया—" ॥४॥

तच्चेष्टया कृत्वा कायस्य शरीरस्य सुखं दुःखञ्च ज्ञेयम् इति। धमनीति शब्दवाहिनी नाडी, धमनी जीवनं तनी इत्यतो धमनी जीवसाक्षिणीति प्राणवायोः साक्षिभूता, अत एव क्वचिज्जीवनाडीति कथिता। तथा हि—"प्रदर्शयेद्दोषनिजस्वरूपं व्यस्तं समस्तं युगलीकृतञ्च। मूकस्य मुग्धस्य विमोहितस्य दीपः पदार्थानिव जीवनाडी ॥" इति। लक्षणमपि च—"अस्थ्नः प्रकोष्ठबाह्यस्य मध्यमानामिकाश्रिता। जीवनाडीति सा प्रोक्ता नन्दिनी तत्त्ववेदना ॥" इति। तच्चेष्टया दुःखमिति दोषादिवैषम्यधर्मः, यतः "रोगस्तु दोषवैषम्यम्" (वा० सू० १ अ०) इत्यादिवचनात्। पण्डितैरिति प्रवीणैः नाडीग्रहणस्य समयविशेषज्ञैरित्यर्थः। यतः,—"सद्यःस्नातस्य भुक्तस्य क्षुत्तृष्णाऽऽतपशीलिनः। व्यायामश्रान्तदेहस्य सम्यङ्नाडी न बुध्यते ॥" इति ॥१॥

इदानीं दोषाणां निजस्वरूपचेष्टामाह, नाडीति।—नाडी मरुत्कोपे वातप्रकोपे जलौकासर्पयोर्गतिं गमनं धत्ते। जलौकासर्पयोस्तिर्य्यग्गतिरित्यभिप्रायः; तद्वदत्रापि। पित्तप्रकोपतस्तु कुलिङ्गादीनां गतिं धत्ते; कुलिङ्गो गृहचटकः। काकमण्डूकौ प्रसिद्धौ, एतेषामुत्प्लवनगतिरित्यर्थः। एके कुलिङ्गस्थाने "कलापी" इति पठन्ति व्याख्यानयन्ति च—कलापी मयूरः। श्लेष्मप्रकोपात् हंसपारावतगतिं धत्ते, अत्रापि नाडीति सम्बध्यते। एतेन मन्दगतिवाहिनी भवतीत्यभिप्रायः; यतो हंसपारावतयोरपि मन्दगतिः स्यात्। अथ सन्निपातसंसर्गयोर्नाडीचेष्टामाह, लावेति।—सन्निपाततस्त्रिदोषकोपात लावादीनां गमनं नाडी धत्ते इति पूर्वादनुवर्त्तते। लावतित्तिरौ प्रसिद्धौ। वर्त्तीति वर्त्तिका "धरधर" शब्दवाच्या। गङ्गुकाभिधानेत्यन्ये। एतेषां सीताला गतिः सूच्यते। द्विदोषकोपादपि नाडी कदाचिन्मन्दगामिनी कदाचिद्वेगवाहिनीति ॥२—४॥

असाध्यनाड़ीलक्षणम्।—

"—हन्ति च स्थानविच्युता।

स्थित्वा स्थित्वा चलति या सा स्मृता प्राणनाशिनी।

अतिक्षीणा च शीता च जीवितं हन्त्यसंशयम्॥५॥

ज्वररोगे कामक्रोधादौ च नाड़ीलक्षणम्।—

ज्वरकोपेन धमनी सोष्णा वेगवती भवेत्।

कामक्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता॥६॥

मन्दाग्निधातुक्षीणादौ नाड़ीलक्षणम्।—

मन्दाग्नेः क्षीणधातोश्च नाड़ी मन्दतरा भवेत्।

असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी॥७॥

इदानीमसाध्याया लक्षणमाह, हन्तीति।—स्थानविच्युता स्वस्थानात्स्खलिता, नाड़ीति शेषः, हन्तीति आतुरमिति शेषः। या स्थित्वा स्थित्वा चलति गच्छति साऽपि प्राणनाशिनी ज्ञेया, एतेन कदाचिद्वहति कदाचिन्न वहतीत्यभिप्रायः। अतिक्षीणा चेति विसतन्तुवत्, अतिशीता चेति हिमस्पर्शवत्। असंशयं निश्चयेन जीवितं प्राणान् हन्ति, नाड़ीति शेषः। चकारात् कुटिला शीघ्रोर्ध्वगमनशीलाऽपि प्राणनाशिनी बोद्धव्या। तथा चोक्तं—"नाड़ी तन्तुवद्वा-ऽङ्गुष्ठमूले याऽस्थिरमुच्छलेत्। शनैरूर्ध्वगमना कुटिला हन्ति मानवम्॥" इति॥५॥

अथ ज्वरादौनां धमनीलक्षणमाह, ज्वरकोपेनेति।—ज्वरकोपेन सामान्यज्वरस्य प्रकोपण कृत्वा धमनी नाड़ी सोष्णा उष्णयुक्ता भवेत्, ज्वरस्योष्णात्मकत्वात्; न केवलं सोष्णा, वेगवती भवेत्, ज्वरस्य देहेन्द्रियमनःसन्तापित्वात्। कामक्रोधादपि वेगा वेगयुक्ता अनौष्ण्येन ज्वराद्भिन्ना। कामोऽभिमतकामिन्याद्यप्राप्तिः। क्रोधो हिंसात्मकादिरूपः। चिन्ताभयप्लुतेति चिन्ताभययुक्ता नाड़ी क्षीणा सूक्ष्मा ज्ञेया। चिन्ता मनोद्वेगरूपा। भयं शत्रुप्रभृतीनाम्। एके "चिन्ताभयश्रमात्" इति पठन्ति, चिन्ताभयश्रमान्नाड़ी क्षीणा सूक्ष्मा ज्ञेया। चिन्ता मानसोद्वेगरूपा ज्ञेया। तत्र श्रमात् ग्लानिः॥६॥

मन्दाग्नेः क्षीणधातोश्च पुरुषस्य नाड़ी मन्दतरा भवेत् अत्यर्थं मन्दगतिरित्यर्थः। असृक्पूर्णा रुधिरप्रकोपात् पूरिता नाड़ी कोष्णा गुर्वी च भवेत्। कोष्णा ईषदुष्णा गुर्वी गुरुतरा पाषाणवदित्यर्थः। एके "सोष्णा" इति पठन्ति। सामा आमयुक्ता

दीप्ताग्न्यादौ नाडीलक्षणम्।—

लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता।
सुखितस्य स्थिरा ज्ञेया तथा बलवती स्मृता।
चपला क्षुधितस्यापि तृप्तस्य वहति स्थिरा ॥८॥

दूतलक्षणम्।—

दूता: स्वजातयोऽव्यङ्गा: पटवो निर्मलाम्बरा:।
सुखिनोऽश्ववृषारूढा: शुभ्रपुष्पफलैर्युता: ॥९॥

नाडी गरीयसी स्यात् अत्यर्थं गुर्वी भवतीति भाव:। आमेन सह वर्त्तते इति साना; आमोऽपरिपक्वरस:, तत्र यथा—"जठरानलदौर्बल्यादविपक्वस्तु यो रस:। स आमसंज्ञको देहे सर्वदोषप्रकोपक:॥" इति। अथवा आमग्रहणेन आमातिवयसमन्नमजीर्णं गृह्यते, तेन तैर्युक्तेत्यर्थ:। तच्च आमं विदग्धं विष्टब्धं चेति। एके "सामा गरीयसी" (?) इति पठन्ति, आमेन सह वर्त्तते इति सामा ते च दोषदूष्यतादय: *। यत: "आमेन तेन संयुक्ता दोषा दूष्याश्च दूषिता:। सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवा:॥" ( वा० सू० १३ अ० ) इति। एतेन किमुक्तं भवति, सामदोषात् † सामदूष्यात् सामदूषितात् सामरोगाच्चेति। दूष्या रसादयो धातव:। दूषितानि मलमूत्रप्रभृतीनि ॥७॥

दीप्ताग्ने: प्रबलाग्ने: पुरुषस्य लघ्वी वेगवती च वहति। लघ्वी तूलवत्, सैव वेगयुक्ता ज्ञेया न तु पूर्वोक्ता ज्ञेया। सुखितस्य स्वस्थस्य स्थिरा प्रकृतिस्था भवतीत्यर्थ:। न केवलं स्वस्था तथा बलवती बलयुक्ता, न क्षीणेत्यभिप्राय:। क्षुधितस्य बुभुक्षितस्यापि चपला चञ्चला, न मन्देत्यर्थ:; एतेन प्रकृतिस्थितामिवेति भाव:। तृप्तस्य भोजनादिना सन्तुष्टस्य पुरुषस्य स्थिरा निश्चलैव ॥ ८ ॥

इति नाडीपरीक्षा।

पूर्वमुक्तत्वादिग्रहणात् दूतस्वप्रादीनां लक्षणकथनम्। अथ दूतलक्षणान्याह, दूता इति।—एवंविधा दूता यदा भिषजं वैद्यं प्राप्तास्तदा रोगिण आतुरस्य सुखहेतवे भवन्तीत्यध्याहार्य्यम्। वैद्याह्वानाय प्रश्नाय आगता: पुरुषा दूता: कीदृशास्तानाह, स्वजातय इति।—स्वस्या जातौ स्वगोत्रे वा जाता·

* दूष्यादय: इति साधु:।

† "सामदोषात्" इत्यादि व्याख्यानमसमीचीनम्।

सुजातयः सुचेष्टाश्च सजीवदिग्गि सङ्गताः।
भिषजं समये प्राप्ता रोगिणः सुखहेतवे ॥१०॥

स्वजातयः। एके "सजातयः" इति पठन्ति, तत्र सपक्षा इत्यर्थः। यदुक्तं —"पाषण्डाश्रमवर्णानां सपक्षाः कर्मसिद्धये। त एव विपरीताः स्युर्दूताः कर्मविपत्तये॥" (सु० सू० २९ अ०) इति। अव्यङ्गा इति।—व्यङ्गा हस्ताद्यवयवहीनाः न व्यङ्गा अव्यङ्गाः। पटव इति प्रवीणाः। एतेन विज्ञवककालज्ञाः कथिताः। निर्मलाम्बरा इति शुभ्रवस्त्रधारिणः, तेन रक्तकृष्णवस्त्रादिरहिता इत्यर्थः। सुखिन इति अदीनाः। अश्ववृषारूढा इति अश्वारूढाः, वृषारूढाश्च। वा समन्तात्कारेण रूढाः इति यद्ग्रहणं तस्माद्धिपोष्ट्रखरादियाननिषेधार्थम्। गन्धपुष्पफलैर्युता इति श्वेतपुष्पैरभिः सारफलैश्च सयुक्ता इत्यभिप्रायः। एतेन रक्तपीतकृष्णादिभिः सारफलरहिता (?) इत्यर्थः, यत एवंविधानि पुष्पफलान्यमङ्गलानि भवन्ति। तथा चोक्तं—"तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः। फलं पक्कमसारं वा गृहीत्वाऽन्यच्च तद्विधम्॥ वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः॥" (सु० सू० २९ अ०) इति। सुजातय इति शोभना जातिर्येषां ते तथाविधाः। एतेनान्यजातिजनिता निषिद्धाः, पापकृतगर्भोत्पत्तिरहिता इत्यर्थः। यद्वा—विज्ञातजातय इति पिण्डार्थः। सुचेष्टाश्चेति चेष्टाव कायकर्ता व्यापारः, शोभनव्यापार इत्यभिप्रायः; शोभनग्रहणं दुश्चेष्टितव्यवच्छेदार्थम्। तथा ह्युक्तं—"छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम्। वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः॥ स्रोतोऽवरोधहृद्गण्डमूर्द्धोरःकुक्षिपाणयः। कपालोपलभस्मास्थितुषाङ्गारकराश्च ये॥ विलिखन्तो महीं किञ्चिन्मुञ्चन्तो लोष्टभेदिनः॥" (सु० सू० २९ अ०) इत्यादि दुश्चेष्टिता दर्शिताः। सुचेष्टाश्चेति चकारग्रहणात् सुदर्शनाः सुवेशा अपि गृह्यन्ते, अन्यथा गर्हिताः स्युः। तथा हि—"नपुंसकः स्त्री बहवो नैककार्य्या असूयकाः। गर्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्परा॥ पाशदण्डायुधधराः पाण्डुरेतरवाससः॥ आर्द्रजीर्णापसव्यैकमलिनध्वस्तवाससः। न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः॥ वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः॥" (सु० सू० २९ अ०) सजीवदिग्गि सङ्गता इति —जीवनेन प्राणानिलेन सह या दिक् न डी तस्यां सङ्गताः प्राप्ता इत्यर्थः। तथा च—"यस्याः प्राणमरुद्वाति सा नाडी जीवसंयुता" इति। नाडी चात्र नासासम्बन्धिनी ज्ञेया। यद्वा—जीवेन सह वर्त्तते इति या दिक् दिशा

शकुनम् ।—

वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते ।
न शुभं सौम्यशकुनं प्रदीप्तञ्च सुखावहम् ॥११॥
चिकित्सां रोगिणः कर्त्तुं गच्छतो भिषजः शुभम् ।
यात्रेयं सौम्यशकुनं प्रोक्तं दीप्तं न शोभनम् ॥१२॥

तस्यामित्यर्थः, तेन याम्यदिग्वर्हिर्तादिशायां प्राप्ता इति तात्पर्य्यार्थः; यतो याम्यदिक् निषिद्धा; तथा हि—"याम्यां दिशं प्राञ्जलयो विषमैकपदे स्थिताः । वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥" (सु० सू० २९ अ०) इति । समये प्राप्ता इति समये शुभवेलातिथिनक्षत्रादियुक्ते काले, अन्यथा अशुभकरा इति भावः । तदुक्तं—"वैद्यस्य पैत्रे दैवे वा कार्य्ये चोत्पातदर्शने । मध्याह्ने चार्द्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ॥ आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च । चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ॥ दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् । ज्वलयन्तं पचन्तं वा क्रूरकर्मणि चोद्यतम् ॥ नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् । प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव च । वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥" (सु० सू० २९ अ०) इति ॥ ९।१० ॥

इति दूतलक्षणं सम्पूर्णम् ।

इदानीं गच्छतो दूतस्य शकुनान्याह, वैद्याह्वानायेति ।—रोगिण आतुरस्य कृते निमित्ते वैद्याह्वानाय गच्छतो दूतस्य सौम्यशकुनं भेरीमृदङ्गादि न शोभनमित्यर्थः । प्रदीप्तमसौम्यं सुखावहं भवति । गच्छत इति मार्गे चलितस्य । एतेन विपरीतशकुनान्येव शुभकराणि बोद्धव्यानि । उक्तञ्च ज्योतिःशास्त्रे—"सद्यो रणे कर्म्मणि च प्रवेशे शुक्रग्रहे नष्टविलोकने च । व्याधौ च नद्युत्तरणे भयार्त्ते शस्तः प्रयाणाद्विपरीतभावः ॥" ११ ॥

इदानीं गच्छतो वैद्यस्यापि शकुनानि दर्शयन्नाह, चिकित्सामिति ।—रोगिण आतुरस्य चिकित्सां रोगापनयनं कर्म्म कर्त्तुं गच्छतो मार्गे चलितस्य भिषजो वैद्यस्य यात्रेयं सौम्यशकुनं प्रोक्तमिदं शुभं कथितं, दीप्तमशुभशकुनं न शोभनमित्यर्थः । यात्रेयं यात्रायोग्य. यथा—"भेरीमृदङ्गमृदमर्दलशङ्खवेणुवेदध्वनिर्मधुरमङ्गलगीतघोषाः । पुत्रान्विता च युवतिः सुरभिः सवत्सा धौताम्बरश्च रजकोऽभिमुखः प्रशस्तः" ॥ अन्यच्च—"भृङ्गाराञ्जनवर्द्धमानकुलावलेकपश्चामिषशङ्खक्षीरनृपान्नपूर्णकलशच्छत्राणि सिद्धार्थकाः । वीणाकेतनमीनपङ्कजदधिक्षौद्राज्य-

चिकित्स्यरोगिलक्षणम्।—

निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन संयुतः।
चिकित्स्यो भिषजा रोगी वैद्यभक्तो जितेन्द्रियः ॥१३॥

गोरोचना, कन्याशङ्खमित्येतत्सुमनांसि विप्राश्च रत्नानि च ॥" इति। दीप्तमित्यथावेद्यं, तद्यथा—"गमनं दक्षिणे वामात् शस्तं श्वशृगालयोः ॥" "वामं नकुलचाषाणां नोभयं शशसर्पयोः। भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥ दर्शनं च रुतञ्चापि न गोधाकृकलासयोः। कुलत्थतिलकार्पासतुषपाषाणभस्मनाम् ॥ पात्रं नेष्टं तथाऽङ्गारतैलकर्दमपूरितम्। प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ॥ शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः। नेच्छन्ति पतितान्त्यदीनान्धरिपवस्तथा ॥" ( सु० सू० २९ अ० ) इति ॥ १२ ॥

अथ कीदृशो रोगी चिकित्स्यस्तद्दर्शयन्नाह, निजप्रकृतीति।—भिषजा वैद्येन ईदृशो रोगी चिकित्स्यः, चिकित्सा रोगापनयनं कर्म तद्योग्यो भवतीत्यभिप्रायः। कीदृशः? तमाह, निजप्रकृतिवर्णाभ्यां युक्त इति।—यादृशौ यस्य प्रकृतिवर्णौ स्तः, तादृशाभ्यामेव संयुक्त इत्यर्थः। ननु केयं प्रकृतिः? कति भेदाः? किं कारणं वा अस्या इति? तदुच्यते—केयं प्रकृतिः स्वभाव इत्यर्थः। सा चाबाल्यप्रवृत्ता निषेकाद्या वाताद्यारब्धा आमरणादनुवर्त्तते। कति भेदा इति। सप्त प्रकृतयो भवन्ति पृथग्दोषैर्द्वन्द्वैः समस्तैश्च। किं कारणमिति तदाह सुश्रुतः,—"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥" ( सु० शा० ४ अ० ) इति। सा हि प्रकृतिर्जात्यादीन् षड्भावानपेक्षते। तदुक्तं चरके—"तत्र प्रकृतिर्हि जातिप्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता च" ( च० इ० वर्णस्वरीय० ) इति। तत्र जातिप्रसक्ता नाम तासु तासु मनुष्यादिजातिषु ते ते करचरणादयः स्वभावविशेषाः, वचनेषु च नानाविधा एव व्यक्त्यादयो धर्मविशेषाः, सन्ति च धर्माधर्ममैथुनाहारप्रभृतयोऽपि भावाः। कुलप्रसक्ता नाम द्विजकुले तपःप्रियतादयः, क्षत्रियकुले समरप्रियतादयो धर्मविशेषा भवन्ति। देशानुपातिनी नाम लाटकर्णाटायनादीनां काये वाचि मनसि च ते ते स्वभावविशेषा भवन्ति। कालानुपातिनी नाम देहादिषु दौर्बल्यादिकमादानाद्यपेक्षा सदैषु च दोषाद्यपेक्षणीया। वयोऽनुपातिनी नाम बाल्याद्यवस्थासु कालादौ मर्य्यादादयो धर्माः। प्रत्यात्मनियता इति

स्वप्नलक्षणम्।—

तत्र दुःस्वप्नानि।—

**स्वप्नेषु नग्नान् मुण्डांश्च रक्तकृष्णाम्बरावृतान्।**
**व्यङ्गांश्च विकृतान् कृष्णान् सपाशान् सायुधानपि॥१४॥**

आत्मनि स्थिता प्रतिपुरुषनियतेत्यर्थः। ते पुनः कायी वाचि मनसि च स्वभावविशेषा प्रकृतिपुरुषभेदभिन्ना दृश्यन्ते इति। केचित्तु पाञ्चभौतिकीं प्रकृतिमाहुः। अन्ये तु प्रकृतिं सत्त्वरजस्तमोमयीमाहुः। पूर्वमुक्ताः प्रकृतिवर्णाभ्यां युक्ताः, अतस्तावत प्रकृतिस्तु सङ्क्षेपेणोक्ता। इदानीं वर्णमाह—वर्णशब्देन प्रभा कथ्यते। सैव छायाप्यभिमता। एतेषां भेदोऽप्यस्तीत्येके भाषन्ते। स यथा—"वर्णप्रभाभिराश्रिता या छाया सा परिकीर्त्तिता। वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी॥ आसन्ना लक्ष्यते छाया प्रभा दूरात्तु लक्ष्यते॥" (वा० शा० ५ अ० च० ६० पद्यरूपीय०) इति। न केवलं वर्णप्रभाच्छायानां लक्षणभेदः, सङ्ख्याभेदोऽप्यस्ति। स यथा चत्वारो वर्णाः,—गौरः, कृष्णः, श्यामः, गौरश्यामः इति। प्रभाः सप्तविधाः—रक्ता, पीता, सिता, श्यावा, हरित, पाण्डुरा, असितेति। छायाऽपि पञ्चविधा—स्निग्धा, विमला, रूक्षा, मलिना, सङ्क्षिप्तेति। पुनः कीदृशो रोगी चिकित्स्यः? सत्त्वेन संयुत इति।—सत्त्वन्तु व्यवसायाभ्युदयक्रियादिस्थानेष्वपि कर्मकरम्। यतः,—"सत्त्ववान् सहते सर्वं संस्तभ्यात्मानमात्मना। राजसस्तभ्यमानोऽन्यैः सहते नैव तामसः॥" (सु० सू० ३५ अ०) इति। अत्रोपपन्नार्थं प्रवरावरमध्यमबलं सत्त्वं त्रिविधम्। एतेषां लक्षणं न लिखितमत्र ग्रन्थबाहुल्यात्। पुनः कीदृशः? नैश्यभक्त इति वैद्याह्लादकरः तद्वाक्यपालनेऽनुरक्त इत्यर्थः। यतः "आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि" इति वचनात्। पुनः कथम्भूतः? जितेन्द्रियो जितेन्द्रियविषयः, विषयाः तु स्रक्चन्दनवनितादयः॥ १३॥

इति आतुरलक्षणम्।

अथानन्तरं स्वप्नान्याह, स्वप्नेष्विति।—एवंविधान् स्वप्नान् स्त्रीपुरुषयोर्मध्ये यश्चैक पश्यति स एव यदि स्वस्थोऽनातुरस्तर्हि व्याधिं लभते। यदा रोगी पश्यति तदा पञ्चत्वं मरणं याति प्राप्नोतीत्यर्थः। कीदृशान् स्वप्नान्? तानाह—नग्नान् वस्त्रादिरहितान्। मुण्डानिति मुण्डितान्। रक्तकृष्णाम्बरावृतानिति रक्तकृष्णवस्त्रैर्वेष्टितान् इत्यर्थः। व्यङ्गानिति अवयवादिरहितान् नासाकर्णादिभिरपि व्यङ्गानित्यभि-

बध्नतो निघ्नतश्चापि दक्षिणां दिशमाश्रितान्।
महिषोष्ट्रखरारूढान् स्त्रीपुंसोर्यस्तु पश्यति॥
स स्वस्थो लभते व्याधिं रोगी यात्येव पञ्चताम्॥१५॥
अधो यो निपतत्युच्चाज्जलेऽग्नौ वा विलीयते॥
श्वापदैर्हन्यते योऽपि मत्स्याद्यैर्गिलितो भवेत्॥१६॥
यस्य नेत्रे विलीयेते दीपो निर्वाणतां व्रजेत्॥
तैलं सुरां पिबेद्वाऽपि लोहं वा लभते तिलान्॥१७॥
पक्वान्नं लभतेऽश्नाति विशेत् कूपञ्च मातरम्।
स स्वस्थो लभते रोगं रोगी यात्येव पञ्चताम्॥१८॥

प्राय:। विकृतानिति पङ्गुकुब्जप्रभृतीन्। कृष्णानिति चित्रकाल्पितवत् कार्ष्णाभास:; सपाशानिति पाशयुतान्, पाशो दीर्घ: पशूनां बन्धनरज्जु:। बध्नतो निघ्नत इति निग्रहपहननकर्मकारिण:। दक्षिणां दिशमाश्रितानिति एते तु यदा दक्षिणां दिशमाश्रिता भवन्ति तदा प्रचुरमनिष्टं स्यादित्यभिप्राय:। तत्र संस्कृत भाग धेयमिति वदन्ति। महिषोष्ट्रखरारूढानिति महिषादिवाहनेषु आरोहितान् इत्यर्थ:; ते तु यमसम्बन्धिनस्त्रासभकरा इति भाव:॥ १४।१५॥

अथापराणि दु:स्वप्नान्याह, अध इति।—स्वप्ने योऽपि एवंविधो भवति सोऽप्यनिष्ट:। कीदृशस्तमाह, अधो यो निपतत्युच्चादित्यादि।—पुरुष उच्चाद-त्युच्चस्थानादधो निम्नस्थाने निपतति स्खलतीत्यर्थ:। अत्युच्चं पर्वतादिकम्। यो जलेऽग्नौ वा विलीयते लीनो भवति। एतेन जले बुडति अग्नौ पतङ्गवत् पततीत्यभिप्राय:। योऽपि श्वापदैर्हन्यते मृगयुरथैराक्रम्यते * इति। एके "स्वापदै:" इति पठन्ति, तत्र स्वापदैर्निजबन्धुमात्रादिभिरुपहन्यते पीड्यते इत्यर्थ:। मत्स्याद्यै-रिति गिलितो भक्षितो यो भवेत। आदिग्रहणान्मकरनक्रशिशुमारप्रभृतीनां ग्रहणम्। यस्य पुरुषस्य च नेत्रे विलीयेते विलीनतां प्राप्ते इति, स्वप्नेऽपीति शेष:; एतेन स्वचक्षुषी विगलिते पश्यतीत्यर्थ:। दीपो निर्वाणतां व्रजेत् इति। एतेन किमुक्तम? य: स्वप्नेऽप्यकस्माद्दीपं विनष्टं पश्यतीत्यभिप्राय:। यश्च तैलं सुरां वा पिबेत, यश्च लोहं लभते, तिलान् वा लभते, यश्च पक्वान्नं सिद्धान्नं लभते, यश्च

* श्वापदै: व्याघ्रादिभिर्हिंस्रप्राणिभिरित्यर्थ: समीचीन:; न तु मृगयुरथैरिति; श्वापदशब्दस्य हिंस्रप्राणिषु रूढ्यर्थत्वात्।

दुःस्वप्नप्रतीकारः ।—

दुःस्वप्नान्येवमादीनि दृष्ट्वा ब्रूयान्न कस्यचित् ।
स्नानं कुर्य्यादुषस्येव दद्याद्धेम तिलानयः ॥१९॥
पठेत् स्तोत्राणि देवानां रात्रौ देवालये वसेत् ।
कृत्वैवं त्रिदिनं मर्त्त्यो दुःस्वप्नात् परिमुच्यते ॥२०॥

तदश्नाति भक्षति च, यो मातरं कुड्यं विशेत् मातृगृहं * प्रविशतीत्यर्थः, एतेषां स्वप्नेष्विति सम्बन्धः। सुराऽत्र पिष्टमयी न तु मद्यविशेषः; स्वप्ने विशिष्टमद्यपानं प्रशस्तम्। तदुक्तं—"रुधिरं पिबति स्वप्ने मद्यं वाऽपि कथञ्चन। ब्राह्मणो लभते विद्यामितरस्तु धनं लभेत् ॥" इति। "लोहम" इत्यस्य स्थाने "लौहम" इति पाठान्तरं, तत्र लौहं लोहमयं यष्ट्यादि। वा ग्रहणात् कार्पासपिण्याकलवणादीनां ग्रहणम्; एतेषां लाभेऽप्यनिष्टं भवति। एके "विशेत कुड्यञ्च मातरम्" इत्यत्र कुड्यमुत्सङ्गं व्याख्यानयन्ति। "जननीं प्रविशेन्नरः" इति पठन्ति केचित्, तत्र मातुरुदरं प्रविशतीत्यर्थः। तत्र मात्रा सह शयनं करोतीत्यन्ये ॥ १६—१८ ॥

इदानीं दुःस्वप्नदर्शनोत्पन्नारिष्टनिरासार्थं किञ्चित् प्रतीकारमाह, दुःस्वप्नानीति।—एवमादीनि पूर्वोक्तानग्नमुण्डादीनि दुःस्वप्नानि दुःखोत्पादकानि दृष्ट्वा स्वप्नावस्थायामालोक्य कस्यचित् पुरतो न ब्रूयात् न प्रकाशयेत इत्यर्थः, परमुखेनानिष्टश्रवणभयात्। तदनु किं कुर्य्यात्? तदाह, स्नानमिति।—उषसि प्रातरेव स्नानं कुर्य्यात् हेमतिलानयश्च दद्यात्। हेम सुवर्णं, तिलान् कृष्णान्, अयो लौहम। पुनः किं कुर्य्यादित्याह, पठेदिति।—देवानां स्तोत्राणि देवानां विष्णुप्रभृतीनां स्तोत्राणि चाग्निवर्यादीनि। यथा—"चाग्निवयं त्रीणि च पुष्कराणि नामत्रयं त्रीणि पदानि विष्णोः। रुद्रास्त्रिनेत्रास्त्रिपथा च गङ्गा एतानि दुःस्वप्नविनाशनानि ॥" इति। इति दिनकृत्यं, रात्रावपि देवालये देवमण्डपे वसेत्। तत्र जागरणं कुर्य्यादिति केषाञ्चिन्मतम्। अथ दुःस्वप्नमुपसंहरन् फलमाह, कृत्वैवमिति।—एवमुक्तप्रकारेण, प्रकारं तु स्नानदानादिकं कर्म कृत्वा सम्पाद्य त्रिदिनं दिनत्रयं यथा स्यात् मर्त्त्यः पुरुषः दुःस्वप्नात् दुःखजनकनिमित्तात् परिमुच्यते सुखी भवतीत्यर्थः ॥ १९।२० ॥

---

* कुड्यं भित्तिं तथा मातरं जननीं विशेत, गृहभित्तिं प्रविशेत् जननीजठरं वा प्रविशेत् इत्यर्थो युक्तः, न तु मातृगृहं, चरकादौ तादृशव्याख्याऽदर्शनादिति।

शुभस्वप्नानि।—

स्वप्नेषु यः सुरान् भूपान् जीवतः सुहृदो द्विजान्।
गोसमिद्धाग्नितीर्थानि पश्येत् सुखमवाप्नुयात् ॥२१॥
तीर्त्वा कलुषनीराणि जित्वा शत्रुगणानपि।
आरुह्य सौधगोशैल-करिवाहान् सुखी भवेत् ॥ २२ ॥
शुभ्रपुष्पाणि वासांसि मांसमत्स्यफलानि च।
प्राप्यातुरः सुखी भूयात् स्वस्थो धनमवाप्नुयात् ॥२३॥
अगम्यागमनं लेपो विष्ठया रुदितं मृतिः।
आममांसाशनं स्वप्ने धनारोग्याप्तये विदुः ॥ २४ ॥

अथ दुःस्वप्नानि प्रतिपाद्य सम्प्रति प्रशस्तस्वप्नानि दर्शयन्नाह, स्वप्नेष्विति।—यः पुरुषः स्वप्नेषु सुरादीन् पश्येत् स सुखमाप्नुयादित्यर्थः। सुरानितीन्द्रप्रभृतिदेवान्। भूपानिति राज्ञः। सुहृदो मित्राणि। द्विजान् ब्राह्मणान्। एतांस्तु जीवत इति प्रकृतिप्राणयुतानित्यर्थः। तथाऽन्यानपि। गौः। समिद्धाग्निः प्रज्वलितवह्निः। तीर्थानि प्रयागादीनि ॥ २१ ॥

अपराण्याह, तीर्त्वेति।—यः पुरुषः स्वप्नेषु एवंविधो भवति स सुखी भवेदित्यर्थः। कीदृशस्तमाह—कलुषनीराणि सकर्दमपानीयानि तीर्त्वा लङ्घयित्वामिति भावः। शत्रुगणान् रिपुसमूहान् जित्वा आगत इति तात्पर्य्यार्थः। सौधगोशैलादीनारुह्य प्राप्त इति भावः। सौधो धवलगृहः, गौर्वृषभः, शैलः पर्वतः, करी हस्ती, वाहानश्वादीन्। कलुषनीराणीति बहुवचनेन नदीनद-समुद्रादीनां ग्रहणम्। तदुक्तं—"नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान्। तरेत कल्याणलाभाय व्याधेरपगमाय च ॥" ( सु० सू० २९ अ० ) इति ॥ २२ ॥

अन्यान्यप्याह, शुभ्रेति।—आतुरो रोगी शुभ्रपुष्पादीनि प्राप्य सुखी भूयादनातुरः स्यादित्यर्थः। यदा स्वस्थोऽपीदृशः स्यात् तदा धनमाप्नुयादिति भावः। शुभ्र पुष्पाणीति शुभ्रपुष्पप्रभृतीनि। वासांसि चात्र शुभ्राणि ज्ञातव्यानि। मांसमत्र आमं न तु परिपक्वं, वक्ष्यमाणत्वात्। फलानीति आम्रप्रभृतीनि ॥ २३ ॥

अथेतराण्याह, अगम्येति।—अगम्यागमनम् अनुचितस्थानगमनम्। विष्ठायाः * पुरीषस्य लेपः करचरणादिषु। रुदितमिति रोदनम्। आत्मनः परस्य वा मृति-

* "विष्ठया" इति मूलोक्तपाठः समीचीनः।

जलौका भ्रमरो सर्पो मक्षिका वाऽपि यं दशेत्।
रोगी स भूयादरोगः स्वस्थो धनमवाप्नुयात्॥२५॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां पूर्वखण्डे नाडीपरीक्षादिविधिर्नाम तृतीयोऽध्यायः॥ ३॥

---

# चतुर्थोऽध्यायः।

## अथ दीपनपाचनाध्यायः।

दीपनं पाचनं दीपनपाचनञ्च।—

पचेन्नामं वह्निकृच्च दीपनं तद् यथा मिसिः।
पचत्यामं न वह्निञ्च कुर्य्याद्यत्तद्धि पाचनम्।
नागकेशरवत् विद्याच्चित्रो दीपनपाचनः॥१॥

---

मैरेयम। "आममांसाशनम्" इत्यत्र परे "पक्वमांसाशनम्" इति पठन्ति। धनञ्च स्वप्ने धनारोग्यप्राप्तये धनप्राप्तये आरोग्यप्राप्तये च॥ २४॥

जलौकेति।—जलौकादयो यं पुरुषं दशन्ति भक्षयन्ति, स्वप्नेऽस्मिन् शेषः, स यदा रोगी भवति तदा अरोगः स्यात्। स्वस्थोऽपि धनं प्राप्नोतीत्यभिप्रायः। जलौका प्रसिद्धा। भ्रमरोति कृष्णवर्णमधुमक्षिकाभेदः। सर्पोऽजगरप्रभृतिकः। मक्षिकाश्च स्वल्पाः। वा-ग्रहणात् वरटा-मधुमक्षिका-मशकादीनां ग्रहणम्॥ २५॥

इति स्वप्नलक्षणम्।

इति श्रीवाक्यान्वयप्रकाशवैद्यश्रीभावसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधर-दीपिकायां प्रथमखण्डे नाडीपरीक्षादिविधिरध्यायस्तृतीयः॥ ३॥

---

पूर्वमुक्तं "ततो दीपनपाचनम्" अतो दीपनपाचनादीनां लक्षणान्याह, पचेदिति।—यद्द्रव्यमामं न पचेद्वह्निकृच्च भवति तद्दीपनं जानीयात्। यथा मिसिः शतपुष्पा। तथा चोक्तं द्रव्यगुणावल्यां—"शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः" इति। दीपनं जठराग्नेः, अग्निगुणभूयिष्ठत्वात्। ननु कथमेतद्गुणयुक्तमिसिर्नामघ्नी

शमनम्।—

न शोधयति न द्वेष्टि समान् दोषांस्तथोद्धतान्।
समीकरोति विषमान् शमनं तद्यथाऽमृता ॥२॥

अनुलोमनम्।—

कृत्वा पाकं मलानां यद्भित्त्वा बन्धमधो नयेत्।
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी ॥३॥

---

भवति? तद्विनाशकत्वेन कथमग्नेः प्रबोधः स्यात्? उच्यते—द्रव्याणां प्रभावो विचारणीय इति सुश्रुतः न हेतुभिर्विचार्य्यते। तदुक्तं—"नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन। सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत्॥" (सु० सू० ४० अ०) इति। आमं द्रव्यापरिपक्वरसः। तद्यथा—"जठरानलदौर्बल्यादविपक्वस्तु यो रसः। स आमसंज्ञको ज्ञेयो देहदोषप्रकोपणः॥" इति। अथ पाचनमाह, पचत्याममित्यादि।—यद्द्रव्यमामं पचति वह्निं न कुर्य्यात् तत् पाचनं ज्ञेयम्। अत्रापि द्रव्यप्रभावो बोद्धव्यः। तच्च नागकेशरवाहुल्याज्ज्ञानीयात्, यतः "नागकेशरकं रूक्षमुष्णं लघ्वामपाचनम्" इति। आमपाचनमिति विलक्षणम्। सामानां दोषधातुमलानामित्येके। उभयात्मकमाह, चित्रो दीपनपाचन इति।—चित्रक उभयकार्य्यकरो भवति, दीपनः पाचनश्च। तदुक्तं—"चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः" इति ॥ १ ॥

अथ संशमनमाह, न शोधयतीति।—यत् किञ्चित् पीतलीढाशितमनिर्हृत्य दोषं संशमयति तत् संशमनम्। एतेन किमुक्तं यद्द्रव्यं न वामयति न विरेचयति इति व्याधिना सह एकीभूय तस्यैव व्याधिमुपशमयति तत् संशमनमिति भावः। दोषशब्दोऽत्र दोषेषु कार्य्यव्याधिष्वपि वर्त्तते, कार्य्ये कारणोपचारात्। असमं समं करोति समीकरोति। यथा—अमृता गुडूची संशमनी प्रसिद्धा। तदुक्तं—"रसायनी संशमनी दोषाणां ज्वरनाशिनी। गुडूची कटुका लघ्वी तिक्ताऽग्निप्रदीपनी मता॥" इति। केचित्तु—"न शोधयति यद्दोषान् समान् नोदीरयत्यपि। समीकरोति च क्रुद्धान् तत् संशमनमुच्यते॥" इति पठन्ति। अत्रापि स एवाभिप्रायः। सम्यक् शमयतीति संशमनं, सम्यग् दुष्टदोषस्यानिर्हरणपूर्वकं शमनम् अदुष्टस्यानुदीरणञ्च, व्याधिशमने तु प्रस्तुतव्याधिशमनम्, अप्रस्तुतव्याधेरनुदीरणमिति स्पष्टार्थज्ञापनाय न दोषः, पुनर्भावकथनात् ॥ २ ॥

अथानुलोमनमाह, कृत्वेति।—यद्द्रव्यं मलानां दोषाणां पाकं कोपशान्तिं कृत्वा

स्रंसनम्।—

पक्तव्यं यदपक्त्वैवाश्लिष्टं कोष्ठे मलादिकम्।
नयत्यधः स्रंसनं तद्‌यथा स्यात् कृतमालकः॥४॥

भेदनम्।—

मलादिकमबद्धं यत् बद्धं वा पिण्डितं मलैः।
भित्त्वाऽधः पातयति तद्भेदनं कट्की यथा॥५॥

रेचनम्।—

विपक्वं यदपक्वं वा मलादि द्रवतां नयेत्।
रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा॥६॥

बन्धं विबन्धं च भित्त्वा भिन्नतां नीत्वा अधो नयेत् अधः करोति वातादिकमिति शेषः, तेन प्रतिलोमादनुलोमं करोतीत्यर्थः। तच्चानुलोमनं ज्ञेयम्, अनुलोमनं वातादीनामधःप्रवर्त्तनं मरगुणत्वात्; यथा हरीतकी। सैवानुलोमिनी प्रसिद्धैव। बन्धमिति दोषाणां परस्परग्रथितत्वम्। एके वातमूत्रपुरीषादीनामप्रवृत्तिरूपं विबन्धमाहुः॥ ३॥

अथ स्रंसनमाह, पक्तव्यमिति।—यद्द्रव्यं मलादिकम् अपक्त्वैव तेषां पाकमकृत्वा अधो नयति अधः पतनं करोति तत् स्रंसनं स्यात्, यथा कृतमालकः। कीदृशं मलादिकम्? इत्याह, पक्तव्यमिति।—पच्यमानम् अत एव कोष्ठे आश्लिष्टं, कोष्ठे इति पाचकस्थाने, आश्लिष्टमित्याश्रितम्। केचित् कोष्ठशब्देन हृदयादीन्यपि गृह्णन्ति तथा हि—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृद्‌ण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते॥" इति। एतदभिप्रायेणापि शोधनमस्याहुः॥ ४॥

अथ भेदनमाह, मलेति।—यन्मलादिकमबद्धं मलबद्धं वा, अत एव मलैर्दोषैश्च कृत्वा पिण्डितं परिपाकात् पिण्डीभूतम्, ईदृशं मलादिकं भित्त्वा स्थानात् अस्थाल्याधः पातयति तद्भेदनं, ज्ञातव्यमिति शेषः। यथा कट्की। बद्धं द्विविधं, शुष्कं ग्रथितञ्च। तत्र शुष्कं पुरीषविषयं ग्रथितं दोषादीनाम्। अबद्धमपि द्विविधं, तथा एकं द्रवरूपं पुरीषविषयं स्वतन्त्रमेकं मलादिकमिति। मलोऽत्र दोषः। आदिग्रहणात् रक्तदूषितादीनामपि ग्रहणम्। भित्त्वेति।—तत्पुरीषं भित्त्वा विदार्याधः पातयति, द्रव्यमिति शेषः॥ ५॥

अथ रेचनमाह, विपक्वमिति।—यद्द्रव्यं विप्रकृतमपक्वं वा मलादि दोषादिकं

वमनम्।—

अपक्वं पित्तश्लेष्माणं बलादूर्द्ध्वं नयेत्तु यत्।
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा ॥७॥

शोधनम्।—

स्थानाद्बहिर्नयेदूर्द्ध्वमधो वा मलसञ्चयम्।
देहं तच्छोधनं यत् स्याद्देवदालीफलं यथा ॥८॥

द्रवता नयेत् द्रवभावं करोतीत्यर्थः; न केवलं द्रवतां नयेत् रेचयत्यपि च तद्रेचनं ज्ञेयम। यथा त्रिवृता निसोत। यतो विरेचनद्रव्याणि गर्वम्बुगणभूयिष्ठानि तानि गुरुत्वादधो गच्छन्ति। गुरुत्वादिति गुरुत्वं चेह प्रभावविशेषाधिष्ठितं त्रिवृतादिकं समवेतं ग्राह्यं, न तु गुरुत्वमात्रम। अन्यथा मत्स्यपिष्टान्नमसूरादीनां विरेचकत्वं स्यात। अम्बुगुणभूयिष्ठमित्यर्थः, प्रभावात्। मलादिकमिति आदिग्रहणात् दुष्यदूषितादीनामेव सङ्ग्रहः ॥ ६ ॥

अथ वमनमाह, अपक्वमिति।—यद्द्रव्यमपक्वं पाकमगच्छन्तं पित्तश्लेष्माणं अन्नं मिश्रितं वा बलात् हठात्कारेण ऊर्द्धं नयेत मुखे कृत्वा वामयेत् इत्यभिप्रायः, तद्वमनं विज्ञेयं, यथा मदनस्य फलम्। बलादिति प्रभावसूचकशब्दः, यतो वमनद्रव्याणि वाय्वग्नि गुणभूयिष्ठानि, वाय्वग्नी हि लघुत्वात्तु तान्यूर्द्धमुत्क्षिपन्ति। लघुत्वं चेह प्रभाव-विशेषाधिष्ठितं मदनफलादिद्रव्यसमवेतं ग्राह्यं, न तु लघुत्वमात्रम्, अन्यथा कपिञ्जल लावादीनां च वामनीयत्वं स्यात। ननु कफस्य वमनं पित्तस्य विरेचनं प्रशस्त मिति प्रसिद्धिः, तत कथं पित्तस्य वमनमिति? उच्यते—अपक्वपित्तस्य वमनादेव निर्हरणं बोद्धव्यम्। तच्च दृश्यते हि कटुतिक्तहरित्पीताम्लवमनत्वेन, यतः पित्तं दग्धमम्लतामुपैतीति। अत एवाम्लपित्तचिकित्सायामादौ वमनमित्युदीरः ॥ ७ ॥

अथ शोधनमाह, स्थानादिति।—यद्द्रव्य स्थानात् प्रकुपितस्थानात मलसञ्चयं दोषादीनां स्वस्थानादूर्द्धमधो वा बहिर्नयेत् बहिः करोति तद्देहे शरीरे शोधनं कथितम। यथा देवदालीफलम। देवदाली बन्दीसंज्ञा। ऊर्द्धं मुखनासिकाभ्याम्, अधः पायुमेढ्रमार्गेण। देहग्रहणेन शोणितावसेचनमपि गृह्यते शोधनत्वात्। यतः शोधनं द्विविधमाचक्षते, बाह्याश्रयमभ्यन्तराश्रयञ्च। तत्र बहिराश्रयं शस्त्र क्षाराग्निप्रलेपादयः। अभ्यन्तराश्रयं तु चतुःप्रकारं वमनरेचनास्थापनशोणित-

छेदनम्।—

श्लिष्टान् कफादिकान् दोषानुन्मूलयति यद्बलात्।
छेदनं तद्यथा क्षारा मरिचानि शिलाजतु ॥९॥

लेखनम्।—

धातून् मलान् वा देहस्य विशोष्योल्लेखयेच्च यत्।
लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः ॥१०॥

मोचणञ्च। एके शिरोविरेचनं मन्यन्ते; तच्चात्र वमनान्तर्भूतं बोद्धव्यम्, ऊर्द्धशोधनत्वात् ॥ ८ ॥

अथ छेदनमाह, श्लिष्टानिति।—यद्द्रव्यं श्लिष्टान् सञ्चितान्, "परस्परग्रथितान्" इत्येके, "अत्यर्थं कुपितान्" इत्यपरे, कफादिकान् दोषान्, आदिग्रहणेन वातपित्त-शोणितक्रमिग्रहणं, न तु दूष्यदूषितादिकं, यतः दोषानिति पुनर्ग्रहणं क्रमिशोणितयोरपि दोषसंज्ञा। तदुक्तं सुश्रुते—"नर्ते देहः कफादस्ति न पित्ताच्च न मारुतात्। शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते ॥" (सु० सू० २१ अ०) इत्यादि प्रति-पादितत्वात्। क्रमिस्तु गुग्गुलुकल्पे यथा "पञ्चादि दोषान् शमयेत्" इत्यादिप्रश्ने क्रमिदोष-निबर्हणादित्यादिना, तन्मते क्रमेस्तु दोषसंज्ञा। बलादिति स्वशक्तितः, उन्मूलयति उच्छेदयति, तच्छेदनं ज्ञेयम्। यथा क्षारा यवक्षारादयः, मरिचानीति बहुवचनत्वेन श्वेतमरिचमपि ग्राह्यम्। ननु वातादिक्रमं परित्यज्य कफादिक्रमेण श्लोकः कस्मादिह कृतः? तदुच्यते—देहस्य ऊर्द्धमूलत्वमधःशाखत्वं प्रतिपादितं पूर्वाचार्य्यैः, ऊर्द्धभागे च कफाधिष्ठानत्वात्ततोऽनेन कफ एव प्रथमं दर्शितः। तदुक्तम्—"ऊर्द्धमूलमधःशाखं विस्तृणं पञ्चदैवतम्। चैतन्याधिष्ठितं विद्वान् यो वै वेद स वेदवित्" ॥ ९ ॥

अथ लेखनमाह, धातूनिति।—यद्द्रव्यं धातून् रसादीन् मलान् वा; अत्र "मलान् वा" यद्ग्रहणं कृतं, तन्मनोदोषव्यवच्छेदार्थम्; यतो मनोदोषप्रतीकारमन्य-द्रव्यस्तीति। तथा हि—"धीर्धृतिर्ज्ञानविज्ञानं मनोदोषौषधं परम्" इति। के ते मनोदोषाः? इत्युत्तरमाह—"रजस्तमश्च मानसौ द्वौ च दोषावुदाहृतौ" (वा० सू० १ अ०) इत्यादि। एके—"लेखनं तद्यथा क्षौद्रनीरे कोष्णं वचा यवाः" इति पठन्ति। तत्र—क्षौद्रनीरे मध्वम्बुनी मिलिते इति योगो लेखनसंज्ञः, कोष्णमित्युष्णपानीयं "कं शिरो जलमाख्यातम्" इति वचनात्। उष्णञ्च तत् कञ्चेति कोष्णम्, अल्पाक्षरत्वात् पूर्व-

ग्राहि।—

दीपनं पाचनं यत् स्यादुष्णत्वाद्द्रवशोषकम्।
ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पली ॥११॥

स्तम्भनम्।—

रौक्ष्याच्छैत्यात् कषायत्वाल्लघुपाकाच्च यद्भवेत्।
वातकृत् स्तम्भनं तत् स्याद्यथा वत्सकटुण्टुकौ ॥१२॥

रसायनम्।—

रसायनञ्च तज्ज्ञेयं यज्जराव्याधिनाशनम्।
यथाऽमृता रुदन्ती च गुग्गुलुश्च हरीतकी ॥१३॥

---

निपातः। अयं पाठः स्वकपोलकल्पनया केनापि लिखितः, यतो बहुपुस्तकेषु न दृश्यते। यथा इति बहुवचनग्रहणेन एवं-गुणविशिष्टा अन्येऽपि बोद्धव्याः ॥ १० ॥

अथ ग्राहिलक्षणमाह, दीपनमिति।—यद्द्रव्यं दीपनमग्निकरं, पाचनमामादीनां, द्रवशोषकमिति द्रवरूपाणां दोषधातुमलादीनां शोषकमित्यर्थः, उष्णत्वात् उष्णवीर्य्यत्वात द्रवशोषकमिति योज्य, दीपनादिकार्य्यकरत्वेन उपलक्षितमिति भावः, तद्ग्राहि विज्ञेयम्। यथा शुण्ठी, जीरकं, गजपिप्पली; गजपिप्पली चव्यफलम्। ननु सङ्ग्राहकमनिलगुणभूयिष्ठं, यतोऽनिलस्य शोषणात्मकत्वात्, तत कथमुष्णत्वादिति? उच्यते—पक्वामग्राहकत्वेन द्विविधं हि सङ्ग्राहकत्वं, तत्र यत् ग्रहण्यामामं सम्पाच्य वह्निं कृत्वा तत्रस्थं द्रवञ्च शोषयित्वा स्तम्भनं करोति तद्ग्राहकं ज्ञेयम्। यद्द्रव्यमतीसारादौ पक्वमलादिकं संस्तभ्य सङ्ग्रहं करोति तच्छीतग्राहकं ज्ञेयम्, एतदनिलगुणभूयिष्ठमित्यदोषः ॥ ११ ॥

अथ च तदैव स्तम्भनमाह, रौक्ष्यादिति।—यद्द्रव्यं रौक्ष्यात् रूक्षगुणत्वात्, शैत्यादिति शीतवीर्य्यत्वात्, कषायत्वादिति कषायरसत्वात्, लघुपाकाच्च लघुपरिपाकात् वातकृद्भवति तत् स्तम्भनं स्यात्। वातगुणसाधर्म्यं हेतुचतुष्टयम्। अनिलस्य शोषणात्मकत्वेनानिलगुणभूयिष्ठं द्रव्यं स्तम्भनं भवति इत्यभिप्रायः। यथा वत्सक-टुण्टुकौ, यथेति दृष्टान्तत्वेनोपदर्शितम्; वत्सकः कुटजः। टुण्टुकः श्योनाकः। वातकृदित्यनेन कोष्ठवायोर्विष्टम्भकः, तस्मात् तद्द्रव्यं स्तम्भनं भवति इत्यर्थः ॥ १२ ॥

अथ रसायनमाह, रसायनञ्चेति।—यद्द्रव्यं जराव्याधिनाशनं भवति तद्रसायनं ज्ञेयं, रसादीनां धातूनामयनमाप्यायनरूपं रसायनम्। यथा—अमृता गुडूची,

वाजीकरणम् ।—

यस्माद्द्रव्याद्भवेत् स्त्रीषु हर्षो वाजीकरञ्च तत् ।
यथा नागबलाद्याः स्युर्वीजञ्च कपिकच्छुजम् ॥१४॥

शुक्रलम् ।—

यस्माच्छुक्रस्य वृद्धिः स्याच्छुक्रलञ्च तदुच्यते ।
यथाऽश्वगन्धा मुषली शर्करा च शतावरी ॥१५॥

शुक्रस्य प्रवर्त्तकं जनकञ्च ।—

दुग्धं माषाश्च भल्लात-फलमज्जाऽऽमलानि च ।
प्रवर्त्तकानि कथ्यन्ते जनकानि च रेतसः ॥ १६॥

---

कटल्ली शाकभेदः पश्चिमे अतीव विख्यातः । गुग्गुलुः * शालनिर्य्यासः प्रसिद्धः । हरीतकी प्रसिद्धा । जरा वार्द्धक्यं, व्याधयो ज्वराद्यो रोगा ग्राह्याः । ननु व्याधिग्रहणेन जराग्रहणं, तत् कथमत्र जरा पृथगभिहिता? उच्यते—जरा स्वाभाविकी ज्ञेया, स्वभावकथनत्वेन पृथगभिधानमित्यदोषः ; यतः सन्ततरूढ़ं स्वभाव वद्भवतीति ॥ १३ ॥

अथ वाजीकरणमाह, यस्मादिति ।—यस्माद्द्रव्यात् स्त्रीषु स्त्रीपुरुषयोः (?) हर्ष-कामशक्तिसुरतसुखं भवेत् तद्वाजीकरं ज्ञातव्यम् । यथा नागबलाद्याः स्युरिति —नागबला गाङ्गेरुकी ; आदिशब्दात् जातिफलाहिफेनभङ्गाप्रभृतीनां ग्रहणम् । कपिकच्छुवीजमपि वाजीकरणं, कपिकच्छुर्वानरी । द्विविधदृष्टान्तेनात्र द्विविधं वाजीकरणं सूचितम् ; एकं वीर्य्यस्तम्भनरूपम्, अपरं वीर्य्यवर्द्धनमित्यनेन पौनरुक्त्यस्याप्यदोषः ॥ १४ ॥

अथात्र तदेव वीर्य्यकरद्रव्यं प्रकटयन्नाह, यस्मादिति ।—शुक्रलमिति शुक्रवृद्धिकरम् । शेषं सुबोधम् ॥ १५ ॥

अथ शुक्रस्य प्रवर्त्तकानि जनकानि च द्रव्याण्याह, दुग्धमिति ।—रेतसः शुक्रस्य दुग्धादीनि द्रव्याणि प्रवर्त्तकानि कथ्यन्ते, न केवलं प्रवर्त्तकानि, उत्पादकानि

* शालशब्दोऽत्र सामान्यतया वृक्षवाचीति ज्ञेयं, न तु शालाख्यविशेषवृक्षवाची, तन्निर्य्यासस्य रालसंज्ञकत्वात् । "शालः पादपमात्रे स्यात् प्राकारे सर्जपादपे" इति मेदिनी ।

शुक्रस्य प्रवर्त्तनरेचनस्तम्भनशोषणकारकाणि।—

प्रवर्त्तनी स्त्री शुक्रस्य रेचनं बृहतीफलम्।
जातीफलं स्तम्भकञ्च शोषणी च हरीतकी ॥१७॥

सूक्ष्मम्।—

देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत् सूक्ष्ममुच्यते।
तद्यथा सैन्धवं चौद्रं निम्बतैलं रुवूद्भवम् ॥१८॥

व्यवायि।—

पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति।
व्यवायि तद्यथा भङ्गा फेनञ्चाहिसमुद्भवम् ॥१९॥

च कथ्यन्ते प्रभावात्। माषोऽन्नविशेषः। आमलानीति आमलकफलानि। शेषं प्रसिद्धम् ॥ १६ ॥

वाजीकरणानामौषधानां विशेषानाह, प्रवर्त्तनीति।—शुक्रस्य वीर्य्यस्य प्रवर्त्तनी प्रकटकारिणी स्त्री कथितेत्यर्थः। रेचनं बृहतीफलमिति शुक्रस्येत्यत्रापि सम्बन्धः। बृहती बृहत्कण्टकारिका तस्याः फलम्। स्तम्भकमवरोधकरं जातीफलं भवति, अत्रापि वीर्य्यस्येति सम्बन्धः। शोषणी हीनकारिणी हरीतकी कथिता, चकारादत्रापि शुक्रस्येत्यर्थः। एके "शोषणी च हरीतकी" इत्यस्य स्थाने "कालिङ्ग क्षयकारि च" इति पठन्ति व्याख्यानयन्ति च—"कालिङ्गं फलवर्त्तुलम्" इति ॥ १७ ॥

अथ सूक्ष्मद्रव्यमाह, देहस्येति।—यद्द्रव्यं देहस्य शरीरस्य सूक्ष्मच्छिद्रेषु रोमकूप प्रभृतिषु विशेत् प्रवेशं करोति तत् सूक्ष्ममुच्यते; यथा सैन्धवादिकम्। सूक्ष्मो गुण-विशेषः, स्रोतोऽनुसरणशीलत्वात्। सैन्धवं प्रसिद्धम्। चौद्रं मधु। निम्बतैलं निम्बस्य तैलञ्च; यद्वा—निम्बस्य तैलं रुवूद्भवं तैलञ्च, रुवूद्भवमेरण्डसम्भवम् ॥ १८ ॥

अथ व्यवायिद्रव्यमाह, व्यवायीति।—व्यवायीति गुणविशेषः अपक्वमेवाखिलं देहं व्याप्नोति पश्चान्मद्यविषवत् * पाकं याति। एवं भङ्गा, अहिफेनञ्च, अहिफेनम् "आफु" शब्दवाच्यम्। अन्ये तु "तदभावाय (?) + कल्पते" इति पठन्ति। तत्रापि—स्थितये कल्पते मोहमथो वा प्रवर्त्तते इति स एवार्थः। अन्ये पुनर्भाव-

* "मद्यविषयवत्" इत्यत्र "मद्यविषवत्" इति पाठः सङ्गतः। एवमग्रेऽपि।

+ मन्ये, प्रमादात् "ततो भावाय" इति पाठस्थले "तदभावाय" इति पाठ. सन्निविष्टोऽभूत्, वक्ष्यमाणव्याख्याऽसङ्गतेरिति।

विकाशि ।—

सन्धिबन्धांस्तु शिथिलान् यत् करोति विकाशि तत् ।
विश्लेष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवाः ॥ २० ॥

मदकारि ।—

बुद्धिं लुम्पति यद्द्रव्यं मदकारि तदुच्यते ।
तमोगुणप्रधानञ्च यथा मद्यं सुरादिकम् ॥ २१ ॥

शब्दमभिप्रायार्थकमिच्छन्ति ; तत्र—नियतद्रव्यप्रभावेणात्मप्रत्ययनुरूपं तद्द्रव्यं मद्य-विषयवत् (?) विशेषाभिप्रायाय कल्प्यते इत्यर्थः ॥ १९ ॥

अथ विकाशिद्रव्यस्यापि किञ्चिद्वैदं दर्शयन्नाह, सन्धिबन्धानिति ।—यद्द्रव्यं सन्धिबन्धान् शिथिलीभूतान् करोति तद्विकाशि बोद्धव्यं, विकाशि इत्यपि गुणविशेषः ; न केवलं सन्धिबन्धान् शिथिलान् करोति, किन्तु धातुभ्य ओजो बल विश्लेष्य विभज्य, पाकं गच्छति इत्यध्याहारः, धातुशैथिल्यमपि करोति इत्यभिप्रायः । चकारादपक्वमेवेत्यत्रापि सम्बन्धः । क्रमुककोद्रवा इति—क्रमुकं पूगफलं, कोद्रवं कुधान्यविशेषः ; अतः क्रमुककोद्रवा मदकरा ज्ञेयाः, धातुशैथिल्यात् । ओजो बलमिति । सुश्रुतेन तदुक्तं—"रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते" ( सु० सू० १५ अ० ) अतः,—"देहः सावयवस्तेन व्याप्तो भवति देहिनाम्" ( सु० सू० १५ अ० ) इति । सन्धिप्रभृतीनां शिथिलत्वेन श्रमाणां (?) * चोत्पद्यते, तेन ओजःक्षयो भवतीत्यभिप्रायः । अत एवाह कश्चित् —"अभिघातात् क्षयात् कोपात् ध्यानाच्छोकाच्छ्रमात् क्षुधः । ओजः सङ्क्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ॥" ( सु० सू० १५ अ० ) इति । अन्ये तु सविशेषो (?) † व्यवायी तीक्ष्ण-वशेषा विकाशीति ब्रुवते, तन्न सर्वमतम् ॥ २० ॥

अथ मदकारिद्रव्यस्य लक्षणानि दर्शयन्नाह, बुद्धिमिति ।—यद्द्रव्यं बुद्धिं ज्ञानविषयं लुम्पति आच्छादयति तन्मदकारि कथ्यते, अत एव तमोगुणप्रधानं तमोगुणबहुलमित्यर्थः । यथा सुरादिकं मद्यादिकम् । बुद्धिस्तु मेधाधृति-स्मृतिमतिप्रतिपत्तिषु वर्त्तते । एतेषां लक्षणं प्रसङ्गादुच्यते, तद्यथा—मेधा

* श्रमादिकम् इति पाठः सङ्गतः ।

† मन्ये, "सर्वविशेष." इति पाठोऽत्र भाव्यः, "सविशेषः" इत्यस्य निरर्थकत्वात् ।

जीवितहरम्।—

व्यवायि च विकाशि स्यात् सूक्ष्मं छेदि मदावहम्।
आग्नेयं जीवितहरं योगवाहि स्मृतं विषम् ॥२२॥

प्रमाथि।—

निजवीर्य्येण यद्द्रव्यं स्रोतोभ्यो दोषसञ्चयम्।
निरस्यति प्रमाथि स्यात्तद्यथा मरिचं वचा ॥२३॥

---

ग्रन्थाकर्षणसामर्थ्यम्। धृतिः सन्तुष्टिः, अन्ये "नियमात्मिकां बुद्धिम्" आहुः। स्मृतिः पूर्वानुभूतस्य स्मरणम्, "अर्थधारणाशक्तिः" इत्यन्ये। मतिरनागतविषयोपदेशः, "त्रिकालविषया बुद्धिः" इत्यन्ये। प्रतिपत्तिरर्थावबोधप्रागल्भ्यमिति। सुरादिकमित्यादि ग्रहणात् सर्वे मद्यविकारा गृह्यन्ते। ननु, मद्यन्तु बुद्धिस्मृतिवाग्विचेष्टादिकरमुक्तम्; तदुक्तं—"बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्द्धनश्च। सम्पाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि॥" (मा० नि० मदात्यय) तत् कथं बुद्धिलोपकरमभिहितम्? उच्यते—मद्यस्य अवस्थाः पानावस्थाः कथिताः; तत्र—प्रथमो मदः बुद्ध्यादिकं करोति, शेषास्तु बुद्ध्यादिकं लुम्पन्तीत्यदोषः। तदुक्तं माधवेन—"अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः। आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन॥" (मा० नि० मदात्यय) इत्यादि॥ २१॥

अथ प्राणहरद्रव्यमाह, व्यवायि चेति।—यद्द्रव्यं व्यवाय्यादिगुणयुक्तं भवति, तज्जीवितहरं प्राणहरं स्मृतं कथितम्; यथा विषं, तदेव योगवाहि स्मृतमित्यर्थः। व्यवायीति—समस्तदेहं व्याप्य पश्चात् पाकं गच्छतीति व्यवायी गुणः। विकाशी गुणश्च सकलदेहं व्याप्य धातुशैथिल्यं करोति। सूक्ष्मो गुणस्तु सूक्ष्मात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः। छेदनं मलोदोषधातुमलादीन् बलादुन्मूलयति तच्छेदि कथितम्। मदावहमिति मदकारकम्। आग्नेयमित्याग्नेयगुणभूयिष्ठम्। योगवाहीति रसादिषु द्रष्टव्यम्॥ २२॥

अथ प्रमाथिद्रव्यमाह, निजवीर्य्येति।—यद्द्रव्यं निजवीर्य्येण स्वप्रभावेण कृत्वा स्रोतोभ्यः कर्णमुखनासादीनाम् अन्यविवरेभ्यश्च वा दोषबाहुल्यं निरस्यति तत् प्रमाथिसंज्ञं कथितम्। यथा मरिचं वचा। दोषशब्दोऽत्र व्याधिष्वपि वर्त्तते कारणे कार्य्योपचारात्, तेन व्याधिसञ्चयमपीत्यर्थः॥ २३॥

अभिष्यन्दि ।—

पैच्छिल्याद्गौरवाद्द्रव्यं रुद्धा रसवहाः शिराः ।
धत्ते यद्गौरवं तत् स्यादभिष्यन्दि यथा दधि ॥२४॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां सूत्रस्थाने दीपनपाचनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

इति सूत्रस्थानम् ।

---

## पञ्चमोऽध्यायः ।

### अथ कलादिकाख्यानाध्यायः ।

कलास्वरूपम् ।—

*( धात्वाशयान्तरस्थस्तु यः क्लेदस्त्वधितिष्ठति ।
देहोष्मणा विपक्वो यः सा कलेत्यभिधीयते ॥ )

कलादीनां सङ्ख्यानिर्देशः ।—

कलाः सप्ताशयाः सप्त धातवः सप्त तन्मलाः ।
सप्तोपधातवः सप्त त्वचः सप्त प्रकीर्त्तिताः ॥ १ ॥

---

अथाभिष्यन्दिलक्षणमाह, पैच्छिल्यादिति ।—यद्द्रव्यं पैच्छिल्यात् पिच्छिलगुणयोगात्, गौरवात् गुरुगुणयोगात्, गुरुपाकस्वभावाद्वा रसवहाश्चतुर्विंशतिसङ्ख्याकाः शिराः रुद्धा संरुध्य गौरवं गुरुतां धत्ते तदभिष्यन्दि कथितम् । यथा दधि । अभिष्यन्दीति श्लेष्मप्रकोपीति रूढ़िः गुणसाधर्म्यात्, श्लेष्माऽपि पिच्छिलगौरवादिगुणयुक्तः ॥ २४ ॥

इति श्रीवात्स्यान्वयप्रकाशवैद्यश्रीभावसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां प्रथमखण्डे दीपनपाचनादिविधिरध्यायश्चतुर्थः ॥ ४ ॥

---

पूर्वमुक्तं कलादिकाख्यान इति, अतस्तद्ग्रन्थयन्नाह, कला इति ।—कलादि

* एके श्लोकमिमं प्रक्षिप्तं वदन्ति ।

त्रयो दोषा नवशतं स्नायूनां सन्धयस्तथा।
दशाधिकञ्च द्विशतमस्थ्नाञ्च त्रिशतं मतम् ॥२॥
सप्तोत्तरं मर्मशतं शिराः सप्तशतानि च।
चतुर्विंशतिराख्याता धमन्यो रसवाहिकाः ॥३॥
मांसपेश्यः समाख्याता नृणां पञ्चशतं बुधैः।
स्त्रीणाञ्च विंशत्यधिकाः कण्डराश्चैव षोड़श ॥४॥
नृदेहे दश रन्ध्राणि नारीदेहे त्रयोदश।
एतत् समासतः प्रोक्तं विस्तरेणाधुनोच्यते ॥५॥

---

शतानामेतन्नामसङ्ख्याकथनम्। समासतः सङ्क्षेपात्, प्रोक्तं कथितमित्यन्वयः। तद्यथा—कलाः सप्तसङ्ख्याकाः, ताश्च धात्वाशयान्तरमर्य्यादाः। तथा हि—"धात्वाशयान्तरक्लेदस्तु यः क्लेदस्त्वभितिष्ठति। देहोष्मणा विपक्कश्च सा कलेत्यभिधीयते॥" इति। आशयाः सप्त, आशयाः स्थानानि, तानि कोष्ठशब्देनोपलक्षितानि : तथा हि—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते॥" (सु० चि० २ अ०) इति। धातवः सप्त कथिताः, धातवो रसादयः, ते "रसाऽसृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः" (वा० सू० १ अ०) इति। सप्त तन्मला धातुमलाः, तेषां धातूनां प्रतिपाकतः कफादिसंज्ञा इत्यर्थः। सप्तोपधातव इति—धातुसमीपे भवा उपधातवः, यथा गोमयादिभ्यो वृश्चिकादिसम्भवः, ते स्तन्यरजःप्रभृतयः। त्वचः सप्त प्रकीर्त्तिता इति—शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। त्रयो दोषाः वातपित्तकफसंज्ञाः, धात्वादीन् दूषयन्ति इति। सन्धिरवयवादीनां सन्धानं, ग्रन्थिरिति लोके। अत्र चकारग्रहणात् दशोत्तरशतद्वयादपि अधिका बोद्धव्याः। तदुक्तं—"ज्ञेयं चिकित्सकैर्नूनं सन्धीनाञ्च शतद्वयम्। दशोत्तरं ह्यसौ हे निजगादाश्विनन्दनः॥" इति। अस्थ्नाञ्च त्रिशतं मतमिति—अस्थि सारभूतं शरीरस्याधाररूपञ्च कथितम्। सप्तोत्तरं मर्मशतमिति—मर्माणि जीवस्याधाररूपाणि, तानि सप्ताधिकशतसङ्ख्याकानि। तथा शिराः सप्त शतानि चेति—दोषधातुजलवाहिन्यः शिराः कथिताः। चकारादत्र न च सप्तशतं नियतम् अन्याश्च सन्तीत्येके भाषन्ते; तदुक्तं—"द्विसप्ततिसहस्राणि नाड़ीनां तद्विनिर्गताः। ताभ्यो विनिर्गता नाड्यस्ताभ्योऽप्यान्याः पुनः पुनः॥ तावत्यो नाड़िका देहे यावन्तो रोमकूपकाः। स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखा-

कलाना विवरणम्।—

मांसासृङ्मेदसां तिस्रो यकृत्प्लीह्नोश्चतुर्थिका।
पञ्चमी च तथाऽन्त्राणां षष्ठी चाग्निधरा मता॥
रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः॥६॥

प्रतानवत्॥" इति। धमन्यो नाडीविशेषाश्चतुर्विंशतिसङ्ख्याकाः कथिताः, ताश्च रसवहा ज्ञेयाः, शिरा धमन्यो नाड्यश्च परस्परपर्यायवाचका ज्ञेयाः, भिन्नत्वमासां कार्य्यत्वात्। मांसपेश्य इति—नृणां पुरुषाणां मांसपेश्यः पञ्चशतसङ्ख्याकाः समाख्याताः, बुधैरिति शेषः, पेशी दीर्घाकृतिमांसखण्डः। अपरे चतुरस्रा पेशीत्युच्यते। तथा चोक्तं—"चतुरस्रा भवेत् पेशी हस्वः पिण्डो घनः स्मृतः। शाल्मलीमुकुलाकारमर्बुदं परिचक्षते॥" इति। स्त्रीणां विंशत्यधिका इत्यनेन मांसपेश्यः कथिताः, अधिकाश्च पञ्चशतात्, तेन विंशत्यधिकपञ्चशतमांसपेश्यः स्त्रीणां भवन्तीत्यभिप्रायः। विंशतिविवरणमाह—स्तनयोः पञ्च पञ्च, चतस्रश्च योनौ, गर्भमार्गे तिस्रः, गर्भाशये च तिस्र इति। कण्डराश्चैव षोडशेति—कण्डरा महास्नायुः षोडशेति षोडश सङ्ख्याकाः; तद्यथा—चतस्रः पादयोः, हस्तयोश्चतस्रः, ग्रीवायां चतस्रः, पृष्ठे चतस्रः। नृदेहे दश रन्ध्राणि नारीदेहे त्रयोदशेति—नृदेहे पुरुषशरीरे दशसङ्ख्याकानि रन्ध्राणि छिद्राणि, सन्तीत्यध्याहार्य्यम्। नारीदेहे स्त्रीशरीरे त्रयोदश रन्ध्राणीति भावः, तान्यग्रे वक्ष्यमाणानि ज्ञातव्यानि। एतत् सर्वं कलादिकं समासतः सङ्क्षेपात् प्रोक्तं कथितमित्यर्थः॥ १—५॥

अथ "विस्तरेणाधुनोच्यते" इत्युक्तं प्राक्, इदानीं विस्तरमेतेषां दर्शयन्नाह, मांसेति।—मांसासृङ्मेदसां तिस्रः कलाः, तासां संज्ञा यथा—मांसधरा, रक्तधरा, मेदोधरा इति। चतुर्थिका यकृत्प्लीह्नोः सा श्लेष्मधरा यकृत्प्लीह्नोर्मध्ये इत्यभिप्रायः। पञ्चमी कला चान्त्राणां, सा पुरीषधरा। षष्ठी चाग्नेः, सा पित्तधरा। सप्तमी कला रेतोधरा इति सप्त कलाः स्मृताः कथिताः। तदुक्तं सुश्रुते—"तासां प्रथमा मांसधरा नाम, यस्यां मांसे शिरास्नायुधमनीस्रोतसां प्रताना भवन्ति। यथा बिसमृणालानि विवर्द्धन्ते समन्ततः। भूमौ पङ्कोदकस्थानि तथा मांसे शिरादयः॥" (सु० शा० ४ अ०) इति। ननु रसाद्रक्तं ततो मांसमित्यादि क्रमः, तत्कथं प्रागेव मांसधरा कथिता? उच्यते—शरीरपोषणार्थं रसादिक्रमोऽयं, न तु धारणे; अत एव मांसधरत्वेन पूर्वं प्रतिपाद्य कला निर्दिष्टाः परम्परानुषङ्गात्। "द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतः, तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति। वृक्षात्

आशयानां विवरणम्।—

श्लेष्माशयः स्यादुरसि तस्मादामाशयस्त्वधः।
ऊर्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः॥७॥
तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः।

यथाभिप्रहतात् चौरिणः चौरमावहेत्। मांसादेवं च तात् च्छिन्नं शोणितं सम्प्रसिच्यते॥" इति। "तृतीया मेदोधरा नाम ; मेदो हि सर्वभूतानामुदरस्थमण्वस्थिषु च, महत्सु च मज्जा भवति। स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः। अथेतरेषु सर्वेषु सरक्तं मेद उच्यते॥" इति। "चतुर्थी श्लेष्मधरा नाम सर्वसन्धिषु प्राणभृतां भवति। स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्त्तते। सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा॥" इति। "पञ्चमी पुरीषधरा नाम याऽन्तःकोष्ठे मलमभिविभजते पक्वाशयस्था। यकृत्समन्तात् कोष्ठञ्च तथाऽन्त्राणि समाश्रिता। उण्डुकस्थं विभजते मलं मलधरा कला।" (सु० शा० ४ अ०) इति। "षष्ठी पित्तधरा नाम, या चतुर्विधमन्नपानमुपयुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति। अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम्। तज्जीर्य्यति यथाकालं शोषितं पित्ततेजसा॥" (सु० शा० ४ अ०) इति। "सप्तमी शुक्रधरा नाम या सर्वप्राणिनां सर्वशरीरव्यापिनी। यथा पयसि सर्पिस्तु गुडश्चेक्षुरसे यथा। शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः॥ द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः। मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते॥ कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा। स्त्रीषु व्यायच्छतश्चापि हर्षात् तत् सम्प्रवर्त्तते॥" (सु० शा० ४ अ०)॥ ६॥

इदानीं सप्ताऽऽशयानाह, श्लेष्माशय इति।—उरसि वक्षःस्थले श्लेष्माशयः, आशयोऽधिष्ठानं तत विशिष्टस्थानं कफस्येत्यर्थः। तस्मात् श्लेष्माशयादधः आमाशयः, आमोऽपरिपक्वाहारः तस्याऽऽशयः स्थानमित्यर्थः, स एव स्तनान्तरात् किञ्चिदधो ज्ञातव्यः ; तथा चोक्तं—"नाभिस्तनान्तरं जन्तोरामाशय उदाहृतः॥" (च० वि० विविधकुचीय०) नाभेरूर्द्ध्वमग्न्याशयः, स एव ग्रहणीस्थानं कथितम्। "अग्न्यधिष्ठानमन्नस्य ग्रहणात् ग्रहणी मता। नाभेरुपरि सा ह्यग्निबलोपष्टम्भबृंहिता॥" (च० चि० ग्रहणी०) इति वचनात्। वामभागे व्यवस्थित इति सोऽप्यग्न्याशयस्तु नाभेर्वामभागे आश्रित इत्यर्थः ; वामभागे पुरुषस्य इति व्याख्यानं वा। तस्योपरि तिलं ज्ञेयं—तिलमित्यनेन क्लोम कथितं, तत् पिपासास्थानमित्यभिप्रायः। अत एव जलवाहिशिरामूलं तिलमित्युक्तमाचार्य्येण। एके—"तस्योपरि जलं ज्ञेयम्" इत्येवं पठन्ति व्याख्यानयन्ति च।

मलाशयस्त्वधस्तस्मात् वस्तिर्मूत्राशयस्त्वधः ॥
जीवरक्ताशयमुरो ज्ञेयाः सप्ताशयास्त्वमी ॥८॥
पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः।
धरा गर्भाशयः प्रोक्तः स्तनौ स्तन्याशयौ मतौ ॥९॥

धातूनां विवरणम्।—

रसासृङ्मांसमेदोऽस्थि-मज्जाशुक्राणि धातवः।
जायन्तेऽन्योऽन्यतः सर्वे पाचिताः पित्ततेजसा ॥१०॥

पूर्वपूर्वधातुभ्यः उत्तरोत्तरधातूनामुत्पत्तिः।—

* ( रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते।
मेदसोऽस्थि ततो मज्जा मज्जायाः शुक्रसम्भवः॥ )

तथा ह्युक्तम्—"अग्नेरूर्द्ध्वं जलं स्थाप्य तदन्नञ्च जलोपरि। अग्नेरधः स्वयं वायुः स्थितोऽग्निं धमते शनैः॥ वायुना धममानोऽग्निरत्युष्णं कुरुते जलम्। तदन्नमुष्णतोयेन समन्तात् पच्यते शनैः॥" इति। तदधः पवनाशय इति—तत् तस्याग्न्याशयस्याधः पवनाशयो वायोः स्थानमित्यर्थः, तस्य वायोः समान इति संज्ञा। मलाशयस्त्वधस्तस्मादिति—तस्य पवनाशयस्याधो मलाशयः, स च पक्वाशयः कथितः। तस्यैकदेशे वा विभक्तः मलाधारः उण्डुको विद्यते; अत एवोण्डुकात् पक्वाशयो भिन्नः इति। उण्डुकः पोटलकः इति लोके। चरके तु पुरीषाधार-शब्देनोण्डुकः प्रतिपादितः इति। वस्तिर्मूत्राशयस्त्वध इति—अत्रापि पवनाशयस्याधः इति सम्बन्धः। वस्तिः चर्मखल्लाटकाकारो मूत्राधारः, स च पक्वाशयसमीपे स्थितः। जीवरक्ताशय इति—जीवतुल्यं रक्तं, तस्याशयः स्थानं, तच्च "प्लीहा" इति प्रसिद्धं हृदयस्य वामभागाश्रितं भवति। अत एव जीवरक्ताशयमुर इति प्रतिपादितम्। ज्ञेयाः सप्ताशयास्त्वमीति—अमी पूर्वोक्ताः सप्ताशया बोद्धव्याः। तदुक्तं वाग्भटेन—"ताः सप्त सप्त चाधारा रक्तस्याद्याः क्रमात् परे। कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः॥" ( वा० शा० ३ अ० ) इति। नारीणामाशयास्त्रय इति—पुरुषाशयेभ्योऽधिकाः स्त्रीणां त्रय एवाशया विज्ञेयाः, एको गर्भाशयः, द्वौ स्तन्याशयौ च। गर्भाशयस्तु पक्वाशयान्तरे वर्त्तते। स्तन्याशयौ क्षीराशयौ ॥ ७—९ ॥

अथ धातूनां सप्तसङ्ख्याविवरणं दर्शयन्नाह, रसेति।—रसादयः सर्वे धातवः पित्ततेजसा प्रतिधात्वग्निना पाचिताः परिपाच्यमाना अन्योऽन्यतः परस्परानुषङ्गात्

* क्वचित् श्लोकोऽयं पठ्यते।

मलानां विवरणम्।—

जिह्वानेत्रकपोलानां जलं पित्तञ्च रञ्जकम्।
कर्णविड्रसनादन्त-कक्षामेढ्रादिजं मलम्॥ ११॥
नखनेत्रमलं वक्त्रे स्निग्धत्वं पिडकास्तथा।
जायन्ते सप्तधातूनां मलान्येतान्यनुक्रमात्॥१२॥

मलानाम् अन्यविधविवरणम्।—

कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च।
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः॥१३॥

---

जायन्ते उत्पद्यन्ते इति भावः। तदुक्तं—"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्जायाः शुक्रसम्भवः॥" ( सु० सू० १४ अ० ) इति। परिणामस्त्रिविध एव धातूनां मलस्थूलाणुभागविभागेन भवति। तद्यथा—अन्नात् पच्यमानाद्विण्मूत्रं मलः, सारो रसः। रसादग्निपक्वात् मलः कफः, स्थूलो भागो रसः, सूक्ष्मभागो रक्तम्। रक्तादग्निपक्वात् मलः पित्तं, स्थूलभागः शोणितम्, अणुभागो मांसमिति। मांसादग्निपच्यमानात् मलः श्रोत्रनासाप्रजननादिस्रोतोमलः, स्थूलो भागो मांसं, सूक्ष्मभागो मेदः। ततोऽपि निजवह्निपच्यमानान्मलः स्वेदः, स्थूलोंऽशो मेदः, सूक्ष्मभागोऽस्थि। ततोऽपि पच्यमानात् मलः केशलोमश्मश्रूणि, स्थूलोऽस्थि, सूक्ष्मस्तु मज्जा। ततो मज्ज्ञः पावकपच्यमानादपि मलो नयनपुरीषत्वचां स्नेहः, स्थूलो भागो मज्जा, सूक्ष्मभागः शुक्रम्। ततः पुनः पच्यमानादपि मलो नोत्पद्यते, स हि सहस्रधाऽऽध्मातसुवर्णवत् स्थूलो भागः। शुक्रमेव (?) स्नेहभागः सूक्ष्मस्तेजोभूतं ओज इति॥ १०॥

इदानीं मलानाह, जिह्वेति।—सप्तधातूनां रसादीनाम् एतानि मलान्यनुक्रमात् जायन्ते; जिह्वानेत्रकपोलानां जलमिति—तेन जिह्वाजलं नेत्रजलम्। जलमत्र कफद्रवमेतद्रसस्य मलमिति भावः। रञ्जकं पित्तं रक्तस्य मलं, रञ्जकं रसस्य रागकरमित्युक्तत्वात्। कर्णविट् मांसस्य मलं, नासामलञ्चेत्यन्ये। रसनादन्तकक्षामेढ्रादिजं मलं मेदसः। आदिग्रहणात् स्वेदमपि केचित्, न सम्मत, यतः स्वेदस्तु उपधातुषु पठित एव। नखा इति अस्थ्नां मलम्। नखा इति बहुवचनेन केशलोमादीनां ग्रहणम्। नेत्रमलं वक्त्रस्निग्धता च मज्ज्ञो मलं, नेत्रमलं नयन-

उपधातूनां विवरणम् ।—

स्तन्यं रजश्च नारीणां काले भवति गच्छति ।
शुद्धमांसभवः स्नेहः सा वसा परिकीर्त्तिता ॥१४॥
स्वेदो दन्तास्तथा केशास्तथैवौजश्च सप्तमम् ।
इति धातूद्भवा ज्ञेयाः एते सप्तोपधातवः ॥१५॥

---

पुरीषम् । पिण्डिका इति—शुक्रस्य पिण्डिकाऽत्र यौवनोद्भवा । तत्रेति यस्मात् श्मश्रूण्यपि गृह्यन्ते, यतः आकण्ठाण्डकोषस्य पुंसः श्मश्रुपातात् श्मश्रु शुक्रमलमित्येके । अपरे षडेव मलान् यथाक्रमं कथयन्ति । ते तु नैवमलं वक्त्रस्निग्धत्वं पिण्डिकादिकञ्च मज्ज्ञो मलमिति व्याख्यानयन्ति । तदुक्तं—"किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः । पित्तं मांसस्य तु मलो खेषु स्वेदस्तु मेदसः ॥ नखश्मश्रूस्तु लोमाद्या मज्ज्ञः स्नेहोऽक्षिविट्त्वचः । प्रसादकिट्टे धातूनां पाकादेवंविधः स्मृतः ॥ शुक्रस्यातिप्रसन्नत्वान्मलाभाव इति स्मृतिः ॥" इति ॥ ११—१३ ॥

इदानीमुपधातूनामपि विवरणं दर्शयन्नाह, स्तन्यमिति ।—स्तन्यादयः सप्तोपधातवो धातूद्भवा बोद्धव्याः । स्तन्यं क्षीरं रसस्योपधातुः, रजश्चार्त्तवो धातुः ; एतद्द्वयञ्च स्त्रीणां काले समये भवति गच्छति च । तथा च रोमराज्यादयश्च विशिष्टा नारीणां कालान्तरेणाभिव्यक्तिं गच्छन्ति इति सम्बन्धः । चकारादिग्रहणात् स्तन्यार्त्तवादयो गृह्यन्ते । आर्त्तवमपि तन्त्रान्तरे यथा—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते । तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥" ( सु० सू० १४ अ० ) इति । शुद्धमांसभवः स्नेहो मांसस्योपधातुः, एष एव वसा कथिता । शुद्धमांसं स्थूलभावप्राप्तमांसमिति भावः, तत्रस्थो यः स्नेहः स एव च वसाशब्दवाच्यः, "मांसस्नेहो वसा मता" इति वचनात् । स्वेदो मेदस उपधातुः, स्वेदः प्रस्वेदः । दन्ता अस्थ्नामुपधातुः । केशा मज्ज्ञोपधातुः । ओजः शुक्रस्योपधातुः । धातूद्भवा इति धातूत्पन्नाः, तेषां परिपाकविषयत्वात् । क्वचिदेते तु मलान्तर्भूतत्वेन तत्रैव गणिताः । एते सप्तोपधातवः इत्यनेन सप्तोपधातवः नियता ज्ञेयाः । अन्यत्राप्युक्तं—"रसात् स्तन्यं ततो रक्तमसृजः स्नायुकण्डराः । मांसाद्वसा त्वचः स्वेदो मेदसः स्नायुसन्धयः ॥*

---

* चरके तु—"रसात् स्तन्यं ततो रक्तमसृजः कण्डराः शिराः । मांसाद्वसा त्वचः षट् च मेदसः स्नायुसम्भवः ॥" इतिमात्रपाठः परिदृश्यते ।

ओजःस्वरूपम्।—

ओजः सर्वशरीरस्थं शीतं स्निग्धं स्थिरं मतम्।
सोमात्मकं शरीरस्य बलपुष्टिकरं मतम्॥१६॥

त्वचां विवरणम्।—

ज्ञेयाऽवभासिनी पूर्वं सिध्मस्थानञ्च सा मता।
द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः॥१७॥
श्वेता तृतीया सङ्ख्याता स्थानं चर्मदलस्य च।
ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका॥१८॥
पञ्चमी वेदिनी ख्याता सर्वकुष्ठोद्भवा ततः।
विख्याता रोहिणी षष्ठी ग्रन्थिगण्डापचीस्थितिः॥१९॥
स्थूला त्वक् सप्तमी ख्याता विद्रध्यादेः स्थितिश्च सा।
इति सप्त त्वचः प्रोक्ताः स्थूला व्रीहिद्विमात्रया॥२०॥

---

अस्थि दन्तास्तथा मज्ज्ञः केशा ओजश्च सप्तमात्। धातुभ्यश्चोपजायन्ते तस्मात्ते उपधातवः॥"* इति॥१४।१५॥

ओजसो लक्षणमेतस्याग्रे पठन्ति केचित्, तद्यथा—ओजइत्यादि॥१६॥

ज्ञेयाऽवभासिनीति।—इति वक्ष्यमाणप्रकारेण, व्रीहिद्विमात्रया यवद्वयपरिमाणेन स्थूलाः सोत्सेधाः सप्त त्वचो ज्ञेयाः। कथमिति तत्प्रकारमाह—तत्र पूर्वम् अवभासिनी नाम अवभासयति पराक्रमयतीति (?) भ्राजकाग्निना सर्ववर्णान् पञ्चविधाश्च छायां प्रकाशयति, सैव सिध्मस्थानं कथितम्। चकारात् पद्मकण्टकाधिष्ठानमपि ज्ञेयं, सा व्रीहेरष्टादशभागप्रमाणा। द्वितीया लोहिता ज्ञेया इत्यादि—द्वितीया त्वक् लोहिता नाम कथिता, सा तिलकालकजन्मभूर्ज्ञेया। तिलकालकग्रहणेनैव न्यच्छव्यङ्गादयोऽपि गृह्यन्ते। तिलकालकप्रभृतयश्च क्षुद्ररोगे पठिताः, सैव व्रीहेः षोडशभागप्रमाणा बोद्धव्या। श्वेता तृतीया सङ्ख्यातेत्यादि—तृतीया त्वक् श्वेता नाम कथिता, सा चर्मदलस्य स्थानं, चर्मदलः कुष्ठभेदः। चकारान्मषकालगल्ली-प्रभृतीनां स्थानं, सा व्रीहेर्द्वादशभागप्रमाणा। ताम्रा चतुर्थी विज्ञेयेत्यादि—चतुर्थी त्वक् ताम्रा नाम विज्ञेया, सा किलासश्वित्रभूमिका कथिता। किलासः कुष्ठभेदः,

* "उपगतः वैकृत्यं प्राप्तः धातुः उपधातुः" इति गू० टी०।

दोषाणां पर्य्यायाः।—

वायुः पित्तं कफो दोषा धातवश्च मला मताः।
तत्रापि पञ्चधा ख्याताः प्रत्येकं देहधारणात्॥२१॥

दोषादीनां निरुक्तिः।—

* ( शरीरदूषणाद्दोषा धातवो देहधारणात्।
वातपित्तकफा ज्ञेयाः मलिनीकरणान्मलाः॥

दोषेषु वायोः प्रभावः।—

पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्॥ )

---

स्थित प्रसिद्धं, सैव व्रीहेरष्टभागप्रमाणा। पञ्चमी त्वक् वेदिनी नाम ख्याता, सा सर्वकुष्ठोद्भवा ज्ञेया, सर्वकुष्ठान्यष्टादशसङ्ख्याकानि। तत्र इति ग्रहणेन विसर्पादीनामधिष्ठानं, सैव व्रीहेः पञ्चभागप्रमाणा विख्याता। रोहिणी षष्ठीति—षष्ठी त्वक् रोहिणी नाम विख्याता, सा ग्रन्थिगण्डापचीस्थितिः कथिता। ग्रन्थ्यादयः कफभेदःप्रधानाः, अतः साधर्म्यात् श्लीपदार्बुदादीनामपि स्थानं, सा च व्रीहिप्रमाणा। स्थूला त्वक् सप्तमी ख्याता इत्यादि—सप्तमी त्वक् स्थूला † नाम कथिता, सा विद्रध्यादेः स्थितिर्भवति। आदिग्रहणात् भगन्दरार्शसोः ग्रहणं, सैव व्रीहिद्वयप्रमाणेन बोद्धव्या। मांसलेषु मानमिदं न ललाटसूक्ष्माङ्गुल्यादिषु, "यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येदिति" ( सु० शा० ४ अ० )॥ १७—२०॥

अथ दोषाणां विवरणमाह, वायुरिति।—वायुः पित्तं कफश्च त्रयो दोषाः प्रसिद्धाः। एते एव देहधारणात् धातवः कथिताः। धातूनां मलिनीकरणात् मलाश्च मताः कथिताः। तत्रापि देहधारणात् प्रत्येकं पञ्चधा पञ्चप्रकाराः ख्याताः। तदुक्तं सुश्रुते—"तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति। रागपक्त्योजस्तेजोमेधोष्मकृत् पित्तं पञ्चधा प्रविभक्तमग्निकर्मणाऽनुग्रहं करोति। सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्तः उदककर्मणाऽनुग्रहं करोति" ( सु० सू० १५ अ० ) इति॥२१॥

* श्लोकाविमौ प्रक्षिप्ताविति केषाञ्चित् मतम्।

† सुश्रुते इयं "मांसधरा" नाम्ना कथिता।

वायोः स्वरूपम्।—

पवनस्तेषु बलवान् विभागकरणान्मतः।
रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः॥२२॥

वायोः पञ्चस्थानानि।—

मलाशये चरेत् कोष्ठ-वह्निस्थाने तथा हृदि।
कण्ठे सर्वाङ्गदेहेषु वायुः पञ्चप्रकारतः॥२३॥

पञ्चवायोः नामानि।—

अपानः स्यात् समानश्च प्राणोदानौ तथैव च।
व्यानश्चेति समीरस्य नामान्युक्तान्यनुक्रमात्॥२४॥

इदानीं तेषु वातप्राधान्यपूर्वकं तत्स्वरूपमाह, पवन इति।—तेषु वातादिदोषेषु पवनो वायुः विभागकरणात् पृथक्करणात् बलवान् मतः। तदुक्तं—"पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्॥" इति। रजोगुणमय इत्यादि—अनिलो रजोगुणमयो रजोगुणभूयिष्ठ इति भावः। सूक्ष्म इति स्रोतःप्रवेशित्वात्। शीतः शीतस्वभावात्। रूक्षो रूक्षगुणयोगात्। लघुर्गवः। चलो नैकत्र स्थितिशीलः॥२२॥

स एवोक्तस्थानेषु चानुगच्छन् वायुः पञ्चप्रकारो ज्ञेयः। केचित्याह, मलाशये इत्यादि।—मलाशये पक्वाशये। कोष्ठवह्निस्थाने इति—कोष्ठाग्निस्थाने; कोष्ठग्रहणं धात्वाग्निनिरासार्थम्। हृदि उरःस्थाने। कण्ठे कण्ठदेशे। सर्वाङ्गदेहेष्विति—सर्वाङ्गयुक्तो देहः; तान्यङ्गानि षट् प्रसिद्धानि। ननु, देहग्रहणेनैवाङ्गान्यपि प्राप्यन्ते, तत् कथं पृथक् ग्रहणम्? उच्यते—अङ्गग्रहणमेव प्रत्यङ्गादीनां निरासार्थं, तेषु प्रत्यङ्गेषु वातस्य विशेषस्थानं न प्रतिपादितम्; तत्त्वाविशेषस्थानत्वेन सर्वाङ्गदेहग्रहणकृतमित्यदोषः॥२३॥

तथैवास्यानुक्रमान्नामानि यथा, अपान इत्यादि।—अपानो वातविशेषः गुददेशे। समानो नाभिदेशे स्यात्, समानो वह्निस्थाने। प्राणो हृदि। उदानः कण्ठदेशे। व्यानः सर्वशरीरेष्विति। तदुक्तं—"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥" इति। केचिदनिलनामान्यन्यान्यपि पठन्ति, तद्यथा—"नागः कूर्मोऽथ कृकलो देवदत्तो धनञ्जयः" इति। एते त्वप्रधाननाडीषु ज्ञातव्याः॥२४॥

पित्तस्य स्वरूपम्।—

पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम्।
कटुतिक्तरसं ज्ञेयं विदग्धं चाम्लतां व्रजेत् ॥२५॥

पञ्चानां पित्तानां स्थानानि कार्य्याणि च।—

अग्न्याशये भवेत् पित्तमग्निरूपं तिलोन्मितम्।
त्वचि कान्तिकरं ज्ञेयं लेपाभ्यङ्गादिपाचकम् ॥२६॥
यकृत्यं यकृति यत् पित्तं तत् रसं शोणतां नयेत्।
यत् पित्तं नेत्रयुगले रूपदर्शनकारि तत् ॥
यत् पित्तं हृदये तिष्ठेन्मेधाप्रज्ञाकरञ्च तत् ॥२७॥

---

इदानीं पित्तविवरणमाह, पित्तमिति।—पित्तमुष्णमित्युष्णयोगात्। द्रवमकठिनम्। पीतं वर्णतः। नीलञ्च तन्नीलवर्णं सामावस्थायां भवति पीतं निरामावस्थायाञ्च। सत्त्वगुणोत्तरं सत्त्वगुणबहुलम्। कटुतिक्तरसं प्रकृतिस्थं प्रसिद्धम्। यदा विदग्धं तदाम्लतां व्रजेदिति वाह्निगुणत्वात्, तदुक्तं—"पित्तं विदग्धमम्लतामुपैति आग्नेयत्वात्" इति। अत एवाह कश्यप्—"विदग्धाजीर्णसंसृष्टं पुनरम्लरसं भवेत्" इति। विदग्धं पित्तं पुनरम्लपित्तमिति रोगविशेषमपरे प्रतिपादयन्ति इति ॥२५॥

तत्स्थानानि यथा—अग्न्याशये पित्तमग्निरूपं तिलोन्मितञ्च ज्ञेयं, पक्वामाशयमध्ये अग्न्याशयमिति वाच्यं, तदस्य चतुर्विधमन्नपानं पचति। न केवलं तिलोन्मितमन्यरूपञ्च वदन्त्यके। तद्यथा—"स्थूलकायेषु सत्त्वेषु यवमात्रं प्रमाणतः। ह्रस्वमात्रेषु सत्त्वेषु तिलमात्रं प्रमाणतः॥ कृमिकीटपतङ्गेषु बालमात्रं हि तिष्ठति॥" इति। यत् पित्तं त्वच्यस्ति तत् कान्तिकरं ज्ञेयं लेपाभ्यङ्गादिपाचकञ्च भवति तदुष्णगुणयोगात्। कान्तिः शरीरस्यौज्ज्वल्यम्। लेपाभ्यङ्गादीत्यादिग्रहणात् स्नानावगाहनादीनां ग्रहणम्। त्वगत्र अवभासिनी नाम ज्ञेया, वाह्यत्वगित्यभिप्रायः। यत् पित्तं यकृति कालखण्डं हृद्यं दृष्टिगोचरं तद्रसं शोणतां नयेत् करोतीत्यर्थः। तादृशमिति यादृक् प्लीहास्थानेऽस्ति तादृक् भवतीति भावः (?)। यत् पित्तं नेत्रयुगलेऽस्ति तद्रूपदर्शनकारि भवति; रूपं पीतशुक्लादिकम्। यत् पित्तं हृदये चेतनास्थानेऽस्ति तन्मेधाप्रज्ञाकरं बोद्धव्यं, कस्मात्? हृदयस्थकफतमोऽपनोदनविस्पष्टीकृतत्वात्। मेधा धीधारणावती बुद्धिः, प्रज्ञा अनागतोपदेशरूपा मतिः। चकारादभिप्रार्थितमनोरथसाधनकृदुक्तम् ॥२६-२७॥

पञ्चानां पित्तानां नामानि।—

पाचकं भ्राजकञ्चैव रञ्जकालोचके तथा।
साधकञ्चेति पञ्चैव पित्तनामान्यनुक्रमात् ॥२८॥

कफस्य स्वरूपम्।—

कफः स्निग्धो गुरुः श्वेतः पिच्छिलः शीतलस्तथा।
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ॥२९॥

पञ्चानां कफानां स्थानानि कार्य्याणि च।—

कफस्त्वामाशये मूर्ध्नि कण्ठे हृदि च सन्धिषु।
तिष्ठन् करोति देहेषु स्थैर्य्यं सर्वाङ्गपाटवम् ॥३०॥

पञ्चानां कफानां नामानि।—

क्लेदनः स्नेहनश्चैव रसनश्चावलम्बनः।
श्लेषकश्चेति नामानि कफस्योक्तान्यनुक्रमात् ॥३१॥

पित्तनामान्याह, पाचकमित्यादि।—पित्तनामानि अनुक्रमात् पञ्चैव ज्ञातव्यानि; क्रमो यथा—पाचकमग्निस्थाने, भ्राजकं त्वचि, रञ्जकं यकृति, आलोचकं नेत्रयोः, साधकं हृदीति ॥ २८ ॥

इदानीं कफस्य विवरणं दर्शयितुमाह, कफ इति।—कफोऽपि ईदृशः। कीदृशः? तमाह, स्निग्ध इति—स्नेहगुणयोगात्। गुरुरलघुः। श्वेतो वर्णतः। पिच्छिल इति—मृद्यमानः सन्नङ्गुलिग्राही। शीतलोऽनुष्णः सौम्यत्वात्। तमोगुणाधिकस्तमोगुणबहुलः। स्वादुर्मधुरः, मधुरत्वमस्याविदग्धत्वात्। विदग्धस्तु लवणो भवेदिति, तदुक्तं—"प्रकृतिस्थोऽविदग्धश्चाप्रदुष्टो मधुरः कफः। विदग्धो विकृतश्च स्यात् प्रदुष्टो लवणस्तथा॥" इति। यद्वा—विदग्धः अल्पपाकाल्लवणः ॥२९॥

स्थानानि यथा, कफ इत्यादि।—कफोऽप्येतेषु स्थानेषु तिष्ठन् देहेषु स्थैर्य्यं करोति सर्वाङ्गपाटवं करोति; कथमित्याह—आमाशये चतुर्विधस्याहारस्याधारे माधुर्य्यात् पिच्छिलत्वात् प्रक्लेदित्वान्मधुरशीतलोऽपि स्वशक्त्या श्लेष्मस्थानानां शरीरस्य च उदककर्म्मणा कृत्वोपकारं करोति। मूर्ध्नि शिरसि स्थितः स्नेहेन तर्पणाधिकृतत्वादिन्द्रियाणां स्वकार्य्यसामर्थ्यं जनयति। कण्ठे जिह्वामूले स्थितः सौम्यत्वाज्जिह्वेन्द्रियस्य रसज्ञानाज्ञानयोर्वर्त्तते। हृदि उरसि स्थितः शिरोबाहुहृदयसन्धानस्थानस्य सन्धारणं प्राकृतगुणेन अन्नरसमहितेन हृदये स्वकार्य्यसामर्थ्यं करोति। सन्धिषु संस्थितः सर्वसन्धिसंश्लेषादनुग्रहं करोति ॥३०॥

अथ नामान्यनुक्रमादुक्तानि; तानि कानीत्याह—क्लेदन आमाशये, तत्र

स्नायूनां सन्धीनाञ्च स्वरूपम्।—

स्नायवो बन्धनं प्रोक्ता देहे मांसास्थिमेदसाम्।
सन्धयश्चाङ्गसन्धानात् देहे प्रोक्ताः कफान्विताः ॥३२॥

चौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः सुखकरो भवति इति क्लेदनस्याभिप्रायः। स्नेहनो मूर्द्धि भवति, तत्र स्थितस्य स्नेहविषयस्य सन्तर्पणं करोतीति तात्पर्य्यार्थः, स्नेहगुणमाधर्य्यात्। रसनः कफपर्य्यायः (१) कण्ठेऽस्ति, स च रसज्ञाने वर्त्तते। अवलम्बनो हृदि वर्त्तते, स च हृदयावलम्बनं करोतीत्यर्थः। श्लेषकः सन्धिस्थिति, स च सन्धिसंश्लेषणकृद्भवति, सन्धिसन्धानं करोतीत्यभिप्रायः ॥३१॥

इदानीं स्नायूनां विवरणं दर्शयन्नाह, स्नायव इति।—स्नायवो नवशतसङ्ख्याकाः, तास्तु प्रतानवत्यो वृत्ताः पृथ्व्यः शुषिराश्च देहे मांसास्थिमेदसां बन्धनं प्रोक्ताः कथिता इत्यर्थः। तद्यथा—शाखासु षट्शतानि ताः प्रतानवत्यो वृत्ताश्च, विसमृणालसदृश्यः प्रतानवत्यः वृत्ताः वर्त्तुलाः, महास्नायव इत्यर्थः। द्वे शते त्रिंशच्च कोष्ठे, ताः शुषिराः पृथुलाश्च। ग्रीवां प्रत्यूर्द्ध सप्ततिः, ता अपि पृथुलाः शुषिराश्च, एवं नवशतसङ्ख्याः स्नायवो व्याख्याताः। बन्धनमिति—सर्व्वशरीरावयवानिबन्धनं, तदुक्तं— "नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता। भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता॥ एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः। स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः॥" (सु० शा० ५ अ०) इति। सन्धिलक्षणमाह, सन्धय इति।—बहुत्वग्रहणेन प्रत्यङ्गान्यपि गृह्यन्ते। सन्धयो द्विविधाश्चला अचलाश्च। यदुक्तं—"इन्तोः कट्याश्च शाखासु सन्धयस्तु चलाः स्मृताः। शेषास्तु सन्धयः सर्व्वे विज्ञेया अचला बुधैः॥" कट्याश्चेति चकारात् ग्रीवायामपि चला ज्ञेयाः। केचिदत्र सन्धिलक्षणपदे द्वयं पठन्ति (१)। तान् सन्धीनस्थ्याश्रिता नव मन्यन्ते * ॥३२॥

* मन्ये "तान् सन्धीनस्थ्याश्रिता नव मन्यन्ते" इत्यत्र "तान् सन्धीनस्थ्याश्रितानेव मन्यन्ते" इति पाठो युक्तः, यतः सुश्रुते चलाचलसन्धीनां दशोत्तरशतद्वयत्वं तेषां विवरणादिकञ्च उक्ता "अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः। पेशीस्नायुशिराणान्तु सन्धिसङ्ख्या न विद्यते॥" इत्युक्तम्, अतश्च टीकाकृता इन्त्वादिषु ये सन्धयः प्रदर्शिताः ते अस्थ्याश्रिता एव, न तु पेश्याद्याश्रिताः इत्येवार्थः युज्यते, तान् सन्धीन् अस्थ्याश्रिता नव इति पाठश्च व्याकरणदुष्टत्वात् अग्राह्यकृतेश्चेति।

अस्थ्नां मर्मणाञ्च स्वरूपम्।—

आधारश्च तथा सारः कायेऽस्थीनि बुधा विदुः।
मर्माणि जीवाधाराणि प्रायेण मुनयो जगुः ॥२३॥

शिराणां धमनीनाञ्च स्वरूपम्।—

सन्धिबन्धनकारिण्यो दोषधातुवहाः शिराः।
धमन्यो रसवाहिन्यो धमन्ति पवनं तनौ ॥२४॥

अथास्थिलक्षणमाह, आधारश्चेति।—अस्थीनि पञ्चविधानि भवन्ति कपाल-रुचक-वलय-तरुण-नलकसंज्ञानि, काये आधारः शरीरधारणविषयः; तदुक्तं—"मांसान्यत्र निबद्धानि शिराभिः स्नायुभिस्तथा। अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा॥" (सु० शा० ५ अ०) इति। तथा सार इति—अस्थीनि शरीरे सारभूतः कथितः; यथा—"अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः। अस्थिसारैस्तथा देहा ध्रियन्ते देहिना ध्रुवम्। तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्। अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम्॥" (सु० शा० ५ अ०) इति। इदानीं मर्माणि निदर्शयन्नाह, मर्माणीति।—मर्माणि सप्तोत्तरशत-सङ्ख्यकानि प्रायेण बाहुल्येन जीवाधाराणि प्राणाधाराणि मुनयः जगुः, तानि मर्माणि पञ्च प्रकाराणि भवन्ति; तद्यथा—मांसमर्माणि तान्येकादशसङ्ख्यानि, शिरामर्माणि एकचत्वारिंशत्, स्नायुमर्माणि सप्तविंशतिः, अस्थिमर्माण्यष्टौ, सन्धिमर्माणि विंशतिश्चेति। एतान्यपि सद्यःप्राणहराणि कालान्तरप्राणहराणि विशल्यघ्नानि वैकल्यकराणि रुजाकराणीति कथितानि। एतेषां स्वरूपं न लिखितमेव विस्तरभयात्। जीवाधाराणीति—जीव आत्मा तस्याधाराणीत्यर्थः। तदुक्तं—"सोममारुततेजांसि रजःसत्त्वतमांसि च। मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते॥ मर्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः॥" (सु० शा० ६ अ०) इति ॥२३॥

इदानीं शिरालक्षणं प्रकटयन्नाह, सन्धीति।—शिराश्च स्थूलसूक्ष्मभेदेन द्विविधाः, तासां नाभिर्मूलं, ततः प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च। तथा ह्युक्तं—"यावत्यस्तु शिराः काये सम्भवन्ति शरीरिणाम्। नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः॥" (सु० शा० ७ अ०) इति। तासां विभागोऽप्युक्तः, यथा—"तासां मूलशिराश्चत्वारिंशत्, तासां वात-वाहिन्यः दश, पित्तवाहिन्यः दश, कफवाहिन्यः दश, दश रक्तवाहिन्यः इति। तासान्तु

मांसपेशीना कण्डराणाञ्च स्वरूपम्।—

**मांसपेश्यो बलाय स्युरवष्टम्भाय देहिनाम्।**
**प्रसारणाकुञ्चनयोरङ्गानां कण्डरा मता:॥३५॥**

वातवाहिनीनां वातस्थानगतानां पञ्चसप्तत्यधिकशतं भवति। तावत्य एव पित्तवाहिन्य: पित्तस्थाने, कफवाहिन्यश्च कफस्थाने, रक्तवाहिन्यश्च यकृत्प्लीह्नो:" (सु० शा० ७ अ०)। सन्धिबन्धनकारिण्य इति—आकुञ्चनप्रसारणादिभिर्विशेषैरित्यर्थ:। इदानीं धमनीलक्षणमाह, धमन्य इति।—धमनादनिलपूरणात् धमन्य:। रसवाहिन्य इति—चतुर्विंशतिसङ्ख्यका:। तासाञ्च नाभिप्रभवाणामूर्द्ध्वगा दश, दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गामिण्यो भवन्ति। अधोगतास्तु वातमूत्रपुरीषशुक्रार्त्तवानधो वहन्ति। अन्नपानरसवाहिन्यो दशोर्द्ध्वगा:। * तिर्य्यग्गाणान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते। तास्त्वसङ्ख्येया:, ताभिरिदं शरीरं जालकैरिव व्याप्तं, तासान्तु मुखानि रोमकूपप्रतिबद्धानि यै: स्वेदमभिवहन्ति, रसञ्चापि सन्तर्पयन्त्यन्तर्बहिश्च, तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्त:शरीरमभिप्रतिपद्यन्ते॥ ३४॥

अथ पेशीवर्णनमाह, मांसपेश्य इति।—मांसावयवसङ्घाता: परस्परं विभक्ता: पेश्य इत्युच्यन्ते। तास्तु बलाय ओजसे स्यु: कथिता:। अत एवाह कश्चित्—"शिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम्। पेशीभि: संवृतान्यत्र बलवन्ति भवन्त्यत:॥" (सु० शा० ५ अ०) इति। तासान्तु स्थानविशेषान्नानास्वरूपत्वं दर्शितम्। तद्यथा—"बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावा:" (सु० शा० ५ अ०)। प्रत्येकलक्षणमेतेषाञ्च न लिखितमत्र ग्रन्थगौरवभयात्। अथ कण्डरा:,—कण्डरा महास्नायव:, अङ्गानां हस्तपादशिर:पृष्ठप्रभृतीनां प्रसारणाकुञ्चने कर्मविशेषौ तयोर्व्यापारो यासां ता:। कण्डरा: षोडश, तासां प्ररोहा यथा—"हस्तपादगतानां कण्डराणां नखा: प्ररोहा:, ग्रीवाहृदयनिबन्धिनीनाम् अधोभागगतानां मेढ्रम्। श्रोणिपृष्ठनिबन्धिनीनामधोभागगतानां बिम्ब: मूर्द्धोरुवक्षोऽंसपिण्डादीनाञ्च"।

* आदौ अधोगता उक्ता पश्चात् ऊर्द्ध्वगाया उक्ति: प्रक्रमभङ्गदोषदुष्टा न समीचीना, तथा "अन्नपानरसवाहिन्यो दशोर्द्ध्वगा:" इति पाठोऽपि सुश्रुतविरुद्धतया न युक्त:; तथा च सुश्रुत:,—"ऊर्द्ध्वगा: शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्य: शरीरं धारयन्ति" इति।

रन्ध्राणां विवरणम्।—

नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्त्तिते।
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते॥
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः॥३६॥
स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनः।
सूक्ष्मच्छिद्राणि चान्यानि मतानि त्वचि जन्मिनाम्॥३७॥

फुप्फुसप्लीहायकृतां स्थाननिरूपणम्।—

तद्वामे फुप्फुसप्लीहौ दक्षिणाङ्गे यकृन्मतम्॥३८॥

---

(सु० शा० ५ अ०)। षोडशग्रहणमत्र शस्त्रव्यापारनिषेधार्थम्; तथा हि—"जालानि कण्डराश्चाग्र पृथक् षोडश निर्दिशेत्। षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः॥ शस्त्रेण ताः परिहरेच्चतस्रो मांसरज्जवः॥" इति॥ ३५॥

अथ रन्ध्राण्याह, नासेत्यादि।—नासादीनां त्रयाणां द्वे द्वे रन्ध्रे प्रकीर्त्तिते। तेन द्वे नासायां, द्वे नयनयोः, द्वे कर्णयोरिति। मेहनापानवक्त्राणामेकैकम्। मेहनं मेढ्रम्, अपानं गुदसंज्ञं, वक्त्रं मुखकुहरम्। दशमं रन्ध्रं मस्तके प्रोक्तम्; तद्ब्रह्मरन्ध्रमित्याहुरेके। एतानि नव स्रोतांसि नराणां बहिर्मुखानि भवन्ति, दशमं मस्तके प्रच्छन्नमिति। स्त्रीणामपराणि च त्रीणि; तानि कानि? इत्याह, स्त्रीणामिति।—द्वे स्तनयोः क्षीरवहे, एकं गर्भवर्त्मनः आर्त्तवशुक्रवहमित्यर्थः। अन्यान्यपि स्रोतांसि सन्तीत्याह, सूक्ष्मच्छिद्राणीति।—जन्मिनां पुरुषाणां त्वचि विषये अन्यानि सूक्ष्मच्छिद्राणि मतानि कथितानीत्यर्थः। तान्यसङ्ख्यानि, यस्मात् सूक्ष्मत्वान्न दृश्यन्ते अतोऽन्तर्मुखानि वदन्त्यन्ये। चकारादन्यान्यपि स्रोतांसि मन्यन्ते केचित्। तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि। एतेषां स्वरूपमत्र बाहुल्यान्न लिखितम्॥ ३६।३७॥

इदानीं शारीरकथनप्रसङ्गेनान्येषामपि फुप्फुसादीनां स्वरूपं निदर्शयन्नाह, तद्वामे इति।—तद्वामे हृदयस्य वामभागे फुप्फुसप्लीहानौ भवतः। फुप्फुसः स्वनामख्यातः शोणितफेनप्रभवो हृदयनाडिकालग्नः, प्लीहा च शोणितजः स्वनाम्ना प्रसिद्धः; एतद्द्वयञ्च वामपार्श्वे स्थितमिति भावः। दक्षिणाङ्गे दक्षिणपार्श्वे यकृत् कालखण्डं मतम्, एतदपि शोणितजम्॥३८॥

फुप्फुसस्य प्लीह्नश्च स्वरूपम्।—

उदानवायोराधारः फुप्फुसः प्रोच्यते बुधैः।
रक्तवाहिशिरामूलं प्लीहा ख्याता महर्षिभिः॥३९॥

यकृतः तिलस्य (क्लोम्नः) च स्वरूपम्।—

यकृत् रञ्जकपित्तस्य स्थानं रक्तस्य संश्रयः।
जलवाहिशिरामूलं तृष्णाच्छादनकं तिलम्॥४०॥

वृक्कयोः वृषणयोश्च स्वरूपम्।—

वृक्कौ पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः।
वीर्य्यवाहिशिराधारौ वृषणौ पौरुषावहौ॥४१॥

लिङ्गस्य हृदयस्य च स्वरूपम्।—

गर्भाधानकरं लिङ्गमयनं वीर्य्यमूत्रयोः।
हृदयं चेतनास्थानमोजसश्चाश्रयं मतम्॥४२॥

---

अथ तेषां शरीरे व्यापारमाह, उदानवायोरित्यादि।—फुप्फुसः उदानवायोः कण्ठाश्रितवायोराधारः आश्रयः बुधैः प्रोच्यते। प्लीहा रक्तवाहिशिरामूलमाख्यातम्; प्लीहेति "वनढ्वा" शब्दवाच्यः॥३९॥

यकृत रञ्जकस्य पित्तस्य स्थानं रक्तस्य च स्थानमिति। तिलन्तु शोणितकिट्टप्रभवं दक्षिणाश्रितं यकृत्समीपे क्लोमसंज्ञकं भवति, तच्च जलवाहिशिरामूलं कथितम्, अत एव तृष्णाच्छादनकं प्रतिपादितं, तृष्णा पिपासा तस्याः आच्छादनं करोतीत्यर्थः॥४०॥

वृक्कवृषणयोः स्वरूपमाह,—वृक्कौ कुक्षिगोलकौ, तौ तु रक्तमेदःप्रसादसम्भवौ, प्रसादः सारः; अत एव जठरस्थस्य मेदसः पुष्टिकरौ कथितौ, तत्सम्भवत्वात्। जठरग्रहणमन्यस्थानाश्रितमेदोनिषेधार्थम्। तथा हि—"स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः। अथेतरेषु सर्व्वेषु सरक्तं मेद उच्यते॥" (सु० शा० ४ अ०) इति। वृषणौ अण्डौ, तौ च मांसासृक्कफमेदःप्रसादसम्भवौ वीर्य्यवाहिनां शिराणामाधारावाश्रयावित्यर्थः, अत एव पौरुषावहौ पुरुषस्य धर्मः पौरुषं तदावहौ पुरुषार्थकारिणावित्यर्थः, यतः "आकृष्टाण्डस्य पुंसश्च स्त्रीप्रहर्षो न जायते" इति॥४१॥

गर्भाधानकरमिति।—लिङ्गं मेहनं, तच्च योषया सह हृदयनिबन्धनीनां धमनीनां कण्डराणां प्ररोहमिति; गर्भाधानकरं गर्भोत्पादकमित्यर्थः। अत एव

शिराधमनीनां शरीरपोषकत्वम्।—

**सिरा धमन्यो नाभिस्थाः सर्वां व्याप्य स्थितास्तनुम्।**
**पुष्णन्ति चानिशं वायोः संयोगात् सर्वधातुभिः॥४३॥**

वीर्य्यमूत्रयोरयनं मार्गमिति। तदुक्तं—"द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः। मूत्रस्रोतःपथात् शुक्रं पुरुषस्य प्रवर्त्तते॥" ( सु० शा० ४ अ० ) इति। हृदयं कमलमुकुलाकारमधोमुखं, तच्च शोणितकफप्रसादजं, चेतनास्थानमिति—तद्विशेषेण चैतन्यास्पदं कथितं, सामान्येन तु सकलशरीरमेव चेतनास्थानम्; तदुक्तं चरके —"चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः। केशलोमनखाग्रान्नमलद्रवगुणैर्विना॥" ( च० शा० कतिधापु० ) इति। ओजसश्चाश्रयं सतमिति—ओजोऽपि कृत्स्नधातुस्नेहः, यथा कृत्स्नक्षीरस्नेहः घृतं तथा ओजोऽपि सर्वधातूनां तेजःशब्देनामनन्ति। यदुक्तं —"रसादीनां शुक्रान्तानां धातूनां यत् परं तेजः तत् खल्वोजस्तदेव बलमित्युच्यते" ( सु० सू० १५ अ० )। तन्त्रान्तरे तु ओजःशब्देन रसोऽप्युच्यते। जीवशोणितमपि ओजःशब्देन कथयन्ति केचित्। श्लेष्माणमविकृतमोजःशब्देनापरे वदन्तीति॥४२॥

इदानीं शरीरपोषणव्यापारमाह, सिरा इति।—नाभिस्थाः नाभिस्थितमूलाः सिरा धमन्यः सरणात् सिराः, धमनाद्धमन्यः, सर्वां तनुं सकलशरीरं व्याप्य स्थिताश्च सताः। अनिशमित्यहर्निशं, तनुं शरीरं पुष्णन्ति पोषयन्ति, चकाराद्नुगृह्णन्ति अर्थात् परिपालयन्तीत्यर्थः; तत्र तरुणाना शरीरं पुष्णन्ति, वृद्धानाञ्च पालयन्तीत्यभिप्रायः। तदुक्तं—"स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वादप्रीणनो भवति" ( सु० सू० १४ अ० ) इति। कुतः पोषयन्तीत्यत आह, वायोः संयोगादित्यादि।— वायोरनिलस्य संयोगात प्राकृतसहायात्। तथा ह्युक्तं—"क्रियाणामप्रतिघातममोहो बुद्धिकर्मणाम। करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरम्॥" (सु० शा० ७ अ०) इति। कैः कृत्वा? इत्याह, सर्वधातुभिरिति।—सर्वे धातवो रसाद्याः। एतेन सर्वासां सामान्यं कर्म निर्दिष्टम्, तथा च—"याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यते अनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः" ( सु० शा० ७ अ० ) इति। ननु, नाभिस्थाः कथं सकलशरीरं पुष्णन्तीत्याशङ्क्य तन्त्रान्तरात् समाधानमाह, तद्यथा—"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः। प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥" ( सु० शा० ७ अ० ) इति॥४३॥

प्राणवायोः कार्य्यविशेषः।—

नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्।
कण्ठाद्वहिर्विनिर्याति पातुं विष्णुपदामृतम् ॥४४॥
पीत्वा चाम्बरपीयूषं पुनरायाति वेगतः।
प्रीणयन् देहमखिलं जीवञ्च जठरानलम् * ॥४५॥

अथ प्राणानिलस्य शरीरव्यापारमाह, नाभिस्थ इति।—प्राणपवनः प्राणानिलः, प्राणाश्रितो वायुरिति तात्पर्य्यार्थः; प्राणा अग्निसोमादयः, नाभिस्थ इति कारणात्; नाभौ स्थितः सकलशरीरव्यापकत्वात्, एतेन नाभ्याधारकशिरास्ववस्थित इति भावः। तदुक्तं—"नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता। शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः॥" (सु० शा० ७ अ०) इति। यथा—"ब्रह्मरन्ध्रान्नाभिचक्रं द्वादशारमवस्थितम्। लूतेव तन्तुजालस्था तत्र जीवो भ्रमत्ययम्॥ सुषुम्नया ब्रह्मरन्ध्रमारोहत्यवरोहति। जीवः प्राणसमारूढो रञ्जकः स्फटिको यथा॥" इति। तस्य कारणत्वञ्च तन्त्रान्तरेऽपि कथितम्; यथा—"तेषामुत्तमः प्राणो नाभिकन्दादधः स्थितः। चरत्यास्ये नासिकायां नाभौ हृदयपङ्कजे॥ शब्दोच्चारणनिश्वासोच्छ्वासकासादि-कारणम्॥" इति। एवंविधः प्राणानिलः हृत्कमलान्तरं हृदयकमलस्याभ्यन्तरं स्पृष्ट्वा प्रबोध्य कण्ठाद्वहिर्विनिर्याति; अर्थात् कण्ठमुल्लङ्घ्य शिरसि प्राप्त इति तात्पर्य्यार्थः; कुत इत्याह—विष्णुपदामृतं पातुं विष्णुपदं ब्रह्मरन्ध्राश्रितं, तदाश्रितममृतं पीयूषम्। अत एवाहुराचार्य्याः,—"चक्रं सहस्रपत्रन्तु ब्रह्मरन्ध्रे सुधाधरम्। तत्सुधासारधाराभि-रभिवर्द्धयते तनुम॥" इति। मूलभारतेऽपि—"ब्रह्मरन्ध्रे स्थितो जीवः सुधया सम्प्लुतो यदा। तुष्टिगीतादिकार्य्याणि सम्प्रकर्षाणि साधयेत्॥" इति। पीत्वेत्यादि।—स एवानिलः अम्बरपीयूषं ब्रह्मरन्ध्राश्रितममृतं, पीत्वा अर्थात् समादाय, पुनरपि तेनैव पथा, वेगतस्तत्क्षणादेव आयाति, स्वस्थाने इति शेषः। तादृशस्य तस्य कार्य्यमाह, प्रीणयन्नित्यादि।—अखिलं देहं प्रीणयन् सन्नास्ते इति भावः; अखिलमिति—शिखादिचरणपर्य्यन्तं, न केवलं देहं पुष्णाति अपि तु जीवं जठरानलञ्च। जीवः पूर्वं व्याख्यातः, स च ब्रह्मरन्ध्रे स्थितः। जठरानलः पाचकाग्निः, तस्य पाचकादिशक्तिं करोतीत्यभिप्रायः। ननु देहग्रहणेन जीवानलादीनां ग्रहणमेव, तत्कथं पृथगुक्ताः? उच्यते—देहग्रहणात् सामान्येनाङ्गप्रत्यङ्गविभागोऽभिहितः, जीवानलौ तु विशेषेण

* "जीवयन् जठरानलम्" इति गूढार्थदीपिकासम्मतः पाठः।

आयुषः पञ्चत्वस्य च लक्षणम्।—

शरीरप्राणयोरेवं संयोगादायुरुच्यते।
कालेन तद्वियोगाच्च पञ्चत्वं कथ्यते बुधैः॥ ४६॥

जीवानां मरणधर्मित्वोक्तिः।—

न जन्तुः कश्चिदमरः पृथिव्यां जायते क्वचित्।
अतो मृत्युरवार्य्यः स्यात् किन्तु रोगान्निवारयेत्॥४७॥

रोगाप्रतीकारे दोषोक्तिः।—

याप्यत्वं याति साध्यस्तु याप्यो गच्छत्यसाध्यताम्।
जीवितं हन्त्यसाध्यस्तु नरस्याप्रतिकारिणः॥ ४८॥

---

तन्मूलो, अत एव "शरीराङ्गिनौ जीवः" इति श्रुतिः; तस्मात् पृथगुक्तो न दोषः। यतः,—"आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा। ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः॥ शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः। रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते॥" (च० चि० ग्रहणी०) इति॥ ४४।४५॥

अथायुर्लक्षणं तद्विपरीतलक्षणञ्चाह, शरीरेति।—एवं पूर्वोक्ताभिप्रायात् शरीरप्राणयोः संयोगादायुरुच्यते कथ्यते; आयुरिति—भूतात्मनः शरीरनिधनपर्य्यन्तं धर्माधर्मनिमित्तकसामारिकसुखदुःखोपभोगसाधनम्। तद्विपरीतमाह, कालेनेत्यादि। —कालोऽपि स्वयम्भूरेव कथितः। तथा च—"कालो हि नाम भगवान् स्वयम्भुरनादिमध्यनिधनः" (सु० सू० ६ अ०) इत्यादि; भूतानि सङ्कलयति संहरणादिति कालः, सुखदुःखाभ्यां भूतानि योजयतीति वा कालः, अथवा—कलयति मृत्युसमीपं नयति इति कालः, दैवाग्निविधेनेत्यर्थः, तद्वियोगादिति—तयोः प्राणशरीरयोर्वियोगात् विश्लेषात् बुधैः पञ्चत्वं मरणं कथ्यते। अत एवाह आचार्य्यः,—न जन्तुरित्यादि। रोगान् निवारयेत्, वैद्य इति शेषः। तदुक्तं वैद्यलक्षणे—"व्याधितत्त्वपरिज्ञानं वेदनायाश्च निग्रहः। एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः॥" (हारी० १म स्था० ३अ०) इति। शेषं सुबोधम्॥ ४६।४७॥

इदानीं साध्यस्य व्याधेरप्रतिक्रियमाणत्वादवस्थान्तरप्राप्तिमाह, याप्यत्वमिति।—अप्रतिकारिणो नरस्यातुरस्य सुसाध्यो व्याधिर्याप्यत्वं याति, किन्तु उक्तव्याधिः साध्यतां प्राप्य पश्चात् याप्यत्वं प्राप्नोतीति भावः। याप्योऽप्यसाध्यतां गच्छति, असाध्योऽपि जीवितं हन्तीति। अप्रतिकारिण इति—रोगापनयनादिकक्रिया-

रोगप्रतीकारे गुणोक्तिः ।—

धर्मार्थकाममोक्षाणां शरीरं साधनं यतः ।
अतो रुग्भ्यस्तनुं रक्षेन्नरः कर्मविपाकवित् ॥ ४९ ॥

धात्वादीनां वैषम्ये साम्ये च दोषगुणौ ।—

धातवस्तन्मला दोषा नाशयन्त्यसमास्तनुम् ।
समाः सुखाय विज्ञेयाः बलायोपचयाय च ॥ ५० ॥

---

रोहितस्य ; अत एवोत्पन्नमात्र एव व्याधिः प्रतिकार्य्यः । तदुक्तं—"जातमात्रं चिकित्स्यस्तु नोपेक्ष्योऽल्पतया गदः । वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥" इति । याप्य इत्यसाध्यभेदः । तथा च—"असाध्यो द्विविधो ज्ञेयो याप्यो यश्चाप्रतिक्रियः" इति । तत्र तु—"यापनीयं विजानीयात् क्रिया धारयते तु यम् । क्रियायान्तु निवृत्तायां सद्य एव विनश्यति ॥" ( सु० सू० २३ अ० ) इति । अप्रतिक्रियश्चिकित्सावर्जितः, नियतप्राणहर इत्यर्थः । साध्योऽपि द्विविधः सुखसाध्यः कृच्छ्रसाध्यश्च । तत्रैकदोषोत्पन्नो निरुपद्रवोऽचिरोत्पन्न इत्यादिलक्षणः सुखसाध्यः शस्त्रादिसाधनः कृच्छ्र इति ॥ ४८ ॥

इदानीं देहस्य चतुःपदार्थसाधनभूतस्य रक्षां निर्दिशन्नाह, धर्मेति ।—यतो हेतोः शरीरं धर्मादीनां साधनमस्ति, अतः कारणात् रुग्भ्यो व्याधिभ्यस्तनुं शरीरं रक्षेत् ; को रक्षेत् ? इत्याह, नरः कर्मविपाकविदिति—कर्म शुभाशुभं, तस्य विपाकः फलं, तं जानातीति कर्मविपाकवित्, एतेनादृष्टजन्यफलं सञ्चिन्त्य तत्परो भूत्वा व्रतदानपूर्वकं कर्म कुर्य्यादित्यभिप्रायः । यतः,—"पूर्वजन्मकृतं पापं व्याधिरूपेण तिष्ठति । अतो दानादिकं कुर्य्यात् प्रशमोऽस्य विचक्षणः ॥" इति ॥ ४९ ॥

अथ दोषादीनां वैषम्यावस्थामाह, धातव इति ।—सुखं स्वस्थता, बलमाङ्गिकमोजःसंज्ञकम्, उपचयः शरीरस्य वृद्धिरूपा सन्ततिः । तन्मला इति—धातुमलाः । समा इति—स्वपरिमाणस्थिताः, इति यद्विवरणं कृतं तत् तेषां स्वभावपरिमाणञ्च तन्त्रान्तरीयवाक्येन दर्शयन्नाह, तद्यथा—"यः प्रसादपरोऽन्नस्य परं कौणस्य सर्वशः । स रसोऽञ्जलयस्तस्य नव देहेषु देहिनः ॥ रक्तस्याञ्जलयस्त्वष्टौ प्रकृतः सप्त सर्वशः । पित्तस्याञ्जलयः पञ्च षट् कफस्य प्रचक्षते ॥ मूत्रस्य विद्याच्चत्वारो वसायाश्चाञ्जलित्रयम् । द्वावञ्जली मेदसस्तु मज्जा एकाञ्जलिर्मतः ॥ शुक्रस्यार्द्धाञ्जलिर्ज्ञेयो मस्तिष्कश्चौजसस्तथा । चत्वारोऽञ्जलयः स्त्रीणां रजसः प्रकृतिस्थितिः ॥ द्वावञ्जलौ

## अथ सृष्टिक्रमः।—

अव्यक्तम।—

जगद्योनेरनिच्छस्य चिदानन्दैकरूपिणः।
सा नित्या प्रकृतिरस्ति * प्रतिच्छायेव भास्वतः॥ ५१॥
अचेतनादि चैतन्यं † योगेन परमात्मनः।
अकरोत् विश्वमखिलमनित्यं नाटकाकृति॥ ५२॥

प्रसूतायाः कन्यस्यापि हि योषितः। प्रमाणमेतद्धातूनामदुष्टानामुदाहृतम्॥ हीनाः स्वस्वप्रमाणात् प्रवृद्धाश्चापि धातवः। यौजयन्ति विकारेषु दोषा वृद्धिक्षयप्रदाः॥" इति। अत एवाह वाग्भटः,—"रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता" (वा० सू० १ अ०) इति। अन्यत्र—"विकृताऽविकृता देहं घ्नन्ति ते वर्त्तयन्ति च" (वा० सू० १अ०) इति। तथा च चरकेऽपि—"विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। सुखसंज्ञकमारोग्यं विकारो दुःखमेव च॥" (च० सू० खुड्डाकचतु०) इति॥ ५०॥

पूर्वमुक्तमादिशब्दात् सृष्टिक्रमशारीरग्रहणम्, अतस्तं दर्शयन्नाह, जगद्योनेरिति। —जगद्योनेरित्यादिषु सा नित्या प्रकृतिरस्ति इति विषयः। यथा भास्वतो मार्त्तण्डस्य प्रतिच्छायेव प्रतिबिम्बमिव सा नित्या अस्तीति युतिः। प्रकृतेः पर्य्यायः अव्यक्तं नाम कथितम्। कीदृशस्य? तमाह, जगद्योनेरिति।—अखिलस्य जगतो योनिः सम्भवहेतुस्तस्येति; यद्वा—जगच्छब्देन पृथिव्यादयोऽभिधीयन्ते, कार्य्ये कारणोपचारात्, तेषां योनिरुत्पत्तिहेतुस्तस्येत्यर्थः; एतेनाभिव्यक्तिहेतुत्वमुक्तम्। पुनः कीदृशस्य? अनिच्छस्येति—इच्छा अहङ्कारस्योत्पादिनी प्रतिपादिता, तया रहितस्येत्यर्थः; एतेन निर्विकारत्वमुक्तम्। पुनः किम्भूतस्य? चिदानन्दैकरूपिण इति—चित् ज्ञानम्, आनन्दं परब्रह्मावबोधलक्षणं धर्मः, तद्द्वयमेवैकं रूपं यस्य; यद्वा—चित्स्वरूपानन्दमेवैकं रूपं यस्य ज्ञानानन्दस्येत्यभिप्रायः। तथा चोक्तम्— "अस्ति ब्रह्म चिदानन्दं स्वयंज्योतिर्निरञ्जनम्। ईश्वरो लिङ्गमित्युक्तमद्वितीयमयं विभुः॥ निर्विकारं निराकारं सर्वेश्वरमनीश्वरम्। सर्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञकाः॥ अनाद्यविद्योपहता यथाग्नेर्विस्फुलिङ्गकाः॥" इति। अत

* "पुंसोऽस्ति प्रकृतिर्नित्या" इति गूढार्थदीपिकासम्मतः पाठः समीचीनः।

† "अचेतनादि चैतन्यम्" इत्यत्र "अचेतनाऽपि चैतन्य" इति गूढार्थदीपिकासम्मतः पाठः समीचीनः।

महान्।—

प्रकृतिर्विश्वजननी पूर्वं बुद्धिमजीजनत्।
इच्छामयीं महद्रूपाम्—" ॥ ५३ ॥

अहङ्कारः।—

"—अहङ्कारस्ततोऽभवत्।
त्रिविधः सोऽपि सञ्जातो रजःसत्त्वतमोगुणैः ॥५४॥

एकादशेन्द्रियाणि।—

तस्मात् सत्त्वरजोयुक्तादिन्द्रियाणि दशाभवन्।

कर्त्तृत्वनिमित्ततया पूर्वश्लोकेन सम्बन्धः, तेन सा मूलप्रकृतिः परमात्मनो योगेन कृत्वा अखिलं विश्वमकरोदिति तात्पर्य्यार्थः। अखिलं चराचरात्मकं, कीदृशम्? तदाह, अचेतनादीति।—अचेतनमव्यक्तमादिर्यस्य तदचेतनादि। चेतन्यमिति—चेतनान्वितम्। ननु कथमचेतनस्य कारणत्वं प्रवर्त्तते? तदसङ्गतमिति सत्यं, यथा वत्सविवृद्ध्यर्थं क्षीरमज्ञं कारणत्वेन प्रवर्त्तते तद्वदिति। अन्यत् सविस्तरं विस्तरभयान्न लिखितम्। पुनः कीदृशम्? अनित्यमिति—विनाशि, घटपटादिवत्। पुनः कथम्भूतम्? नाटकाकृति नाटकस्वरूपम्, ऐन्द्रजालिकवस्तु वदिति भावः ॥ ५१।५२ ॥

इदानीमेकेन कारणेन सर्वेषां कार्य्याणामुत्पत्तिक्रममाह, प्रकृतिरिति।—प्रकृतिरित्यव्यक्तापरपर्य्याया * पूर्वमादौ बुद्धिं महानिति विकारसंज्ञम् अजीजनदुत्पादयामास। कीदृशीम्? इच्छामयीं सत्त्वरजस्तमोगुणस्वभावां नानात्मिकामित्यर्थः। पुनः कीदृशीम्? महद्रूपाम् † इति—महानिति रूपं पर्य्यायनाम यस्याः सा तथा ताम्; यद्वा—निर्मलस्फटिकोपलप्रख्यां, सत्त्वसमुद्रेकत्वात्। तत इति—बुद्धितत्त्वात्, अहङ्कारोऽभिमानव्यापारलक्षणोऽभवत्। सोऽपि सत्त्वादिगुणैः कृत्वा त्रिविधः सञ्जातः, त्रिविध इति—वैकारिकस्तैजसो भूतादिरित्यर्थः। तत्र वैकारिकः सात्त्विकः, तैजसो राजसः, भूतादिस्तामस इति ॥ ५३।५४ ॥

अथ त्रिविधस्यापि तस्य कार्य्यमाह, तस्मादिति।—तस्मादिति—अहङ्कारात्

* "प्रकर्षेण क्रियते अनया इति प्रकृतिः, गुणानां साम्यं प्रकृतिः, सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति साङ्ख्ये" इति गू० दी०।

† "महद्रूपां बहुरूपाम्" इति गू० दी०।

मनश्च जातं तान्याहुः श्रोत्रत्वङ्नयनं तथा॥
जिह्वा-घ्राण-वचो-हस्त-पादोपस्थ-गुदानि च ॥५५॥

बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च।—

पञ्च बुद्धीन्द्रियाण्याहुः प्राक्तनानीतराणि च।
कर्मेन्द्रियाणि पञ्चैव कथ्यन्ते सूक्ष्मबुद्धिभिः ॥ ५६ ॥

पञ्चतन्मात्रम्।—

रजःसत्त्वगुणोत्कृष्टादहङ्कारादथाभवत्।
तन्मात्रपञ्चकं तस्य नामान्युक्तानि सूरिभिः ॥ ५७ ॥
शब्दतन्मात्रकं स्पर्श-तन्मात्रं रूपमात्रकम्।
रसतन्मात्रकं गन्ध-तन्मात्रञ्चेति तद्विदुः ॥ ५८ ॥

दशेन्द्रियाण्यभवन्, न केवलं दशसङ्ख्याकानि, मनोऽपि इन्द्रियसंज्ञमुत्पन्नम्। कीदृशादहङ्कारादित्याह, सत्त्वरजोयुक्तादिति।—सत्त्वरजोग्रहणात् तमोऽपि प्राप्तमेव, यतः सात्त्विकादहङ्कारात् राजससहायात् तमोमात्रयानुविद्धादेका-दशेन्द्रियाण्युत्पद्यन्ते इति भावः। एके "तस्मात्" इत्यस्य स्थाने "यत्र सत्त्वरजोयुक्तात्" इति पठन्ति व्याख्यानयन्ति च। तानीन्द्रियाणि च साङ्ख्ये अहङ्कारकार्य्याणि कथितानि, वैद्यके तु भौतिकानीत्यभिप्रायः। तत्र पञ्च प्राक्तनानि श्रोत्रादीनि बुद्धीन्द्रियाण्याहुः, बुद्धेराश्रयत्वात्। प्राक्तनानि पूर्वपठितानि। इतराण्यव शिष्टानि पञ्च कर्मेन्द्रियाणि कथ्यन्ते, तेषु कर्मणामाश्रयत्वात्। पूर्वाणि पञ्च श्रोत्रत्वङ्नयनजिह्वाघ्राणानि, इतराणि च पञ्च वचोहस्तपादोपस्थगुदानि। सूक्ष्मबुद्धिभिरिति ग्रहणेन मनोऽप्युभयात्मकं सूच्यते, बुद्ध्यात्मकं कर्मात्मकञ्चेत्यर्थः, बुद्धीन्द्रियाणां कर्मेन्द्रियाणाञ्च मनोऽधिष्ठानानामेव प्रवृत्तेः ॥ ५५·५६ ॥

त्रिविधाहङ्कारात्तन्मात्रपञ्चकं भवति, यतस्तदाह, रज इत्यादि।—अथानन्तरम्, अहङ्कारादिति—अहङ्कारो भूतादिसंज्ञः तस्मादिति तामसरूपादित्यभिप्रायः। कीदृशादित्याह, रजःसत्त्वगुणोत्कृष्टादिति—राजससहायात् सत्त्वमात्रयाऽनुविद्धात् तामसादहङ्कारादित्यर्थः, ईदृशात्तन्मात्रपञ्चकं भवति इति तात्पर्य्यार्थः। सा सा मात्रा यस्मिन् तत्तन्मात्रं, तच्चानुद्भूतस्वभावं बाह्येन्द्रियाग्राह्यं, वक्ष्यमाणशब्दादीन्येव पञ्चतन्मात्राणीति, तच्च योगिभिरेव ग्राह्यम् ॥५७।५८॥

पञ्चभूतम् ।—

तन्मात्रपञ्चकात्तस्मात् सञ्जातं भूतपञ्चकम् ।
व्योमानिलानलजल-क्षौणीरूपञ्च तन्मतम् ॥ ५९ ॥

इन्द्रियार्थाः ।—

शब्दः स्पर्शश्च रूपञ्च रसगन्धावनुक्रमात् ।
तन्मात्राणां विशेषाः स्युः स्थूलभावमुपागताः ॥ ६० ॥

बुद्धीन्द्रियाणां विषयाः ।—

बुद्धीन्द्रियाणां पञ्चैव शब्दाद्या विषया मताः ॥ ६१ ॥

कर्मेन्द्रियाणां विषयाः ।—

कर्मेन्द्रियाणां विषया भाषाऽऽदानविहारिताः ।
आनन्दोत्सर्गकौ चैव कथितास्तत्त्वदर्शिभिः ॥ ६२ ॥

---

तन्मात्रपञ्चकादिति ।—तस्मात् पूर्वोक्तात्तन्मात्रपञ्चकात् शब्दादेर्भूतपञ्चकं व्योमादिकं सञ्जातं सम्यक्प्रकारेणोत्पद्यते इति । सम्यक्प्रकारग्रहणेनैकोत्तरपरिवृद्धिः सूच्यते, तद्यथा—शब्दतन्मात्राच्छब्दतद्गुणं व्योम, शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणो वायुः, शब्दस्पर्शतन्मात्रसहितात् रूपतन्मात्राच्छब्दस्पर्शगुणं तेजः, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रात् शब्दस्पर्शरूपरसगुणा आपः, शब्दस्पर्शरूपरसतन्मात्रसहितात् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी । पतञ्जलिमतानुसारिणश्च शब्दादिभ्यो व्योमादीनामुत्पत्तिमिच्छन्ति ॥ ५९ ॥

इदानीं पञ्चकानां तन्मात्रकाणां विशेषा उच्यन्ते, शब्द इति ।—अनुभवयोग्यैः सुखदुःखमोहरूपधर्मैर्विशिष्यन्ते इति विशेषाः, ते शब्दस्पर्शरूपरसगन्धाः । तन्मात्राणि त्वविशेषाणि, यतस्तानि अनुभवयोग्यैः सुखादिभिर्विशेषं कर्त्तुं न शक्यन्ते सूक्ष्मत्वात् ; अत एव स्थूलभावमुपागता अमी विशेषा इत्यर्थः । केचिदमुं श्लोकं तन्मात्रपञ्चकादनन्तरं पठन्ति, सङ्गतत्वात् ॥ ६० ॥

अथेन्द्रियाणां विशेषाणां विषयान् दर्शयन्नाह, बुद्धीन्द्रियाणामिति—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां, शब्दाद्या इति—शब्दस्पर्शरूपरसगन्धाः, एते तु तेषामनुक्रमेण बोद्धव्याः । कर्मेन्द्रियाणामिति—वचोहस्तपादोपस्थगुदानां यथाक्रमं भाषाऽऽदानविहारानन्दोत्सर्गा विषयाः कथिताः । भाषा वचनम्, आदानं ग्रहणं, विहारोऽत्र चलनादिकम्, आनन्दो हर्षः, उत्सर्गो मलपरित्यागः इति । तत्त्वदर्शिभिः पुरुषैश्चतुर्विंशतितत्त्वरहस्यज्ञापकैरित्यर्थः ॥ ६१।६२ ॥

प्रकृतेः पर्य्यायाः।—

प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा।
एतानि तस्या नामानि शिवमाश्रित्य या स्थिता ॥६३॥

चतुर्विंशतितत्त्वानि।—

महानहङ्कृतिः पञ्च-तन्मात्राणि पृथक् पृथक्।
प्रकृतिर्विकृतिश्चैवं सप्तैतानि बुधा जगुः ॥ ६४ ॥
दशेन्द्रियाणि चित्तञ्च महाभूतानि पञ्च च।
विकाराः षोड़श ज्ञेयाः सर्वं व्याप्य जगत् स्थिताः ॥६५॥

जीवात्मनो विवरणम्।—

एवं चतुर्विंशतिभिस्तत्त्वैः सिद्धे वपुर्गृहे।
जीवात्मा नियतं नित्यो वसति स्वान्तदूतवान् ॥६६॥

---

इदानीं मूलप्रकृतेः पर्य्यायनामान्याह,—प्रधानमिति। प्रधानं प्रकृतिरिति—मूलप्रकृतिः, शक्तिरिति—कारणरूपा, नित्या अविनाशिनी, अविकृतिर्विकाररहिता। तस्याः प्रकृतेः। शिवमिति—परब्रह्मलक्षणम् आश्रित्य या स्थिता सूर्य्यस्य प्रतिबिम्बवत्, सा च सत्त्वरजस्तमःस्वरूपा भवति। तदुक्तं—"सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम" (सु० शा० १ अ०) इति ॥६३॥

इदानीं चतुर्विंशतिके तत्त्वराशौ प्रकृतित्वं निरस्यन् कथितमुपसंहरन्नाह, महानिति।—एतानि सप्त महदादीन्येव प्रकृतिर्विकृतिश्च भवन्तीति पिण्डार्थः। प्रकृतिरित्यपरेषां कारणभूता, विकृतिरिति मूलप्रकृतेः कार्य्यरूपा। अत्र यदव्यक्तग्रहणं न कृतं तत् विकृतिपदग्रहणात्, अव्यक्तन्तु केवलं हेतुभावेन प्रकृतिरेव, महदादयः सप्त कार्य्यत्वेन विकृतयोऽपि ज्ञेयाः। पञ्चतन्मात्राणीति—शब्दादीनि। इत्येवं बुधाः पण्डिताः जगुः कथितवन्तः। इदानीं षोडश विकारान् दर्शयन्नाह, दशेन्द्रियाणीति।—षोडश विकाराः कार्य्याणि, ते विकाराः दशेन्द्रियाणीति—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादानि। चित्तञ्चेति—मनोऽपीन्द्रियभूतमिति भावः। महाभूतानि आकाशपवनदहनतोयभूमय इति। एवं षोडश विकाराः, एते तु सर्वे चराचरात्मकं जगत् संसारं व्याप्य स्थिता

स देही कथ्यते पाप-पुण्यदुःखसुखादिभिः।
व्याप्तो बद्धश्च मनसा कृतिमैः कर्मबन्धनैः॥ ६७॥

जीवात्मनो बन्धनकारणानि।—

कामक्रोधौ लोभमोहावहङ्कारश्च पञ्चमः।
दशेन्द्रियाणि बुद्धिश्च तस्य बन्धाय देहिनः॥ ६८॥

इत्यर्थः। एवमिति—पूर्वोक्तप्रकारेण, चतुर्विंशतिभिस्तत्त्वैरिति—अव्यक्तं, महान्, अहङ्कारः, शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रं, श्रोत्रं, त्वक्, चक्षुः, घ्राणं, रसना, वाक्, हस्तौ, पादौ, उपस्थं, पायुः, मनः, पृथिवी, आपः, तेजः, वायुः, आकाशं, चतुर्विंशतितत्त्वानि पृथक् दर्शितानि ; एभिः सह जीवात्मा लिङ्गशरीरं नित्यः अविनाशी, नियतं सर्वकालं वपुर्गृहे स्थूलशरीरे वसति तिष्ठतीत्यर्थः। कीदृशः? तमाह, स्वान्तदूतवानिति—स्वान्तं मनस्तदेव दूतो यस्य स तथा मनोदूत इत्यर्थः। "स्वान्तं हृन्मानसं मनः" इत्यभिधानात्। स देही कथ्यते इति—स जीवात्मा देही पुरुषव्यक्तिः, देहं महदादिकृतसूक्ष्मलिङ्ग-शरीरमुच्यते, तदस्यास्तीति देही कथ्यते ; सोऽपि कर्मपुरुषो वाच्यः पञ्चविंशतितमः कथितः ; अत एव पापपुण्यसुखदुःखादिभिर्व्याप्तः ; मनसा कृतिमैः कर्म-बन्धनैश्च बद्धः, एतेन कर्मपुरुषस्य शरीरात्मनोः संयोगकारकेण मनसा संयोगे पापपुण्यसुखदुःखादयो गुणा उत्पद्यन्ते इति भावः। आदिशब्दात् इच्छाद्वेषप्रयत्न-प्राणापानोन्मेषनिमेषबुद्धिमनःसङ्कल्पविचारणास्मृतिविज्ञानाध्यवसायविषयोपलब्धिगुणा ज्ञातव्याः। ननु विकृतो जीवात्मा कथं विकारिवस्तुभिर्व्याप्तः? सत्यं, निर्विकार-स्यापि विकारिवस्तुसंयोगेन विकारित्वं स्यात् ; यथा सन्ध्यारागिरविकरनिकर-संयोगादरुणं गगनतलं भवति तद्वदित्यभिप्रायः। तत् लिङ्गशरीरे विकाराः प्रतिबिम्बिता इव तिष्ठन्तीत्येके भाषन्ते ; यथा तडागोदके प्रतिबिम्बितो द्रुमस्तडागोदकप्रकम्पेण प्रकम्पात्मकः कथ्यते इति॥ ६४—६७॥

कर्मबन्धनैर्बद्धश्चेति यदुक्तं तदिदानीं तस्य बन्धनान्याह, कामक्रोधाविति।—तस्य देहिन इति—पूर्वोक्तस्य पुरुषस्य कामादयो बन्धनाय भवन्तीत्यर्थः। कामो मनसः सङ्कल्पविशेषः ; तदुक्तं—"स्त्रीषु जातो मनुष्याणां स्त्रीणाञ्च पुरुषेषु वा। परस्परकृतः स्नेहः काम इत्यभिधीयते॥" इति। क्रोधस्तु मनसो व्याधिरूपो हिंसात्मकः ; तथा हि—"यद्रूपा हृदयाज्जन्तोः समुत्तिष्ठति वै सकृत्। पर-हिंसात्मकः क्लेशः क्रोध इत्यभिधीयते॥" इति। लोभो गर्द्धः, तृष्णा ; तथा

जीवात्मनः बन्ध-मुक्ति-दुःख-सुखहेतवः।—

आप्नोति बन्धमज्ञानादात्मज्ञानाच्च मुच्यते।
तद्दुःखयोगकृत् व्याधिरारोग्यं तत्सुखावहम्॥ ६८॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां
कलादिकाख्यानं नाम पञ्चमोऽध्यायः॥ ५॥

चोक्तं—"परार्थं परभोगांश्च परसामर्थ्यमेव च। दृष्ट्वा श्रुत्वा च या तृष्णा जायते लोभ एव सः॥" इति। मोहस्तु मिथ्यावबोधः सर्वपापमूलम्; यथा—"अश्रेयः-श्रेयसोर्मध्ये भ्रमणं संशयो भवेत्। मिथ्याज्ञानन्तु तं प्राहुरहिते हितदर्शनम्॥" इति। अहङ्कारोऽभिमानव्यापारलक्षणः; यथा—"अहमित्यभिमानेन यः क्रियासु प्रवर्त्तते। कार्य्यकारणयुक्तस्तु तदहङ्कारलक्षणम्॥" इति। दशेन्द्रियाणि प्रसिद्धानि। बुद्धिश्चेति—मनोव्यापारः॥ ६८॥

इदानीं बन्धनहेतुमाह, आप्नोतीति।—अज्ञानादिति—मोहात् बन्धं लोक-माप्नोतीति, पुरुष इति शेषः, स एव पुरुषः आत्मज्ञानाद्धर्माधर्मविचारणान्मुच्यते बन्धनादेव, कैवल्यं प्राप्नोतीति भावः। अत एव व्याधिस्तद्दुःखयोगकृद्भवति तत्सुखावहमारोग्यमिति। तद्दुःखयोगकृदिति—तत् तयोः शरीरशरीरिणोः, शरीरमनसोरिति केचित्, * दुःखसंयोगकृदिति—दुःखन्तु स्वभावतः प्रतिकूल-वेदनीयम्। सुखन्तु स्वभावतोऽनुकूलवेदनीयम्। आरोग्यं स्वास्थ्यव्यापारलक्षणम्। इति सृष्टिक्रमशारीरम्॥६८॥

इति श्रीबालव्याख्यानयप्रकाशवैद्यश्रीभावसिंहात्मजेन आढमल्लेन विरचितायां शार्ङ्गधर-
दीपिकायां प्रथमखण्डे कलादिकाख्यानं नाम पञ्चमोऽध्यायः॥ ५॥

* नैयं व्याख्या समीचीना; यतः निबन्धसङ्ग्रहे "तच्छब्देनानन्तरनिर्दिष्टः पुरुषोऽधिक्रियते। दुःखं कायवाङ्मानसपीडा, विविधदुःखमादधतीति व्याधयः। तस्य पुरुषस्य दुःखाय संयोगो येषामागन्तुप्रभृतीनां ते व्याधयः; अथवा, तस्य पुरुषस्य येषु सत्सु यैर्वा कारणभूतैः यैभ्यो वा दुःखं जायते ते व्याधयः। एतौ वाक्यार्थौ व्याख्यौ। अन्ये तु—तस्य पुरुषस्य दुःखानां वेदनानां ये संयोगास्ते व्याधयः। अपरे तु—दुर्दुष्टानि खानि स्रोतांसि दुःखानि, तस्य पुरुषस्य दुःखानां दुष्टस्रोतसां निमित्तं संयोगा येषां ते तथोक्ताः" इति व्याख्या परिहृयते।

# षष्ठोऽध्यायः ।

## अथ आहारादिगतिरध्यायः ।

आहारपरिपाके प्रथमक्रमः ।—

यात्यामाशयमाहारः पूर्वं प्राणानिलेरितः ।
माधुर्य्यं फेनभावञ्च षड्रसोऽपि लभेत सः ॥१॥

आहारपाके द्वितीयतृतीयक्रमद्वयम् ।—

अथ पाचकपित्तेन विदग्धश्चाम्लतां व्रजेत् ।
ततः समानमरुता ग्रहणीमभिनीयते ॥२॥

---

इदानीमाहारादिगतिरध्यायः पूर्वं दर्शितस्तमाह,—अथेति । यातीत्यादि ।—आहारः पाञ्चभौतिकस्वरूपमशनमित्यर्थः, तदुक्तं सुश्रुते—"पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः" ( सु० सू० ४६ अ० ) इति । एवंविधः स आहारः पूर्वमादौ आमाशयं याति प्राप्नोतीत्यर्थः । आमाशयश्च नाभिस्तनान्तरे कोष्ठविशेषमाहुः, यथा—"नाभिस्तनान्तरं जन्तोराहुरामाशयं बुधाः" ( च० वि० त्रिविधकुक्षीय० ) इति । कीदृशः ? तमाह, प्राणानिलेरित इति—प्राणवायुना प्रेरित इति भावः । "हृदि प्राणानिलो मतः" इति वचनात् । तत्र षड्रसयुक्तोऽपि स आहारः माधुर्य्यं मधुररसबाहुल्यं फेनभावञ्च लभते प्राप्नोति, कफस्थानगतत्वात् ; कफोऽपि मधुर इति प्रसिद्धः ; अत एवाह तन्त्रान्तरे—भुक्तादौ कफस्य वृद्धिरिति, रससाधर्म्यात् अस्यैवामाजीर्णसंज्ञा, यतः,—"माधुर्य्यमन्नं गतमामसंज्ञम्" ( सु० सू० ४६ अ० ) इति ॥ १ ॥

अथ स्थानान्तरप्राप्तिमाह,—अथ पाचकेति ।—अथानन्तरं स एवामाशयस्थिताहारः पाचकपित्तेन पाचकाग्नितेजसा विदग्धः सन् पच्यमानाभिमुखः सन्नम्लतां व्रजेत, यतोऽस्मात् पित्तं जायते ; तत्रावस्थाया—"विदग्धमम्लं गतमम्लभावम्" ( सु० सू० ४६ अ० ) इति । आमाशयाच्चलितोऽप्राप्तग्रहणीपदो यदा भवति तत्र स्थानान्तरं वदन्त्येके, नैवं सर्वमतं, किन्तु पाचकाग्निस्थानसमीपवर्त्ती यदा भवति तदा विदग्धो भवतीत्येके भाषन्ते । स्वमते तु आमाशयस्थावस्थायामेव पित्तवैदग्ध्यादम्ल एव स्यात्, यतः पित्तं विदग्धमम्लतामुपैति । इदानीं तृतीयावस्थागतस्य कार्य्यमाह, तत इत्यादि ।—ततस्तस्मात् स्थानात् समानमरुता नाभिगतवायुना कृत्वा ग्रहणीं वह्निस्थानमभिनीयते प्राप्यते, आहार इति शेषः । एतत् स्थानं कलाशब्देन वाच्यं, यत,—"षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । पक्वामाशयमध्यस्था

ग्रहणीनिर्देशः।—

( षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता।
पक्वामाशयमध्यस्था ग्रहणीत्यभिधीयते ॥ * )

सुपक्वापक्वाहारयोः क्रिया।—

ग्रहण्यां पच्यते कोष्ठ-वह्निना जायते कटुः।
रसो भवति सम्पक्वादपक्वादामसम्भवः ॥३॥

सम्यक्पक्वरसस्य क्रिया।—

वह्नेर्बलेन माधुर्य्यं स्निग्धतां याति तद्रसः।
पुष्णाति धातूनखिलान् सम्यक् पक्वोऽमृतोपमः ॥४॥

ग्रहणी सा प्रकीर्त्तिता ॥" ( सु० उ० ४० अ० ) इति। ग्रहण्यामपि कोष्ठवह्निना कृत्वा पच्यते; कोष्ठग्रहणं धात्वग्निनिरासार्थम्; तस्मात् कटुको जायते इति तात्पर्य्यार्थः। यत्र "कटुकाज्जायते वायुः" इति तद्विष्टब्धाजीर्णमाहुरित्येके, यदुक्तं— "अम्मतोदशूल विष्टभ्यमानङ्गविबद्धवातम्" ( सु० सू० ४६ अ० ) इति। अथ तादृशस्याहारस्य द्विविधामवस्थां वक्तुमाह, रस इति।—वह्निस्थाने स्थितस्याहारस्य सम्यक् पाकाद्रसो भवति, असम्यक् पाकादामः सम्भवति इति। रस इति —समाग्निपरिपाचितत्वात् सारभूतो यो द्रवांशः स रस इत्युच्यते, आमश्च अपरिपाकाद्भवति; तदुक्तं—"जठरानलदौर्बल्यादविपक्वस्तु यो रसः। स आमसंज्ञको देहे सर्वदोषप्रकोपकः॥" इति ॥ २।३ ॥

इदानीं तयोः रसामयोर्व्यापारं दर्शयन्नाह, वह्नेरिति।—तद्रस इति पूर्वोक्तः, वह्नेर्बलेनेति—रसगताग्निप्राबल्यात् मधुरतां स्निग्धताञ्च याति प्राप्नोति सच अखिलान् रक्तादीन् धातून् पुष्णाति, तस्मात् सम्यक् पक्वो रसः अमृतोपमः स्यात्, यथा अमृतं जीवनं मधुरादिगुणयुक्तम् इति श्रुतिः, तथा अयमपि जीवनधारणतर्पणादिगुणयुक्त इत्यभिप्रायः सौम्यत्वात्; तदुक्तं सुश्रुते—"स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते" ( सु० सू० १४ अ० ) इति ॥ ४ ॥

* प्राचीनोऽयमिति टीकाकर्त्तुरभिमतम्।

असम्यक्पक्वरसस्य क्रिया ।—

मन्दवह्निविदग्धश्च कट्वर्वाऽम्लो भवेद्रसः ।
विषभावं व्रजेद्वाऽपि कुर्य्याद्वा रोगसङ्करम् ॥५॥

आहारस्य सारमलयोर्निर्देशः मूत्रस्वरूपञ्च ।—

आहारस्य रसः सारः सारहीनो मलद्रवः ।
शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात् ॥६॥

मलस्य स्वरूपम् ।—

तत्किट्टञ्च मलं ज्ञेयं तिष्ठेत् पक्वाशये च तत् ।
वलित्रितयमार्गेण यात्यपानेन नोदितम् ॥७॥

वलित्रयस्य नामानि ।—

प्रवाहणी सर्जनी च ग्राहिकेति वलित्रयम् ॥८॥

---

अस्यैव स्वरूपान्तरमाह, मन्दवह्निविदग्ध इत्यादि ।—स एव रसो यदा मन्दवह्निविदग्धो भवति अग्नेर्मान्द्यान्नासम्यक् पक्व इति भावः, तदा कट्वम्लो वा भवेत्, विषभावं मारणं मारणात्मकरूपतां व्रजेत् प्राप्नोति वा, यदि मारणात्मको न भवति अल्पत्वात्, तदा रोगसङ्करं रोगसमूहं कुर्य्यात् दोषदूषितत्वात् न तु स्वयमेव, यतः स्नेहदग्धव्यपदेशवत्, तदुक्तं—"रसादिस्थेषु दोषेषु व्याधयः सम्भवन्ति ये । ते तज्जा इत्युपचारेण (?) तानाहुर्घृतदग्धवत् ॥" इति ॥५॥

अथाहारस्य रससारत्वं निरूप्य नीरसस्य निःसारत्वं दर्शयन्नाह, आहारस्येति ।—आहारस्य पूर्वप्रतिपादितस्य यो रसो विदितस्वरूपः स सार इत्यभिहितः, सारो मुख्यत्वेन तर्पणादिकृतत्वात् । सारहीन इति साररहित आहारस्यांशो वर्त्तते स मलद्रवसंज्ञः, मलं पुरीषं, द्रवं मूत्रम् । तयोर्भिन्नगमनस्थानविशेषमाह, शिराभिरित्यादि ।—तज्जलमिति पुरीषनिःसृतः द्रवांशः शिराभिर्मूत्रवाहिनीभिः कृत्वा वस्तौ मूत्राधारं नीतं तदेव मूत्रत्वमाप्नुयादिति । तत्किट्टं मलमिति—मूत्रावशिष्टं मलं किट्टसंज्ञकं ज्ञेयं, निर्द्रवत्वात्; तच्च पक्वाशये तिष्ठेदिति । अथ पक्वाशये स्थितस्य तादृशस्य तस्याधोगमनशीलत्वं दर्शयन्नाह, वलीति ।—अपानेन गुदस्थितवायुना नोदितं प्रेरितं, मलमिति शेषः, तच्च वलित्रितयमार्गेण कृत्वा याति बहिर्निःसरतीत्यर्थः ॥६।७॥

वलित्रितयनामान्याह, प्रवाहणीत्यादि ।—प्रवाहणी सर्जनी ग्राहिकेति, तासां

रक्तोत्पत्तिक्रमः।—

रसस्तु हृदयं याति समानमरुतेरितः।
रञ्जितः पाचितस्तत्र पित्तेन याति रक्तताम्॥९॥

रक्तस्य विवरणम्।—

रक्तं सर्वशरीरस्थं जीवस्याधारमुत्तमम्।
स्निग्धं गुरु चलं स्वादु विदग्धं पित्तवद्भवेत्॥१०॥

नाभिरेवाकृतयो बोद्धव्याः। वलिस्तु गुदस्यावयवभूता, तास्तिस्रो वलय उपर्युपरि व्यवस्थिताः शङ्खावर्त्तनिभा इति॥८॥

इदानीं मलद्वयं निरूप्य सारभूतस्य रसस्यापि कार्य्यत्वेन स्थानान्तरप्राप्तिमाह, रसस्त्विति।—स रसः समानमरुता नाभिगतवायुना कृत्वा ईरितः ऊर्द्ध्वं प्रेरितो हृदयं याति प्राप्नोति; एतेन किमुक्तम्? सारभूतो रसो ग्रहणीस्थानात् हृदयमागच्छतीति भावः, सकलशरीरगमनशीलत्वात्। तदुक्तं सुश्रुते—"तस्य च हृदयं स्थानं, स हृदयाच्चतुर्विंशतिधमनीरनुप्रविश्योर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति, वर्द्धयति, धारयति, यापयति, जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानात् गतिरुपलक्षयितव्या" (सु० सू० १४ अ०) इति। हृदयशब्देनात्र हृदयोपलक्षितः प्रदेश उच्यते, न तु साक्षात् हृदयं, कुतः? हृदयस्य ओजःस्थानत्वात्। तत्र सोऽपि रसः पित्तेन रञ्जकपित्तेन कृत्वा पाचितः, अत एव रञ्जितः रागं प्राप्तः सन् रक्ततां याति प्राप्नोति, यतो रसाद्रक्तं भवतीति वचनात्। रक्तस्य भावो रक्तता, तेन आदावीषद्रक्तभावं प्राप्य पश्चात् क्रमेण आरक्तः स्यात्। तदुक्तं—"रसः समाहादर्वाक् परिवर्त्तमानः श्वेतकपोतहरितहारिद्र-पद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्त्ताद्वर्णपरिवर्त्तमापद्यमानः पित्तोष्मोपरागात् शोणितत्वमापद्यते" (डा०) इति॥९॥

अथ रक्तप्राधान्यं दर्शयन्नाह, रक्तमिति।—तद्रक्तं सर्वशरीरस्थितं भवति पाञ्चभौतिकत्वात्, यतः,—"विस्रता द्रवता रागः स्पन्दनं लघुता तथा। भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते॥" (सु० सू० १४ अ०) इति। जीवस्योत्तममाधारश्चेति देहमूलत्वात्। तदुक्तं—"देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते। तस्मात् यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः॥" (सु० सू० १४ अ०) इति। पुनः कीदृशं तदाह, स्निग्ध-मित्यादि।—स्निग्धमरूक्षम्। गुरु अलघु। चलं नैकत्र स्थितिशीलं द्रवत्वात्। स्वादु मधुरं स्वभावात्। यदा विदग्धं तदा पित्तवद्भवेत् इति—यथा विदग्धं पित्तमम्लतां

शुक्रस्य रजसश्च उत्पत्तिविवरणम्।—

पाचिताः पित्ततापेन रसाद्या धातवः क्रमात्।
शुक्रत्वं यान्ति मासेन तथा स्त्रीणां रजो भवेत्॥११॥

---

व्रजेत् कटुकञ्च भवेत् * तथेदमपीति भावः। उक्तमन्यत्रापि—"अनुष्णशीतं मधुरं स्निग्धं रक्तञ्च वर्णतः। शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत्॥" (सु० सू० २१ अ०) इति। कार्य्यत्वेनापि तस्य लघुता च दर्शिता इति न दोषः॥१०॥

इदानीं धातूनामुत्पत्तिपरम्परापूर्वकं शुक्रस्यापि विषयं दर्शयन्नाह, पाचिता इति।—पित्ततापेन पित्ततेजसा पाचिताः परिपाचिता रसाद्या धातवः क्रमात् शुक्रत्वं मासेन यान्ति प्राप्नुवन्ति। रसाद्या इत्यत्र रसग्रहणात् रस एव शुक्रत्वं प्राप्नोति, अत एव यातीत्येकवचनं कृतम्। आदिग्रहणात् रक्तमांसमेदोमज्जास्थीनीति। एके—रसाद्या धातवो मासेन शुक्रत्वं यान्तीति † पठन्ति व्याख्यानयन्ति च। तेषां मते तु कार्य्य-कारणयोरभेदोपचारात्। न केवलं शुक्रत्वं स्त्रीणामपि रजो भवेत्। तदुक्तं—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते। तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम्॥" (सु० सू० १४ अ०) इति। तथेति ग्रहणात् शुक्रत्वमपि स्त्रीणामेव भवति; यतो दृश्यते हि तत्सावर्णादिभिः प्रयोगैः, अन्यथा तासां संहर्षः कथं स्यादिति। तदुक्तं—"सौम्यं त्वगाश्रयं स्वच्छं स्निग्धं योनिसमुद्गतम्। स्त्रीणां शुक्रं न गर्भाय भवेत् गर्भाय चार्त्तवम्॥" इति। मासेनेति—त्रिंशदहोभिरिति भावः। त्रिंशदहविवरणं सुश्रुताचार्य्येणोक्तं, तद्यथा—"स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धातावबतिष्ठते, एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवम्" (सु० सू० १४ अ०) इति। उक्तमपि समुच्चयेन दर्शयति—"अष्टादश सहस्राणि संख्या ह्यस्मिन् समुच्चये। कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः॥" (सु० सू० १४ अ०) इति। त्रिंशत्कलो मुहूर्त्तः कलादशभागश्चेत्यादिना माससङ्ख्या ज्ञातव्या। एतेन किमुक्तम्? रसः किलैकाहेनैव सम्पद्यते, अन्ये ये धातवस्ते पञ्चभिः पञ्चभिरहोभिः सम्पद्यन्ते इति भावः॥११॥

* व्याख्येयं न समीचीना, यतः प्रकृतिस्थमेव पित्तं कटुरसं, न तु विदग्धं, तस्याम्लत्वात्; उक्तञ्च—"पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च। उष्णं कटुरसञ्चैव विदग्धञ्चाम्लमेव च॥" (सु० सू० २१ अ०) इति। ततश्च—यथा कटुकमपि पित्तं विदग्धमम्लतां व्रजेत्, तथेदमपि इति पाठकल्पनं सङ्गतम् इति।

† अयमेव पाठः साधुः।

गर्भोत्पत्तिविवरणम्।—

कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः।
गर्भः सञ्जायते नार्य्याः स जातो बाल उच्यते॥१२॥

कन्या-पुत्र-नपुंसकोत्पत्तौ हेतुः।—

आधिक्ये रजसः कन्या पुत्रः शुक्राधिके भवेत्।
नपुंसकं समत्वेन यथेच्छा पारमेश्वरी॥१३॥

बाले औषधप्रयोगनियमः।—

बालस्य प्रथमे मासि देया भेषजरक्तिका।
अवलेहीकृतैकैव क्षीरक्षौद्रसिताघृतैः॥१४॥

गर्भोत्पत्तिमाह, कामादिति।—शुद्धशोणितशुक्रजो गर्भो नार्य्याः स्त्रियाः सञ्जायते इति। कुतः? कामात्, कामोऽभिलाषः; क? मिथुनसंयोगे मिथुनं द्वन्द्वं स्त्रीपुरुषविषयं तस्य संयोगो मेलनं तस्मिन् सति। शुद्धशोणितशुक्रयोर्लक्षणञ्च तन्त्रान्तरे यथा—"शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्। तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत्॥" (सु० शा० २ अ०) "दिनत्रयं प्रशंसन्ति कुरुते शोणितं स्त्रियाः। व्यवायस्तु तयोः क्रिया गर्भस्तस्याश्रिता भवेत्॥" "तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि। असृग्दरं विजानीयादतोऽन्यद्रक्तलक्षणात्॥" (सु० शा० २ अ०) इति। शुद्धं शुक्रं यथा—"स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च। शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभं तथा॥" (सु० शा० २ अ०) इति। "वातादिदूषितं पूति कुणपं ग्रन्थ्यपि च। क्षीणं मूत्रपुरीषाभ्यां गन्धि शुक्रन्तु निष्फलम्॥" इति। गर्भ इति—शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकार-सम्मूर्च्छितं गर्भ इत्युच्यते। स जातो बाल उच्यते इति—स गर्भो यदा जातो बहिर्निःसरति तदा बाल इत्युच्यते॥१२॥

बालशब्दः कन्यापुरुषनपुंसकेष्वपि वर्त्तते; अत एवाहाचार्य्यः, आधिक्ये इति।—तत्र च गर्भाशये यदा रजस आर्त्तवस्य आधिक्यं भवति तदा कन्या भवेत् उत्पद्येत, आर्त्तवाधिक्यशुक्रादित्यभिप्रायः। यदि शुक्राधिकस्तर्हि पुत्रः, शुक्राधिकार्त्त-वादित्यर्थः। समत्वेनेति—शुक्रशोणितयोः साम्येन समभागेन कृत्वा नपुंसकं स्यात्; यथा पारमेश्वरीच्छा अस्ति तथैव भवति, नात्र विचारः कर्त्तव्य इति भावः। इच्छेत्यनेनैव यमलजातमपि सूचितम्। तद्यथा—"बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ। यमावित्यभिधीयेते धर्मेतरपुरःसरौ॥" (सु० शा० २ अ०) इति॥१३॥

इदानीं बालस्य प्रथममासादारभ्य भेषजक्रियां दर्शयन्नाह, बालस्येति।—बालस्य

वर्द्धयेत्तावदेकैकां यावद्भवति वत्सरः।
माषैर्वृद्धिस्तदूर्द्ध्वं स्यात् यावत् षोड़शवत्सरः ॥१५॥
ततः स्थिरा भवेत्तावत् यावत् वर्षाणि सप्ततिः।
ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः ॥
मात्रेयं कल्कचूर्णानां कषायाणां चतुर्गुणा ॥१६॥

प्रथमे मासि भेषजरक्तिका देया। बालोऽत्र क्षीरादः, यतस्त्रिविधो बालः क्षीरोऽन्न-अपांद्भवति। स च क्षीरादः क्षीरान्नादः अन्नाद इति। अत एव क्षीरक्षौद्र-सिताघृतैरिति बहवोऽनुपानादयो दर्शिताः यथासम्भवोपयोगित्वेन। भेषजमत्र सुवर्णरजतशिलाजत्वादिकम्। रक्तिका गुञ्जा तत्परिमाणमित्यर्थः। प्रथमे मासीति प्रथमग्रहणं जातदिनमारभ्य भेषजं दद्यादित्यभिप्रायः। तथा च सुश्रुते—"अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्मणि कृते मधुसर्पिरनन्तासुवर्णचूर्णमिश्रमङ्गुल्याऽनामिकया लेहयेत्" (सु० शा० १० अ०) इति। अनन्तमूलचूर्णं सुवर्णचूर्णञ्च। भेषजरक्तिकेति—सामान्यभेषजग्रहणेन ग्रन्थान्तरोक्तमपि योगचतुष्टयमत्र बोद्धव्यम्। तद्यथा—"सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा। मत्स्याक्षकः शङ्खपुष्पी मधु सर्पिः सकाञ्चनम्॥ अर्कपुष्पी घृतं क्षौद्रं चूर्णितं कनकं वचा। हेमचूर्णानि कैटर्य्यः श्वेता दूर्वा घृतं मधु॥ चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि। कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः॥" (सु० शा० १० अ०) इति। एके प्राक्तनां मात्रामनिच्छन्ति, तन्मते तु विश्वामित्रोक्ता मात्रा प्रचरति। तद्यथा—"विडङ्ग-फलमात्रन्तु जातमात्रस्य भेषजम्। एतेनैव प्रमाणेन मासि मासि प्रवर्द्धितम्॥ कोलास्थिमात्रं क्षीरादे दद्याद्भैषज्यकोविदः। क्षीरान्नादे कोलमात्रमन्नादे (उ) दुम्बरोपमम्॥" इति। अवलेहीकृतैकैकेत्यादि—एकैव रक्तिका अवलेहीकृता, कैः कृतेत्याह, क्षीरक्षौद्रसिताघृतैरिति—एतेन क्षीरादिभिर्व्यस्तैर्यथायोग्यं सम्प्लाव्याव-चारयेदित्यभिप्रायः। क्षीरं स्त्रीसम्भवम् आजं वा। घृतमत्र गव्यम्। अथ भेषजस्यास्य वृद्धिह्रासत्वमप्याह, वर्द्धयेत्तावदेकैकामित्यादि।—सा भेषज-रक्तिका तावदेकैकां वर्द्धयेत यावत् वत्सरो भवति ; एतेन प्रतिमासमवृद्धाः द्वादश-मासेषु द्वादशैव रक्तिका भवन्तीत्यर्थः। अन्यदप्याह, तदूर्द्ध्वमिति—वत्सरादुपरि तावन्माषकैर्वृद्धिर्यावत् षोडशवत्सरः स्यात ; एतेन प्रतिवर्षवृद्ध्या षोडशमाषका भवन्तीत्यर्थः। माषोऽत्र मागधपरिभाषोक्तः षड्गुञ्जापरिमितः। तत इति—षोड़शवर्षादुपरि तावत् स्थिरा भवेत् यावत् सप्ततिः वर्षाणि भवन्ति। स्थिरेति

बाले अञ्जनादीनामपि कर्त्तव्यतानिर्देशः।—

अञ्जनञ्च तथा लेपः स्नानमभ्यङ्गकर्म च।
वमनं प्रतिमर्शश्च जन्मप्रभृति शस्यते॥१७॥

बाले कवलादीनां कालनिर्देश.।—

कवलः पञ्चमाद्वर्षादष्टमान्नस्यकर्म च।
विरेकः षोड़शात् वर्षात् विंशतेश्चैव मैथुनम्॥१८॥

—षोडशमासका न तु हानिः। तत इति—अमतेद्धं सैव माता बालकवस्त्रने: शनैः क्रासनीया, तेन सा मात्रा यथैव पूर्वं वर्द्धिता तथैवापकर्षणीया इत्यभिप्रायः। अत एव बालवृद्धयोः साम्याक्रिया कार्य्येति न तु सर्वेषाम्। कल्कचूर्णादीनामियमेव मात्रा सम्मता किमुतान्या वा? तदाह, मात्रेयमित्यादि।—इयं पूर्वोक्ता मात्रा कल्कचूर्णाना तद्रयोगानाञ्च, कषायाणां चतुर्गुणा विज्ञेया। एतेन किमुक्तम्? रक्तिपरिमाणे चतस्रः रक्तिकाः कार्य्याः, माषकपरिमाणे चतुर्माषका इति॥१४—१६॥

इदानीं तस्य बालकस्याञ्जनादिकं कर्म निदर्शयन्नाह, अञ्जनमिति।—बालक-स्याञ्जनादि प्रतिमर्शपर्य्यन्तं जन्मप्रभृत्येव शस्यते, जन्मदिनादारभ्य यत् यत्र विहितं तत् तत्र कुर्य्यादिति भावः। अञ्जनं सौवीराञ्जनादिकं, लेपः उद्वर्त्तनप्रभृतिक, स्नानं परिषेकः, अभ्यङ्गः अभ्यञ्जनं, वमनं वान्तिः, प्रतिमर्शेन बृंहणम् * इति॥१७॥

अपराण्याह, कवल इत्यादि।—कवलो गण्डूषभेदः, स तु पञ्चमात् वर्षादुपरि कार्य्यः न तु तदर्वाक्। नस्यकर्मेति—नासाया यद्दीयते तन्नस्यमिति, तस्य कर्म क्रिया, चतुर्थे (?), † तच्चाष्टमात् वर्षादुपरि कार्य्यं, षोडशवर्षादुपरि विरेको देयः, विशेषेण रेको विरेक इत्यनेन अपूर्णवीर्य्यस्य कोष्ठस्य रेचनस्य निषेधः षोडश-वर्षाभ्यन्तरे भवति, न तु मृदुरेचनस्य निषेधः। तदुक्तम्—"अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्। तत्साध्येषु विकारेषु मृद्वी कुर्य्यात् क्रियां शनैः॥" ( सु० सू० ३५ अ० ) इति। विंशतेश्चैव मैथुनमिति—मैथुनं स्त्रीपुरुषसंयोगलक्षणं, तच्च

* प्रतिमर्शेन बृंहणं नस्यं बोध्यमित्यर्थः। "प्रतिमर्शः नस्यभेदः मृदु न तु तीक्ष्ण, तीक्ष्णस्य अष्टमाब्दादभिधानात्" इति मु० टी०। "प्रतिमर्शः स्नेहनस्यविशेषः" इत्यन्ये टीकाकृतः।

† मन्ये, "चतुर्थे" इत्यत्र "चतुर्विधम्" इति पाठो भविष्यति; पञ्चविधेषु नस्येषु प्रतिमर्शस्य पूर्वमुक्तत्वात्।

वयोऽनुसारेण बाल्यादीनां ह्रासनिर्देशः ।—

बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ ।
बुद्धिः कर्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत् ॥१९॥

वातप्रकृतेः लक्षणम् ।—

अल्पकेशः कृशो रूक्षो वाचालश्चलमानसः ।
आकाशचारी स्वप्नेषु वातप्रकृतिको नरः ॥२०॥

---

विंशतिवर्षादुपरि समानवीर्य्यत्वं स्यादित्याह । तथा च—"पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे । समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक् ॥" ( सु० सू० ३५ अ० ) इति ॥१८॥

अथ बाल्यप्रभृतीनां जीवितावसानानां वर्षसङ्ख्यया ह्रासत्वमाह, बाल्यमिति ।—तत् बाल्यप्रभृतिकं दशत इति—दशवर्षादुपरि ह्रसेत् ह्रानिं प्राप्नोतीत्यर्थः । एतेन किमुक्तम् ? दशवर्षादुपरि बाल्यावस्था, विंशतिवर्षादुपरि वृद्धिर्वर्द्धनं, त्रिंशद्वर्षादुपरि छविः शरीरं, चत्वारिंशद्वर्षादुपरि मेधा, मेधा तु ग्रन्थाकर्षणसामर्थ्यरूपा, पञ्चाशद्वर्षादुपरि त्वक्, सा शैथिल्यरूपा भवतीति भावः ; षष्टिवर्षादुपरि दृष्टिः, सप्ततिवर्षादुपरि शुक्रम्, अशीतिवर्षादुपरि विक्रमं, तच्च साहसादिरूपं पराक्रमसंज्ञं, नवतिवर्षादुपरि बुद्धिः, शतवर्षादुपरि कर्मेन्द्रियं, दशाधिकशतवर्षादुपरि चेतश्चेतनास्थानं, विंशत्यधिकशतवर्षादुपरि जीवितं प्राणमिति । तेन विंशत्यधिकशतं परमायुर्मनुजानां भवतीति तात्पर्य्यार्थः । तदुक्तं—"समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशाः, हयानां द्वात्रिंशत् खरकरभयोः पञ्चककृतिः । विरूपा सत्वायुर्वृषमहिषयोर्द्वादश शुनः स्मृतं छागादीनां दशकसहितः षट् च परमम् ॥" ॥१९॥

इदानीं प्रकृतिलक्षणमाह, अल्पेत्यादि ।—वातप्रकृतिको नरः * ईदृशो भवति, कीदृशस्तमाह, अल्पकेश इति—तुच्छकेशः, अदीर्घकेश इत्यन्ये, यतो वातस्यातिरौक्ष्यत्वेन त्वक्पारुष्यादल्पकेशत्वम् । पुनः कीदृशः ? कृशो दुर्बलः, वातस्य शोषकत्वात् । रूक्षः रूक्षगुणत्वादस्निग्धः । वाचाल इति—प्रवचनशीलः । चलमानस इति—चञ्चलचित्तः, वातस्य चलगुणत्वात् । स्वप्नेऽपि आकाशचारी भवतीति यथा वायुराकाशे चरतीति स्वभावात् । प्रकृतिस्तु स्वभाव एवेत्याहुराचार्य्याः, यतः,—

* "नरशब्दोऽत्र सामान्यमनुष्यवाचकः स्त्रीपुंविषयः ; यतः स्त्रीणां भिन्ना प्रकृतिर्नोक्ता" इति गू० दी० ।

पित्तप्रकृतेः लक्षणम्।—

अकालपलितैर्व्याप्तो धीमान् स्वेदी च रोषणः।
स्वप्नेषु ज्योतिषां द्रष्टा पित्तप्रकृतिको नरः॥२१॥

श्लेष्मप्रकृतेः लक्षणम्।—

गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः।
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः॥२२॥

"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु॥" (सु० शा० ४ अ०) इति॥२०॥

अथ पित्तप्रकृतिमाह, अकालपलितैरिति।—पित्तप्रकृतिको नर ईदृशो भवति, कीदृशस्तमाह, अकालपलितैर्व्याप्त इति—अकाले असमये पलितैर्वार्द्धक्यैर्व्याप्तः, पित्तस्योष्मगुणत्वात् *। तदुक्तं—"क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तञ्च केशान् पचति पलितं तेन जायते॥" (सु० नि० १३ अ०) इति। पुनः कीदृशः? धीमान् बुद्धिमान् सत्त्वगुणबाहुल्यात्। स्वेदीति—प्रस्वेदयुक्तः, पित्तस्योष्ममयत्वात् द्रवगुणत्वाच्च। रोषण इति—रोषयुक्तः पित्तस्य तीक्ष्णत्वात्। स्वप्नेष्वपि ज्योतिषामग्न्यादीनां तारकादीनाञ्च द्रष्टा अवलोककः यतः तत् पित्त-गुणमुक्तं तद्गुणत्वात्॥२१॥

अथ कफप्रकृतिको नर ईदृशो भवति, कीदृशस्तमाह, गम्भीरबुद्धिरिति।—गम्भीरबुद्धिः गम्भीरा अतलस्पर्शा बुद्धिर्यस्य स तथा सर्वकार्य्यक्षमा †, कफस्य तमोगुणाधिकत्वात्। स्थूलाङ्गः स्थूलशरीरः, मेदोऽधिकत्वात्, यतः कफस्तु मेदो-वृद्धेर्मूल एव। स्निग्धकेश इति—तस्य स्नेहगुणत्वात्। महाबल इति—ओजसा शरीरे कर्मसामर्थ्यं, यतः,—"धातूनां यत् परं तेजस्तत् खलु ओजस्तदेव बलमित्युच्यते"

* ऊष्मगुणत्वात् ऊष्मणो यः गुणः, तत्त्वादित्यर्थः, न तु ऊष्म एव गुणः ऊष्मगुणः इति व्याख्या। तथा च डल्हनः,—"क्रोधादिकृतेन शरीरोष्मणा शिरो-गतेन वैकृतपित्तेन पुनः प्राकृत पलितम्, अन्यथा पित्तोष्मणोरभेदात् पुनरुक्ति-दोषः स्यात्। पञ्जिकाकारस्तु—शरीरोष्मा पावकः, पित्तं तदाश्रयः, एतौ पित्त-पावकौ एकीभूय केशान् पचेतः, एतेन केवलोष्मकृतस्य विकृतस्य दोषप्रसङ्गो निराकृत इति मन्यते" इति।

† "अचञ्चलबुद्धिः" इति गृ० टी०।

द्वन्द्वसन्निपातप्रकृत्योः लक्षणम्।—

ज्ञातव्या मिश्रचिह्नैश्च द्वित्रिदोषोल्बणा नराः ॥२३॥

वयसः प्रकृतेश्च त्रैविध्यनिर्देशः।—

* ( कौमारं यौवनं वार्द्धं प्राणिनां त्रिविधं वयः।

कफपित्तानिलप्रायं क्रमतः प्रकृतिस्त्रिधा ॥

वयोऽनुसारेण बाल्यादीनां सीमानिर्देशः।—

आषोडशात् भवेद्बालो वर्षात् त्रीरान्नवर्द्धितः।

मध्यमं सप्ततिर्यावत्तदूर्द्ध्वं वृद्ध उच्यते ॥ )

निद्रामूर्च्छाभ्रान्तितन्द्राणां दोषनिर्देशः।—

तमःकफाभ्यां निद्रा स्यान्मूर्च्छा पित्ततमोभवा।

रजःपित्तानिलैर्भ्रान्तिस्तन्द्रा श्लेष्मतमोऽनिलैः ॥२४॥

---

( सु० सू० १५ अ० ) अत एव कफबाहुल्याच्छुक्रं शुक्रायत्तं बलमिति वचनम्। स्वप्ने जलाशयालोकीति—जलाशयः नदीनदतडागादिकं कफस्य सौम्यगुणत्वात् ॥२२॥

इदानीं द्वित्रादिजत्रिदोषजप्रकृतेर्लक्षणानि दर्शयन्नाह, ज्ञातव्या इति।—मिश्रचिह्नैर्मिलितलक्षणैः कृत्वा द्वित्रिदोषोल्बणा नरा बोद्धव्याः, तेन पूर्वोक्तयो-र्दोषयोर्मिलितलक्षणैर्द्विदोषजा प्रकृतिः ज्ञेया इत्यभिप्रायः, त्रयाणां दोषाणां मिलितलक्षणैस्त्रिदोषजा प्रकृतिरवगन्तव्येति ॥२३॥

अधुना शरीरप्रसङ्गेन निद्रादीनामपि विशेषोत्पत्तिमाह, तम इति।—निद्रा स्वप्नः, सा तमःकफाभ्यां स्यात् तमोगुणकफसंसर्गेण भवतीत्यर्थः। पित्त-तमोभवा मूर्च्छा, मूर्च्छा च रूपाद्यविज्ञानं मोहसंज्ञकम् अचेतनरूपेत्यर्थः। यद्यपि वातादिभिस्त्रिभिर्दोषैः शोणितेन मद्येन विषेण च मूर्च्छा अभिमता, तथाऽपि तस्याः पित्तप्रधानत्वेन दर्शितत्वात्। तदुक्तं—"वातादिभिः शोणितेन मद्येन च विषेण च। षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते ॥" (सु० उ० ४६ अ०) इति। रजःपित्तानिलैः कृत्वा भ्रान्तिः भ्रमः, तदुक्तं—"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः। भ्रमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः † ॥" इति। श्लेष्मतमोऽनिलैः

---

* प्रक्षिप्ताविमौ इति केषाञ्चिन्मतम्।

† लक्षणमिदं क्लमस्य, न तु भ्रमस्य, यदुक्तं—"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः। क्लमः स इति विज्ञेयः इन्द्रियार्थप्रबाधकः ॥" ( सु० शा० ४ अ० ) इति। अत्र चास्य समुल्लेखः अप्रासङ्गिकः प्रामादिकश्च।

ग्लानेरालस्यस्य च लक्षणम्।—

ग्लानिरोजःक्षयाद्दुःखादजीर्णाच्च श्रमाद्भवेत्।
यः सामर्थ्येऽप्यनुत्साहस्तदालस्यमुदीर्य्यते ॥२५॥

जृम्भाया लक्षणम्।—

चैतन्यशिथिलत्वात् यः पीत्वैकं श्वासमुद्वहेत्।
विदीर्णवदनः श्वासं जृम्भा सा कथ्यते बुधैः ॥२६॥

क्लान्त्वा तन्द्रा स्यात्, तन्द्रा निद्राभ्रमः, तदुक्तम—"इन्द्रियार्थेष्वसम्प्राप्तिर्गौरवं जृम्भणं क्लमः। निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥" (सु० शा० ४ अ०) इति ॥२४॥

अथ ग्लानिमाह, ग्लानिरिति।—ग्लानिस्तु क्लमापरपर्य्यायवाचको हर्षक्षय इत्यर्थः। स च कारणचतुष्टयाद्भवति। किं तत् कारणचतुष्टयम्? ओजःक्षयादित्यादि।—ओजः शुक्रम्, शरीरधातुसामान्यशब्दितमोज इत्येके, तस्य क्षयात् बलक्षयादिति स्पष्टार्थः। दुःखादिति—मानसोद्वेगादिकष्टात्। तच्च दुःखं त्रिविधमिति सुश्रुतः,—"आध्यात्मिकमाधिदैविकमाधिभौतिकम्" (सु० सू० २४ अ०) इति। एषां विवरणं न लिखितमत्र विस्तरभयात्। अजीर्णादिति—अपरिपक्वान्नरसरूपात्। एतदपि त्रिविधं चतुर्विधं वा। त्रिविधमन्नजं विष्टब्धादिभक्तं चतुर्थं रसशेषमिति। श्रमादिति—शरीरायासजननकर्मणः; स च व्यायामापरपर्य्यायवाचकशब्देन कथितः, "शरीरायासजननं कर्म व्यायाम उच्यते" इति। ग्लानिलक्षणन्तु प्रसङ्गात्तन्त्रान्तरोक्तं—"वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः। न चान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् ॥" (सु० शा० ४ अ०) इति। प्रसङ्गात् तन्त्रान्तरोक्तं क्लमलक्षणं यथा—"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥" (सु० शा० ४ अ०) इति। अथाऽऽलस्यमाह, य इति।—सामर्थ्ये कर्मणि सामर्थ्ये सत्यपि योऽनुत्साहोऽप्रहर्षः स आलस्यशब्देन वाच्यः। लक्षणमस्योक्तं यथा—"सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता। शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ॥" (सु० शा० ४ अ०) इति ॥२५॥

इदानीं जृम्भालक्षणमप्याह, चैतन्येति।—पुरुषश्चैतन्यशिथिलत्वात् चैतन्यशिथिलीभावात्, चैतन्यस्य ज्ञानलक्षणस्य शिथिलीभावं किञ्चिन्म्लाननामनुभूय इव स्थितः सन् विदीर्णवदनो व्यात्तमुखो भूत्वा एकं श्वासमूर्द्ध्वगतं पीत्वा अपरं श्वासमधोगतं यदुद्वहेत् त्यजेत्, सा बुधैः पण्डितैः सुश्रुतादिभिर्जृम्भा इति कथ्यते।

क्षवस्य लक्षणम् ।—

उदानप्राणयोरूर्ध्वयोगान्मौलिकफस्रवात् ।
शब्दः सञ्जायते तेन क्षुतं तत् कथ्यते बुधैः ॥ २७॥

उद्गारस्य लक्षणम् ।

उदानकोपादाहार-स्वस्थितत्वाच्च यद्भवेत् ।
पवनस्योर्द्ध्वगमनं तमुद्गारं प्रचक्षते ॥ २८ ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां शारीरे आहारादिगतिर्नाम षष्ठोऽध्यायः ॥६॥

---

जृम्भाकाले उद्वेष्टनं नेत्राश्रुस्रवणञ्च बोद्धव्यं, यदुक्तं सुश्रुतेन—"पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृताननः । यन्मुञ्चति सनेत्रास्रं स जृम्भः इति संज्ञितः ॥" (सु० शा० ४ अ०) चित्तस्य विषयान्तरव्यासक्तिविनिवृत्तये जृम्भाकाले छोटिकादानं लौकिकं सिद्धं, वचनं हि—"क्षुद्रुत्पतनजृम्भासु जीव तिष्ठाङ्गुलिध्वनिः" इति ॥२६॥

अथ छिक्कालक्षणं दर्शयन्नाह, उदानेति।—य उदानप्राणयोरूर्द्ध्वयोगात् मूर्द्ध्नि स्रोतःपथस्थितात् कफस्रवाच्च यः शब्दः सञ्जायते उत्पद्यते तेन शब्देन बुधैः तत् क्षुतं छिक्का कथ्यते । "तेन" इति स्थाने "नसः" इति पठन्त्येके, तत्र—नसो नासातः । अन्यत्राप्युक्तं—"प्राणोदानौ च तौ स्यातां मूर्द्ध्नि स्रोतःपथस्थितौ । नसः प्रवर्त्तते शब्दः क्षुतं तदभिनिर्दिशेत् ॥" इति ॥२७॥

अथोद्गारमाह, उदानकोपादिति ।—आहारस्वस्थितत्वाच्चेति—आहारोऽशनं तस्य स्वस्थाने यदा स्थितिर्भवति तस्मादित्यर्थः, पवनस्य वायोर्यदूर्द्ध्वगमनं भवेत् तमुद्गारं प्रचक्षते इति । उदानवायोरेव प्रकोपः, प्रकोपादेव तस्यैवोर्द्ध्वगमनमित्याचक्षते । समानवायोरूर्द्ध्वगमनमित्येके ॥२८॥

इति श्रीवाक्यव्यान्वयप्रकाशवैद्यभार्विसंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां प्रथमखण्डे आहारादिगतिर्नाम षष्ठोऽध्यायः ॥६॥

इति शारीरस्थानम् ।

# अथ सप्तमोऽध्यायः।

## अथ रोगगणनाध्यायः।

रोगगणनायाः प्रतिज्ञा।—

रोगाणां गणना पूर्वं मुनिभिर्या प्रकीर्त्तिता।
मयाऽत्र प्रोच्यते सैव तद्भेदा बहवो मताः॥१॥

पञ्चविंशतिज्वराणां विवरणम्।—

पञ्चविंशतिरुद्दिष्टा ज्वरास्तद्भेद उच्यते।
पृथग्दोषैस्त्रयो द्वन्द्व-भेदेन त्रिविधः स्मृतः॥२॥

---

पूर्वमुक्तं रोगाणां गणना चेति, तत्क्रमपि दर्शयन्नाह, रोगाणामिति।—मुनिभिस्त्रैकालिकज्ञानदर्शिभिः रोगाणां ज्वरादीनां गणना सङ्ख्याकरणं पूर्वमादौ या प्रकीर्त्तिता कथिता, सैव गणना मया, आचार्य्येणेति शेषः, अत्रास्मिन् ग्रन्थे प्रोच्यते कथ्यते। तद्भेदा रोगभेदा बहवो मताः कथिताः, अत्रापि मुनिभिरिति शेषः। रोगत्वेन रोगाणां सङ्ख्यामात्रमत्र ग्राह्यं नान्यदित्यभिप्रायः। सङ्ख्यामात्रमपि प्रधानतार्थं, निदानादिपञ्चकं रोगज्ञापकं दर्शितं. तत्र सम्प्राप्तिस्तु कथिता, तस्याः सङ्ख्या पर्य्यायनामेति *। तदुक्तं—"सङ्ख्याविकल्पप्राधान्यबलकालविशेषतः। सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति॥" (मा० नि० १ अ०) इति न्यायात् सङ्ख्यामात्रमपि नात्र निरर्थकम्॥१॥

इदानीं सङ्ख्यामात्रं प्रकटयन्नाह, पञ्चविंशतिरिति।—ज्वराः पञ्चविंशतिरुद्दिष्टाः कथिताः। पञ्चविंशतिरेवात्र हेतुः ज्वरेणैव दर्शिताः। सन्तापलक्षणो ज्वर इति। तदुक्तं—"क्रोधात् पित्तमेवाग्निस्तदूष्मा ज्वरः" इति। अत एवाह माधवकरेण —"दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भवः। ज्वरोऽष्टधा पृथग्द्वन्द्वसङ्घातागन्तुजः स्मृतः॥" (रो० वि० ज्वर०) इति। अष्टप्रकारस्यैव पञ्चविंशतिभेदा दर्शिताः। अथ पञ्चविंशतिविवरणमाह, पृथग्दोषैरित्यादि।—पृथग्दोषैः क्रमात् त्रयो भेदाः, तेन वातेन पित्तेन कफेनेत्यर्थः। द्वन्द्वभेदेनापि त्रिविधः, द्वन्द्वभेदेन द्विदोषमिलितेन, तेन वातपित्ताभ्यां, वातश्लेष्मभ्यां, श्लेष्मपित्ताभ्यामिति।

* सङ्ख्या न सम्प्राप्तिः पर्य्यायः, किन्तु भेदविशेषः।

एकश्च सन्निपातेन तद्भेदा बहवः स्मृताः।
प्रायशः सन्निपातेन पञ्च स्युर्विषमज्वराः ॥३॥
सन्ततः सततश्चैव अन्येद्युष्कस्तृतीयकः।
चातुर्थकश्च पञ्चैते कीर्त्तिता विषमज्वराः ॥४॥
तथाऽऽगन्तुज्वरोऽप्येकस्त्रयोदशविधो मतः।
अभिचारग्रहावेश-शापैरागन्तुकस्त्रिधा ॥ ५ ॥
श्रमाच्छेदात् क्षताद्दाहाच्चतुर्धाऽऽघातजो ज्वरः।
कामाद्भीतेः शुचो रोषाद्विषादोषधिगन्धतः ॥
अभिषङ्गज्वराः षट् स्युरेवं ज्वरविनिश्चयः ॥६॥

---

एको भेदस्तु सन्निपातेन मिलितदोषत्रयेण भवति। तद्भेदा बहवः स्मृता इति— तस्य सन्निपातस्य ज्वरस्य बहवो भेदास्त्रयोदशविधाः स्मृताः कथिताः। ते तु नात्र गणिताः, यतो सान्निपातज्वर एक एव निदानद्वारेण पूर्वाचार्य्यैर्दर्शितः। भेदास्तु दोषाणां हीनमध्याधिकभावेन कथिताः। तथा हि—"द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्। समैश्चैको विकारास्ते सान्निपातास्त्रयोदश ॥" (च० सू० कियन्तःशिरसीय०) इति। पञ्च विषमज्वरास्तु सन्निपातेनैव स्युः, यदुक्तं— "ज्वराश्च विषमाः सर्वे सन्निपातसमुद्भवाः" इति वचनात्। ते च—"सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ" (च० चि० ज्वर०) इति। एके "चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः" (खरनादः) इति वदन्ति, तन्मते तु विवादं सविस्तरं, (१) तन्नात्र लिखितं विस्तरभयात् यतस्तदन्यत्र ज्ञातव्यमेव। आगन्तुकोऽप्येकः, स च त्रयोदशविधो भिन्नहेतुत्वात्; तद्यथा—त्रयोऽभिचारादिजनिताः, चत्वार आघातजाः, षडभिषङ्गजाश्चेति। अभिचारादीनामपि व्याख्या लिख्यते, यथा— अभिचारो मन्त्रादिभिर्मारणप्रयोगः। ग्रहावेशो दुष्टग्रहावेशः, भूतादीनाञ्च मनस्यनावेशो वा। शापो ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिभाषणम्। श्रम इति—शरीरायास जननव्यापारलक्षणं कर्म, तत व्यायामशब्देन वाच्यम्। छेदोऽस्त्रप्रभृतिभिः। क्षतः प्रहारः, स च लोष्टशस्त्रलगुडादिजनितः। दाहोऽग्न्यादिसम्भवः। कामोऽभिलाषः, स चाभिमतकामिन्याद्यप्राप्तिनिमित्तः। भीतिर्भयं, सा च प्रभुनिमित्तादिका। शुक् शोकः, स च धनबन्धुनाशादिनिमित्तः। रोषः क्रोधः, स तु पराभिद्रोहादिलक्षणः। विषं स्थावरजङ्गमादिरूपं, तज्जनित इत्यर्थः। ओषधिगन्धत इति—तीव्रौषधिगन्ध-

अतीसाराणां विवरणम्।—

**पृथग्दोषैः समस्तैश्च शोकादामाद्भयादपि।**
**अतीसारः सप्तधा स्यात्—"** ॥७॥

---

शान्तादिति भावः। एवमिति—अनेन प्रकारेण, ज्वरविनिश्चयः कथितः ज्वराणां विनिश्चयो ज्ञानं, ज्वरसङ्ख्यायामेव ज्ञानमित्यर्थः, यतः सङ्ख्याविकल्पेत्यादिना। ननु कथमादौ ज्वर एव प्रोक्तो नान्ये रोगाः? सत्यं, ज्वरस्तु सर्वेषां प्रधानतमः; तदुक्तं—"देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली। ज्वरः प्रधानं रोगाणामुक्तो भगवता पुरा॥" ( च० चि० ज्वर० ) इति॥ २—६॥

इदानीमतीसारादीनां रोगाणां भेदान् दर्शयन्नाह, पृथगिति।—अतीव सरतीत्यतीसारो गुदेन, स च सप्तप्रकारो भवति; तद्यथा, पृथक् दोषैरित्यादि—पृथक् दोषैरित्यनेन वातेन पित्तेन कफेन त्रयः। समस्तैरिति—मिलितदोषत्रयेणैकः। शोकादिति—इष्टादिवियोगनिमित्तात्। आमादपरिपक्वरसात्, आमाजीर्णाद्वा, अजीर्णमपक्वञ्च वर्षादिना। भयाद्भीतेः। ननु माधवेन षड्विधोऽतीसारः निगदितः, यथा—"एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः" ( सु० उ० ४० अ० ) इति, तत् कथमत्र सप्तविध इति? उच्यते, निदानन्तु नियतानियतभेदेन द्विविधं, शोकाजीर्णादिभ्योऽपि कदाचिदतीसार उत्पद्यते, भयनिदानेनाप्यावश्यकम् (?) अतीसारो * भवतीत्यदोषः; यतो दृश्यते हि सभयपुरुषस्य तत्क्षणमेव द्रवसरणं

---

* "भयजस्य सुश्रुते वातिकातिसारावरुद्धत्वात् षड्विधः, चरकमते भयजस्य लिखितत्वात् अत्र सप्तविधः कृतः, अतो न दोषः" इति गू० टी०। "ननु चरकादौ दोषैरेकैकशस्त्रयः सन्निपातेनैकः भयशोकजौ द्वौ एवं षड्विधः, अत्र त्वन्यथा इति कोऽभिप्रायः? उच्यते, चरके भयशोकजौ लक्षणसंज्ञाकार्यभेदात् भिन्नावुक्तौ, आमजस्तु अन्नाजीर्णकुपितत्रिदोषजत्वेन सन्निपातेनावरुद्ध इति न सङ्ख्यातिरेकः। सुश्रुते तु हेतुप्रत्यनीकचिकित्सार्थं शोकजामजौ पठितौ वातजत्वसन्निपातजत्वाभेदेऽपि, यथा वातादिजत्वाभेदेऽपि मृत्तिकाजः पाण्डुरोग इति। एवं भयशोकजावपि चरके हेतुप्रत्यनीकचिकित्सार्थं पृथक् पठितौ, सुश्रुते भयजः केवलवातिके अवरुद्धः, मानसत्वाविशेषाद्वा शोकजे अवरुद्धः इति ज्ञेयः।" इति व्याख्यामधुकोषः। संहिताकारोऽयं चरकसुश्रुतयोरुभयोरेव मतमवलम्ब्य सप्तविधः अतीसार इति कृतवान्।

पञ्चग्रहणीनां विवरणम्।—

"—ग्रहणी पञ्चधा मता।
पृथग्दोषैः सन्निपातात्तथा चामेन पञ्चमी ॥८॥

चतुर्विधप्रवाहिकाया विवरणम्।—

प्रवाहिका चतुर्द्धा स्यात् पृथग्दोषैस्तथाऽस्रतः ॥९॥

चतुर्विधाजीर्णानां विवरणम्।—

अजीर्णं त्रिविधं प्रोक्तं विष्टब्धं वायुना मतम्।
पित्ताद्विदग्धं विज्ञेयं कफेनामं तदुच्यते ॥
विषाजीर्णं रसादेकं—" ॥१०॥

गृदेनेति। तस्मादेव नियतहेतुको नाम सप्तमी भयात् प्रतिपादित इत्यर्थः। इति सप्तधा प्रतिपादितः ॥७॥

ग्रहणी पञ्चधा मतेत्यादि।—ग्रहणी वह्निस्थानं, तदाश्रितो दोष एव ग्रहणीशब्दवाच्यः, क्वचित् ग्रहणीदोष इत्युपदर्शनात्; तदुक्तं—"षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता॥" (सु० उ० ४० अ०) इति। ग्रहणात् ग्रहणी मतेत्यपि, यतः,—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" (च० चि० ग्रहणी०) इति। पञ्चधा पञ्चप्रकारा। तथा चामेन पञ्चमीति—आमेन आमवातेनेत्यर्थः ॥८॥

प्रवाहिका चतुर्द्धा स्यादित्यादि।—सशब्दं कण्ठबलेन वायोरपानमार्गेण बहिर्निःसारणं प्रवाहिका। अस्याः पर्य्यायनामानि तन्त्रान्तरप्रतिपादितानि; यथा—केचन विस्रंसीति नाम्ना कथयन्ति, एके चान्तर्ग्रन्थिरिति, केऽपि निस्राव, निवाहिकामित्यपरे। चतुर्द्धेति—वातपित्तकफैः रक्तेन च। अस्र रुधिरम्। ननु प्रवाहिकाऽतीसारयोः को भेदः? यस्माद्द्रवसरणत्वेनामपक्वलक्षणयोगात् साधर्म्यम्। उच्यते—नानाद्रवधातुसरणमतीसारः, प्रवाहिकायान्तु केवलं कफसरणमिति भेदः ॥९॥

अथाजीर्णान्याह, अजीर्णमिति।—अजीर्णं त्रिविधं प्रोक्तमिति—अजीर्णमित्यपरिपक्वान्नजनितं, त्रिविधमिति वातादिभेदेन। एके "अजीर्णं विविधं प्रोक्तम्" इत्यपि पठन्ति। तन्मतन्तु माधवेनोक्तं यथा—"आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः। अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः॥" (सु० सू० ४६ अ०) "अजीर्णं पञ्चमं

त्रिविधालसकानां विवरणम्।—

"—दोषैः स्यादलसस्त्रिधा।

त्रिविधविसूचीनां विवरणम्।—

विसूची त्रिविधा प्रोक्ता दोषैः सा स्यात् पृथक् पृथक्॥११॥

---

केचिच्चिदोषं दिनपाकि च। वदन्ति षष्ठचाजीर्णं प्राकृतं प्रतिवासरम्॥" (टी० वि० अग्निमान्द्यादि०) इति। यत् रसादेकमजीर्णं तत् विषाजीर्णमत्र प्रतिपादितं, विषवन्मारणात्मकत्वात्, रोगसङ्करकरमित्यन्ये। ननु आमाजीर्णादिभ्यो रसशेषस्य को भेदः? उच्यते—आमादित्रयमन्नजं रसशेषस्तु आहाररसजः॥१०॥

दोषैः स्यादलसस्त्रिधा इति।—दोषैर्वातादिभिः, अलस इति—विष्टब्धाजीर्णाद्भवति, * तस्य च दोषस्थिरत्वनिमित्तादलसकसंज्ञा; यदुक्तं—"प्रयाति नोर्द्धं नाधस्तादाहारो न विपच्यते। आमाशयेऽलसीभूतस्तेन चालसकः स्मृतः॥" (वा० सू० ८ अ०) इति। ननु विष्टब्धाजीर्णादलसकोत्पत्तिः; यदुक्तम्—"अजीर्णमामं विष्टब्धं विदग्धञ्च यदीरितम्। विसूच्यलसको तस्माद्भवेच्चापि विलम्बिका॥" (सु० उ० ५६ अ०) इति; विष्टब्धस्तु वातेनैव सम्भवति, कथमलसको वातादिभिस्त्रिभिर्दोषैः स्यात्? नैष दोषः, दोषकार्य्ये दोषान्तरप्रकोप एव, यथा सामान्यज्वरप्रकोपात् श्वासाद्युपद्रवाः, अथवा—"एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इत्यादिवचनात्। विसूची त्रिविधा प्रोक्तेति।—दोषैर्वातपित्तकफैः, पृथक्पृथगिति—व्यस्तानां दोषाणां त्रयो भेदा इत्यभिप्रायः। सा विसूची त्वामाजीर्णाद्भवति †। विशेषेण सूचीभिरिव मर्माणि पीडयति इति विसूची; तदुक्तं—"सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः। यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते॥" (सु० उ० ५६ अ०) इति॥११॥

* मतमिदं मधुकोषविरुद्धं, तथा च—"आमविष्टब्धविदग्धेषु विसूच्यलसकविलम्बिका यथासङ्ख्यं भवन्तीति कार्त्तिककुण्डः। तन्नेति वकुलकरः, यथासङ्ख्ये हि सति विदग्धं विलम्बिकां प्राप्नोति, तान्च कफवाताभ्यां पठिष्यति, तस्मात् त्रिविधादजीर्णात् यथासम्भवं विसूच्यादीनामुत्पाद इति युक्तम्, उक्तं हि—अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत्" इति विजयरक्षितः।

† एषाऽप्युक्तिः मधुकोषविरुद्धा।

एकविधदण्डकालसकस्य विवरणम्।—

दण्डकालसकश्चैकः—"

एकविधविलम्बिकाया विवरणम्।—

"—एकैव स्याद्विलम्बिका ॥१२॥

षडर्शसां विवरणम्।—

अर्शांसि षड्विधान्याहुर्वातपित्तकफास्रतः।
सन्निपाताच्च संसर्गात्तेषां भेदो द्विधा मतः॥
सहजोत्तरजन्मभ्यां तथा शुष्कार्द्रभेदतः॥ १३ ॥

एको दण्डकालसक इति।—स चालसकभेदः, भिन्नलक्षणत्वेन पृथग्दर्शितः; तद्यथा—"तिर्य्यग्गतास्तनं दोषा दण्डवत् स्तम्भयन्ति ये। स दण्डालसकस्त्याज्यः शीघ्रं देहविनाशकृत् ॥" इति। विलम्बिकाऽप्येका, सा विदग्धाजीर्णप्रभवा कथिता, * इयमपि त्रिदोषजनितेत्युक्तत्वात्; यथा—"दुष्टन्तु भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्द्ध्वमधश्च यस्य। विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः ॥" (सु० उ० ५६ अ०) इति। ननु विलम्बिकालसकयोरपि वातकफप्रबलयो-रूर्द्ध्वाधोऽप्रवर्त्तनशीलयोस्तुल्यत्वात् को भेदः? उच्यते—अलसके तीव्राः शूलादयो भवन्ति, विलम्बिकायां न भवन्तीति भेदः॥ १२॥

अर्शांसीति।—अरिवत् प्राणान् शृणन्ति हिंसन्ति इत्यर्शांसि अपाने मांसाङ्कुर-रूपाणीत्यर्थः। षड्विधानीति—दोषभेदेन, तत्रास्रतो रुधिरात्। यद्यपि तन्त्रान्तरे द्वन्द्वजानि प्रकृतिसमसमवायारब्धत्वात् पृथक् न गणितानि तथाऽपि दोषद्वयस्य निदान-मेलने लक्षणमेलने च द्वन्द्वलक्षणानि द्वन्द्वजानि प्रतिपादितानि, तदुक्तं—"हेतुलक्षण-संसर्गात् विद्याद्द्वन्द्वोल्बणानि च। सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥" (च० चि० अर्शः०) इति। द्वन्द्वोल्बणमित्यनेन सर्वेषामर्शसां त्रिदोषजत्वम, आधिक्येन तु व्यपदेश इति दर्शितम्; यदाह चरकः,—"अर्शांसि खलु जायन्ते नासन्निपतितैस्त्रिभिः। दोषैर्दोषविशेषात्तु विशेषः कथ्यतेऽर्शसाम् ॥" (च० चि० अर्शः०) इति। द्वन्द्वजाना-

* इदमपि मतं पूर्वपूर्ववत् विरुद्धम्। किञ्च "इयमपि त्रिदोषजनिता" इत्युक्तिरपि समनन्तरमेव प्रमाणत्वेन प्रदर्शितश्लोके "कफमारुताभ्याम्" इत्युक्त्या विरुध्यते इति विद्वद्भिर्द्रष्टव्यम्।

विविधचर्मकीलानां विवरणम्।—

त्रिधैव चर्मकीलानि वातात् पित्तात् कफादपि ॥ १४ ॥

सर्वैकभेदो नात्येकवचनत्वात्। तेषां भेदो द्विधा मत इति—तेषां षड्विधानां, द्विधेति—सहजोत्तरजन्मभ्यां सूचित:, सह शरीरेण जातानि गुदवल्यारम्भकबीर्य्य-भागस्य दोषदूषितत्वात्, कुलजानामित्यर्थ: (१) *। उत्तरजन्मेति—जन्मोत्तरसम्भवो-ऽर्शांसि मिथ्याऽऽहारविहाराभ्यामुद्भूतैर्दोषैर्भवन्तीत्युत्तरजन्मानीत्यर्थ:। माधवेन तु सहजार्श: षड्विधसङ्ख्यायां पठितमेव; यदाह—"पृथग्दोषै: समस्तैश्च शोणितात् सहजानि च। अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये॥" (मा० नि० अर्श:०) इति। सहजार्शोभिन्नलक्षणोक्तत्वात प्रसङ्गतोऽपि सहजार्शसां लक्षणान्याह सुश्रुत:,—"दुर्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्मुखानि च। तैरुपद्रुत: कृशोऽल्पभुक् शिरासन्ततगात्रोऽल्पप्रज: क्षीणरेता: क्षामस्वर: क्रोधनोऽल्पाग्निर्घ्राणशिरोऽक्षिश्रवण-रोगवान् सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभि: पीड्यते" (सु० नि० २ अ०) इति सहजानां लक्षणम्। शेषाणि तूत्तरजन्मशब्दवाच्यानि। न केवलं सहजोत्तरजन्मभ्यां द्विधा, किन्तु शुष्कार्द्रभेदतोऽपि द्विधा भवन्ति, तेन तु गुदाङ्कुरा एके शुष्का: स्रावरहिता भवन्ति वातानिलत्वात्, एके चार्द्रा: स्रावयुक्ता: पित्तरक्तातिप्रकोपत्वात् ॥१३॥

त्रिधैव चर्मकीलानीति।—गुदौष्ठं परित्यज्य कोऽभसदृशमर्श: कुर्य्यात्, तत कीलक-मिति, तत्रार्शसामेवासम्भवत्वादसौ भेद: (१); तदुक्तं—"व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहि:। कीलोपमं स्थिरखरं चर्मकीलन्तु तद्विदु॥" (वा० नि० ७ अ०) इत्यत्रापि त्वचो बहिरित्यनेन गुदौष्ठं व्यज्यते इति व्याख्यानयन्ति। स च गुदौष्ठ: कियत्परिमाण: इति विवक्षायां सुश्रुत:,—अर्द्धपञ्चाङ्गुलपरिमाणं गुदमिति, तस्यावयवभूतास्तिस्रो वलय: उपर्य्युपरि व्यवस्थिता: शङ्खावर्त्तनिभा: प्रवाहणी विसर्जनी संवरणी चेति। तत्र गुदौष्ठ: अर्द्धाङ्गुल: सार्द्धयव:, एकाङ्गुलीप्रमाणा प्रथमा वलि:, द्वितीया सार्द्धैकाङ्गुली तृतीयाऽपि सार्द्धैकाङ्गुली, एवमर्द्धपञ्चाङ्गुल-मिति †। भोजेऽप्युक्तं—"रोमान्तेभ्यो यवाद्ध्यर्द्ध गुदौष्ठं परिचक्षते। गुदौष्ठादङ्गुलं चैव प्रथमां तां वलिं विदु:॥ सार्द्धैकाङ्गुलमानेन अन्ये च परिकीर्त्तिते॥" इति ॥१४॥

* कुलजानीत्यर्थ: इति पाठ: कथञ्चित् सङ्गच्छते, परन्तु सहजानि इत्यस्य कुलजानि इत्यर्थ: न समीचीन:।

† नायं ग्रन्थो यथायथं सुश्रुते परिदृश्यते, दृश्यते च मधुकोषे।

एकविंशतिक्रिमीणां विवरणम्।—

एकविंशतिभेदेन क्रिमयः स्युर्द्विधा च ते।
बाह्यास्तथाऽऽभ्यन्तराः स्युस्तेषु यूका बहिश्चराः॥ १५॥
लिख्याश्चान्येऽन्तरचराः कफात्ते हृदयादकाः।
अन्त्रादा उदरावेष्टाश्चुरवश्च महागुदाः॥१६॥
सुगन्धा दर्भकुसुमास्तथा रक्ताच्च मातरः।
सौरसा लोमविध्वंसा रोमद्वीपा उडुम्बराः॥ १७॥
केशादाश्च तथैवान्ये शकृज्जाता मकेरुकाः।
लेलिहाश्च सशूलाश्च सौसुरादाः ककेरुकाः॥१८॥

एकविंशतिभेदेनेति।—क्रिमयस्तु एकविंशतिभेदेन विख्याताः, ते तु बाह्याभ्यन्तरभेदेन द्विधा भवन्ति। तेषु यूका बहिश्चरा इति—तेषु क्रिमिसमूहेषु यूका लिख्याश्च बहिश्चरा बाह्या बहिःशरीरे जाताः। अन्ये अवशिष्टास्तु अन्तरचराः, ज्ञातव्या इति शेषः। अन्तरे कोष्ठे चरन्तीति। ते चाष्टादशप्रकारा भवन्ति; तद्यथा—हृदयादकादिदर्भकुसुमान्ताः सप्त। कफादिति—कफप्रायदोषजाः। एतेषां स्वरूपमपि तन्त्रान्तरे प्रोक्तं—"पृथुब्रध्ननिभाः केचित् केचिद्गण्डूपदोपमाः। रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः॥ श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते॥" (वा० नि० १४ अ०) इति। तथा रक्ताच्चेति—षट् क्रिमयो भवन्ति, ते च मातरप्रभृतिकेशाद-पर्य्यन्ताः। आकारादप्येते यथा—"रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः। अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः॥" (वा० नि० १४ अ०) इति। एते षड्भेदाः कुष्ठैककारका विज्ञेयाः। तथाऽन्ये पञ्च क्रिमयः शकृज्जाता भवन्ति, शकृत् पुरीषम्; तदुक्तं—"पक्वाशये पुरीषोत्था जायन्तेऽधो विसर्पिणः" (वा० नि० १४ अ०) इति। ते तु मकेरुकादिककेरुकान्ताः पञ्च। स्वरूपतो यथा—"पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः" (वा० नि० १४ अ०) इति। इत्येवमेकविंशतिक्रमयो व्याख्याताः *। ननु माधवेन विंशतिक्रिमिभेदा दर्शिताः,

* एकविंशतिः क्रिमयः इति टीकाकर्त्तुर्व्याख्या सर्वतन्त्रविरुद्धा, स्वस्यैव विवृतिविरुद्धा च, चरकसुश्रुतादिषु सर्वतन्त्रेष्वेव विंशतिविधा एव क्रिमयः इति पाठः। टीकाकारोऽयमपि "तेषु यूकाः" इत्यादिना "मकेरुकादि-ककेरुकान्ताः पञ्च" इत्यन्तेन यद्विवरणं कृतं, तेनापि विंशतिसङ्ख्यैव लभ्यते, न तु एकविंशतिरिति सुधीभिर्द्रष्टव्यम्।]

alkrishna

तथाऽन्यः कफरक्ताभ्यां सञ्जातः स्नायुकः स्मृतः।
व्रणस्य क्रमयश्चान्ये विषमा बाह्ययोनयः॥१९॥

पञ्चपाण्डूनां विवरणम्।—

पाण्डुरोगाश्च पञ्च स्युर्वातपित्तकफैस्त्रिधा।
त्रिदोषैर्मृत्तिकाभिश्च—" ॥२०॥

"नामतो विंशतिविधाः" ( मा० नि० १४ अ० ) इत्यादिवचनात्, तत्र कथमनैक-विंशतिर्निगद्यते ? उच्यते—माधवेन तु बाह्यगताः क्रमयो द्विभेदाः कथिताः ; तद्यथा —"तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः। बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः॥ द्विधा ते कोठपिडकाकण्डूगण्डान् प्रकुर्वते॥" ( मा० नि० १४ अ० ) इति। अत्र तु विंश इति संज्ञावर्णभेदात् स्थानभेदाच्च पृथङ् न गणिता (?) इति न दोषः। अन्यः स्नायुकसंज्ञः क्रमिरेव, स तु कफरक्ताभ्यां सञ्जातः। ननु यद्येवं तर्हि द्वाविंशतिक्रमयः कथं न गणिताः ? सत्यम्—अयमपि कफजेषु सप्तसु क्रमिषु द्वौ दीर्घास्तेषां भेद एव, अत एव "कफरक्ताभ्यां सञ्जातः" इत्युक्तम्; यतः "कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः" ( मा० नि० १४ अ० ) इत्यादिवचनात्। स्नायुकरूढिविनाशाय भिन्नचिकित्सार्थदर्शनाच्च पृथक् गणितो न दोषः॥ १५—१९॥

पाण्डुरोगाश्चेति।—पाण्डुवर्णत्वेनोपलक्षितो रोगः पाण्डुरोग इति रूढिः। पञ्च स्युरिति—पञ्च प्रकारा भवन्ति। ते के ? वातपित्तकफैः कृत्वा व्यस्तास्त्रयो भेदाः। त्रिदोषैरिति—मिलितदोषवर्गेणैको भेदः। मृत्तिकाभिः इति—मृद्भक्षणेनैकः, एवं पञ्च प्रकाराः पाण्डुरोगभेदा बोद्धव्याः। मृत्तिकाभिः इति बहुवचनत्वेन बह्वी मृत्तिका दोषप्रकोपविशेषेण दर्शिताः; तथा हि—"मृत्तिकाऽदनशीलस्य कुप्यत्यन्यतमो मलः। कषाया मारुतं पित्तमूषरा मधुरा कफम्॥ कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत्॥" ( च० चि० पाण्डु० ) इति। प्रसङ्गतश्च तत्स्वरूपं सुश्रुतोक्तमाह—"या पीतवर्णा मधुरा कषाया क्षणा मधुक्षारगुणोपपन्ना। रक्ता च तिक्ता कटुका च नीला सिता च माधुर्यगुणा सदा स्यात्॥" * इत्युक्तत्वात्॥२०॥

* मुद्रितसुश्रुतग्रन्थेषु श्लोकोऽयं न दृश्यते, चरकवाग्भटहारीतेष्वपि तथा।

एकैककामला कुम्भकामला-हलीमकानां विवरणम्।—

"—तथैका कामला मता।

स्यात् कुम्भ-कामला चैका तथैकञ्च हलीमकम् ॥२१॥

त्रिविधरक्तपित्तानां विवरणम्।—

रक्तपित्तं त्रिधा प्रोक्तमूर्द्ध्वगं कफसम्भवम्।

अधोगं मारुतात् ज्ञेयं तद्दयेन द्विमार्गगम् ॥२२॥

पञ्चकासानां विवरणम्।—

कासाः पञ्च समुद्दिष्टास्ते त्रयस्तु त्रिभिर्मलैः।

उरःक्षताच्चतुर्थः स्यात् क्षयाद्धातोश्च पञ्चमः ॥२३॥

---

तथैका कामला मतेति।—उपेक्षितः पाण्डुरोग एव कामलार्थे भवति; तदुक्तं—"पाण्डुरोगी च योऽत्यर्थं पित्तलानि निषेवते। तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते॥" (च० चि० पाण्डु०) इति। रोगाय कामलास्वरूपायेत्यभिप्रायः। स्यात कुम्भकामला चैकेति—कुम्भकामलाऽपि एका भवति; कामलाया अवस्थान्तरं कुम्भकामलेत्युच्यते; यतः,—"कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला" (च० चि० पाण्डु०) इत्यादिवचनात्। एकञ्च हलीमकमिति—तदपि पाण्डुरोगावस्थायामेव भवति; तदुक्तं—"यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः। बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः॥ स्त्रीष्वहर्षोऽङ्गमर्दश्च दाहस्तृष्णाऽरुचिर्भ्रमः। हलीमकं तदा तस्य विद्यादनिलपित्ततः॥" (च० चि० पाण्डु०) इति ॥ २१ ॥

रक्तपित्तमिति।—रक्तञ्च पित्तञ्चेति सुश्रुतः। चरके तु—रागप्राप्तं पित्तं रक्तपित्तमित्युच्यते; यदुक्तं—"रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः" (च० चि० रक्तपि०) इति। उभयत्रापि न कश्चिद्दोषः। ऊर्द्ध्वगमिति—नासास्यकर्णाक्षिरन्ध्रेषु। अधोगमिति—मेढ्रयोनिगुदमार्गेषु। तद्द्वयेन द्विमार्गगमिति—तद्द्वयेन कफवाताभ्यां, द्विमार्गगमित्यूर्द्ध्वाधःप्रवृत्तिपरम्। एके "तद्द्वयेन त्रिमार्गगम्" इति पठन्ति, तत्र—रोमकूपेभ्योऽपि तत् प्रवर्त्तते इति व्याख्यानयन्ति; तदुक्तं—"कुपितं रोमकूपेश्च समस्तैस्तत् प्रवर्त्तते" (वा० नि० ३ अ०) इति ॥ २२ ॥

कासा इति।—कसनं कासः; "भिन्नस्वरः कासति शुष्कमेव" (रो० वि० कास०) इति सुश्रुतवचनात्। तथा हि—"प्राणो ह्युदानानुगतः प्रदुष्टः सम्भिन्नकांस्यस्वन-

पञ्चक्षयाणां विवरणम्।—

**क्षयाः पञ्चैव विज्ञेयास्त्रिभिर्दोषैस्त्रयश्च ते।**
**चतुर्थः सन्निपातेन पञ्चमः स्यादुरःक्षतात्॥२४॥**

षट्शोषाणां विवरणम्।—

**शोषाः स्युः षट्प्रकारेण स्त्रीप्रसङ्गाच्छुचो व्रणात्।**
**अध्वश्रमाच्च व्यायामात् वार्द्धक्यादपि जायते॥ २५॥**

गः। निरेति वक्त्रात् सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः॥" (रो० वि० कास०) इति।* पञ्चेति—पञ्च प्रकाराः। ते के प्रकाराः? इत्यत आह, ते त्रयस्तु त्रिभिर्मलैरिति—ते कासाः त्रिभिर्मलैस्त्रिभिर्दोषैस्त्रय एव कथिताः। उरःक्षताच्चतुर्थः स्यादिति—उरसि प्रहार इव वेदनाविशेषादुरःक्षतकाससंज्ञा; तथा ह्युक्तम्—"अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः। रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत्॥ स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्। कण्ठेन रुजताऽत्यर्थं विभिन्नेनेव चोरसा॥" (सु० उ० ५२ अ०) इति। क्षयाज्जातांश्च पञ्चम इति—धातवो रसाद्याः, तेषां क्षयाज्जातात्। एके धातोरित्येकवचनत्वेन शुक्रक्षयादिति व्याख्यानयन्ति, तत्र प्रतिलोमानुलोमेन धातुक्षय उक्तः न दोषः; तदुक्तम्—"अतिव्यवायिनो वाऽपि क्षीणे रेतस्यनन्तराः। क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः॥" (सु० उ० ४१ अ०) इत्यादिदर्शनात्॥ २३॥

क्षया इति।—उपेक्षितकासात् क्षयो भवतीति एके, "कासात् सञ्जायते क्षयः" (अ० नि० यक्ष्मार०) इत्युक्तत्वात् कदाचित् क्षयत्वे, न तु नियतमेव। क्षयोऽपि राजयक्ष्मसंज्ञः कथ्यते; तदुक्तं—"राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः। तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः॥" (सु० उ० ४१ अ०) इति। पञ्चमः स्यादुरःक्षतादिति—उरःक्षतो रोगविशेषः सर्वत्र प्रतिपादितत्वात्॥ २४॥

शोषाः स्युः षट्प्रकारेणेति।—"शोषोऽपि क्षयभेदः स्यात्" इति वचनात्; यतः,—"शोषणाच्च रसादीनां शोष इत्युच्यते बुधैः। क्रियाक्षयकरत्वाच्च क्षय इत्यभिधीयते॥" इति। षट्प्रकारा यथा, स्त्रीप्रसङ्गादिति—स्त्रीनिषेवणात्, अयं व्यवायशोषी कथितः। शुचः शोकात्, अयं शोकशोषी। व्रणादिति—शारीराऽऽगन्तुव्रणविशेषात्; यतः,—"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात्। व्रणितस्य भवेच्छोषः स चासाध्यतमो

---

* "भिन्नस्वरः" इत्यादि श्लोकांशः तथा "प्राणो हि" इत्यादि श्लोकश्च सुश्रुते सम्प्रति न दृश्यते, दृश्यते च माधवनिदाने।

पञ्चश्वासानां विवरणम्।—

श्वासाश्च पञ्च विज्ञेयाः क्षुद्रः स्यात्तमकस्तथा।
ऊर्द्ध्वश्वासो महाश्वासश्छिन्नश्वासश्च पञ्चमः॥ २६॥

पञ्चहिक्कानां विवरणम्।—

कथिताः पञ्च हिक्कास्तु तास्तु क्षुद्राऽन्नजा तथा।
गम्भीरा यमला चैव महती पञ्चमी स्मृता॥ २७॥

---

मतः॥" (सु० उ० ४१ अ०) अध्वश्रमादिति—अतिमार्गगमनजनितश्रमाच्च, अयमध्वशोषी। व्यायामादिति—शरीरायासजननकर्मस्वरूपात्। ननु व्यायामाध्वश्रमयोरायासजननसाधर्म्यात् को भेदः? उच्यते—व्यायामो यदा चक्रभ्रमणादेवातिक्रियते तदैव भवति, मार्गगमनशीलत्वादेवाध्वशोषः स्यात्; तदुक्तम्—"अध्वशोषी च स्रस्ताङ्गः सम्भृष्टपरुषच्छविः" (सु० उ० ४१ अ०) इत्यदोषः। वार्द्धक्यादिति—जराभिव्याप्तशरीरत्वात्, अयं जराशोषी कथितः; तदुक्तं—"जराशोषी कृशो मन्दवीर्य्यबुद्धिबलेन्द्रियः" (सु० उ० ४१ अ०) इत्यादि॥ २५॥

श्वासाश्चेति।—श्वास इति—वेगवदूर्द्धवातत्वम्; यतः,—"श्वासश्च भस्त्रिकाध्मानसमवातोर्द्धगामिता" इति। पञ्चेति—पञ्चप्रकाराः। ते के प्रकाराः? इत्याह, क्षुद्र इत्यादि।—दुःखेनाङ्गप्रबाधकोऽल्पवातजनितः क्षुद्रश्वाससंज्ञः। प्रतिलोमेन वायुना ग्रीवां शिरश्च सङ्गृह्य तीव्रवेगं करोति, स च तमसि निमग्न इव तिष्ठति, तेन तमकश्वास इति संज्ञा। यो दीर्घं श्वसिति ऊर्द्धदृष्टिश्च करोति इतस्ततो विभ्रान्तनेत्रः स ऊर्द्धश्वासादितः कथितः। यः शब्दवान् दुःखितः उच्चैः श्वसिति नष्टज्ञानविज्ञानो विशीर्णवाक् स महाश्वासपीडितोऽभिहितः। यो विच्छिन्नं श्वसिति सर्वप्राणेन पीडितः आनाहस्वेदमूर्च्छार्त्तः स छिन्नश्वासादित इति॥२६॥

हिक्कामाह, कथिता इति।—त्वरितं प्राणहरत्वेन हिक्काः कथिताः, तदुक्तं—"कामं प्राणहरा रोगा बहवो न तु ते तथा। यथा श्वासश्च हिक्का च हरतः प्राणमाशु च॥" (च० चि० हिक्काश्वा०) इति। हिक्कास्वरूपन्तु घोषवत्त्वेन प्रतिपादितम्; यतः,—"मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लीहान्त्राणि मुखादिवाक्षिपन्। स घोषवानाशु हिनस्त्यसून् यतः ततस्तु हिक्केत्यभिधीयते बुधैः॥" (सु० उ० ५० अ०) इति। पञ्चेति—पञ्चप्रकाराः। तान् प्रकारान् आह, क्षुद्रेति—या मन्दवेगैः कृत्वा जत्रुमूलादेव प्रधावति सा क्षुद्रा नाम हिक्का कथिता। योऽतिप्रयुक्तपानान्नैः पीड़ितो

चतुर्विधाग्निविकाराणां विवरणम्।—

चत्वारोऽग्नेर्विकाराः स्युर्विषमो वातसम्भवः।
तीक्ष्णः पित्तात् कफान्मन्दो भस्मको वातपित्तयोः॥ २८॥

पञ्चारोचकानां विवरणम्।—

पञ्चैवारोचका ज्ञेया वातपित्तकफैस्त्रिधा।
सन्निपातान्मनस्तापात्—" ॥२९॥

वायुरूर्द्ध्वमागत्य हिक्कयति तामन्नजां विद्यात्। या घोरा गम्भीरनादिनी नाभिप्रभवा सा गम्भीरा ज्ञेया। या चिरेण यमलैर्वेगैः कृत्वा प्रवर्त्तते शिरो ग्रीवाञ्च कम्पयति सा यमला नाम कथिता। या सततं प्रवर्त्तते मर्माण्युत्पीडयन्तीव सर्वगात्रप्रकम्पिणी च सा महती नाम हिक्का कथिता॥ २७॥

चत्वार इति।—अग्निश्चात्र जठराग्निः, तज्जनितो विकारश्चात्र कुपितदोषवाच्यः; अत एव समाग्निग्रहणं नात्र कृतं दोषसाम्यत्वात्; यतः,—"समाग्निः श्रेष्ठ उच्यते" (टी० वि० अग्निमा०) इति वचनात्। के ते चत्वारः? इत्याह, विषम इत्यादि—यो भुक्तमन्नं कदाचिन्न पचति कदाचिदाश्वेव पचति स विषमः। यो मात्रातिमात्रमप्यन्नं सुखं पचति स तीक्ष्णः। यः स्वल्पमप्यन्नं न पचति स मन्द इति। भस्मकस्तु तीव्राग्निसंज्ञः, स च वातपित्तजनितः; तदुक्तम्—"अतिप्रवृद्धः पवनान्वितोऽग्निः क्षणाद्रसं शोषयति प्रसह्य। भुक्तं क्षणाद्भस्म करोति यस्मात्तस्मादयं भस्मकसंज्ञकस्तु॥" इति॥ २८॥

पञ्चेति।—अरोचकस्तु पर्य्यायनामभिरेव त्रिधा कथितः, तद्यथा—सत्यामपि बुभुक्षायामभ्यवहारासामर्थ्यमित्यरुचिः, अभिलषितमप्यन्नं दीयमानं नाभ्यवहर्त्तुमिच्छत्यनन्नाभिनन्दनम्, अन्नस्य श्रवणस्मरणदर्शनगन्धस्पर्शनैर्यदोद्विजते स भक्तद्वेषः; एवं त्रिविधोऽपि रोगश्चरकसुश्रुताभ्यामरोचकशब्देन सङ्गृहीतः। वृद्धभोजेन संज्ञान्तराण्यपि दर्शितानि, कानि तानि? आह—"प्रक्षिप्तन्तु मुखे चान्नं जन्तोर्न स्वदते मुहुः। अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वा च भोजनम्। द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते॥ यस्य नान्ने भवेत् श्रद्धा सोऽभक्तच्छन्द उच्यते। कुपितस्य भयार्त्तस्य यस्य भक्तनिरोधनः॥" इति॥ २९॥

सप्तछर्दीनां विवरणम्।—

"—छर्दयः सप्तधा मताः।
त्रिभिर्दोषैः पृथक् तिस्रः कृमिभिः सन्निपाततः॥
घृणया च तथा स्त्रीणां गर्भाधानाच्च जायते॥ ३०॥

षट्स्वरभेदानां विवरणम्।—

स्वरभेदाः षडेव स्युर्वातपित्तकफैस्त्रयः।
मेदसा सन्निपातेन क्षयात् षष्ठः प्रकीर्त्तितः॥३१॥

षट्तृष्णानां विवरणम्।—

तृष्णा च षड्विधा प्रोक्ता वातात् पित्तात् कफादपि।
त्रिदोषैरुपसर्गेण क्षयाद्धातोश्च षष्ठिका॥३२॥

---

छर्दिमाह, छर्दय इति।—छर्दिर्वमनविशेषः। वेगैः कृत्वा आननं छादयतीति छर्दिः; तदुक्तं—"छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः। निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः॥" (सु० उ० ४९ अ०) इति। कृमिभिरिति—कृमिरोगजनिता; तथा चोक्तं—"शूलहृल्लासबहुला कृमिजा च विशेषतः। कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता॥" (सु० उ० ४९ अ०) इति। सन्निपातत इति—मिलितदोषत्रयात्। घृणया चेति—घृणया कृत्वा छर्दिर्भवतीत्यभिप्रायः; घृणा च पूत्यमेध्यादिगन्धास्वाद-नैरुत्पद्यते। घृणया चेति चकारात् बीभत्साद्यवलोकनाच्च भवतीति केचित्; तदुक्तं—"बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्" (सु० उ० ४९ अ०) इति। तथा स्त्रीणां गर्भाधानाच्च जायते इति—गृहीतगर्भायाः स्त्रियाश्छर्दिर्भवतीति; यतः,—"नार्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः" (सु० उ० ४९ अ०) इत्यादिवचनात्॥३०॥

स्वरभेदा इति।—प्रकृतिरूपस्य स्वरस्यान्यथाभावः स्वरभेदः; स च षड्विधो भवति, वातादिभिः व्यस्तास्त्रयो भेदाः, मेदसा मेदोवृद्ध्या चैको भेदः, सन्निपातेन मिलितदोषत्रयेण चैकः, क्षयात् क्षयरोगादेकः, धातुक्षयाद्वेति केचित्॥३१॥

तृष्णेति।—तृष्णा पानीयस्याभिलाषः; तदुक्तं—"सततं यः पिबेद्वारि न तृप्ति-मधिगच्छति। पुनः काङ्क्षति यस्तोयं तं तृष्णार्दितमादिशेत्॥" (सु० उ० ४८ अ०) इति। त्रिदोषैरिति—मिलितदोषत्रयेण। उपसर्गश्चागन्तुकः, स च क्षतादिशब्दवाच्यस्तेन जनिता उपसर्गिका। क्षयाद्धातोरिति—रसादिधातुक्षयात्। चकारात् सप्तमी तु भक्तोद्भवा इति मन्यन्ते केचित्; यदुक्तं—"स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवाशु

चतुर्विधमूर्च्छानां विवरणम्।—

मूर्च्छा चतुर्विधा ज्ञेया वातपित्तकफैः पृथक्।
चतुर्थी सन्निपातेन—" ॥३३॥

एकैकभ्रम-निद्रा-तन्द्रा-सन्न्यास-ग्लानीनां विवरणम्।—

"—तथैकश्च भ्रमः स्मृतः।
निद्रा तन्द्रा च सन्न्यासो ग्लानिश्चैकैकशः स्मृतः॥ ३४॥

तथा करोति" (सु० उ० ४८ अ०)। अपरे त्वामसम्भवां वदन्ति, सा दोषजान्तर्गतेति मन्यमानेन शार्ङ्गधरेण नाम स्वीकृता इति ॥३२॥

मूर्च्छेति।—मूर्च्छा मोहसंज्ञा विख्याता; यतः,—"मोहो मूर्च्छेति तामाहुः" (सु० उ० ४६ अ०) इत्यादि वचनात्। सा चतुर्विधा चतुःप्रकारा दोषभेदेन भवति। एको भ्रमः स्मृत इति—भ्रमस्तु रजःपित्तानिलाद्भवति, स तु चक्रारूढस्येवार्थसंवित्तिः। निद्रादयश्चत्वार एकैकगणिताः। निद्रेति—स्वपनम्; तथा हि—"यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः। विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः॥" (च० सू० अष्टौनिन्दितीय०) इति। तन्द्राऽपि निद्राभेदः, कथं भिन्नत्वेन पठ्यते? उच्यते; निद्रायामिन्द्रियमनोमोहः, तन्द्रायामिन्द्रियमोह इत्येव भेदः; तदुक्तम्—"इन्द्रियार्थेष्वसम्प्राप्तिर्गौरवं जृम्भणं क्लमः। निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्॥" (सु० शा० ४ अ०) इति। सन्न्यास इति—मूर्च्छादिभ्यो भिन्न एव; यतः,—"वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः। सन्न्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः॥ स ना सन्न्याससन्न्यस्तः काष्ठीभूतो मृतोपमः। प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम्॥" (च० सू० विधिशोणितीय०) इति। ग्लानिरिति—* क्लमापरपर्य्यायसंज्ञः; यदुक्तं—"वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः। न चान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत्॥" (सु० शा० ४ अ०) इति। स च हेतुचतुष्टयाद्भवति, "ग्लानिरोजःक्षयाद्दुःखाद्दशोणाश्च श्रमाद्भवेत्" इत्यादिवचनात्। अनु माधवेन मूर्च्छा षड्विधा स्वीकृता; यथा—"वातादिभिः शोणितेन मद्येन च विषेण च। षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते॥" (सु० उ० ४६ अ०) इति;

* क्लम इति नामान्तरं ग्लानेरायुर्वेदाप्रसिद्धं, ग्लानिक्लमयोर्भिन्नलक्षणत्वात्, लक्षणञ्च तयोः सौश्रुतशारीरे ४र्थाध्याये द्रष्टव्यम्। ग्लानिर्हर्षाभावः इति तु टीकाकाराः।

सप्तमदानां विवरणम्।—

मदाः सप्त समाख्याता वात-पित्त-कफैस्त्रयः।
त्रिदोषैरसृजो मद्यात् विषादपि च सप्तमः ॥३५॥

चतुर्विधमदात्ययानां विवरणम्।—

मदात्ययश्चतुर्द्धा स्यात् वातात् पित्तात् कफादपि।
त्रिदोषैरपि विज्ञेयः—" ॥३६॥

एकैकपरमद-पानाजीर्ण-पानविभ्रम-पानात्ययानां विवरणम्।—

"—एकः परमदस्तथा।
पानाजीर्णं तथा चैकं तथैकः पानविभ्रमः॥
पानात्ययस्तथा चैको—" ॥३७॥

---

तत्र कथमेव चतुर्विधा? सत्यम्; * पित्तप्रभुत्वेन शोणितस्य पित्तकार्य्यत्वात् मद्यविषयोश्च पित्तकोपत्वाच्च पित्तसम्बन्धायामेव शोणितादीनां मूर्च्छा ज्ञातव्येति न दोषः; यतः,—"मूर्च्छा पित्ततमःप्राया" (सु० शा० ४ अ०) इत्यादिवचनात् ॥३३।३४॥

मदा इति।—चित्तविस्मृतिलक्षणो मदः, यथा पूगदुष्टकोद्रवभक्षणादौ चित्तोऽनवस्थितिः, तद्वत् त्रिधाधादिति। त्रिदोषैर्मिलितदोषत्रयैः। असृजः अतिरुधिरकोपात्, कोपोऽस्य पित्तवत्। एके असृजः असृग्दरादिति व्याख्यानयन्ति; यतः,—"असृग्दरो भवेत् सर्वः साङ्गमर्दः सवेदनः। तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा॥" (सु० शा० २ अ०) इति। मद्यादिति—मद्यपानात्, आसवारिष्टादीनां पानेन मद्याभिसंज्ञो मद इत्यभिप्रायः। विषादिति—विषभक्षणात्, सर्पादिविषाक्रान्तादप्यपि ॥३५॥

मदात्यय इत्यादि।—यथोक्तविधिविपर्य्ययेण सेव्यमानं मद्यं विकाराय भवति, स विकारो मदात्ययशब्देन वाच्यः; यतः,—"ये विषस्य गुणाः प्रोक्तास्ते मद्येऽपि प्रतिष्ठिताः। तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः॥" इति। त्रिदोषैरिति—मिलितदोषत्रयेण ॥३६॥

एकः परमदस्तथेति।—परमदादयश्चत्वारो मदात्ययभेदा उक्ता भिन्नलक्षणत्वात्। तथेति ग्रहणेन दोषत्रयाभेदभिन्ना (?) एतेऽपि बोद्धव्याः। लक्षणान्यपि यथा—

* "पित्तप्रभुत्वेन—" इत्यादियन्मध्यस्थले पित्तस्य प्रभुत्वेन शोणितकोपस्य पित्तकार्य्यत्वात् मद्यविषयोश्च पित्तप्रकोपकत्वेन पित्तसम्बन्धायां शोणितादिजन्या इत्यादि पाठः सङ्गतः।

सप्तदाहानां विवरणम्।—

"—दाहाः सप्त मतास्तथा।
रक्त-पित्तात्तथा रक्तात्तृष्णायाः पित्ततस्तथा॥
धातुक्षयान्मर्मघाताद्रक्तपूर्णोदरादपि॥ ३८॥

षडुन्मादानां विवरणम्।—

उन्मादाः षट् समाख्यातास्त्रिभिर्दोषैस्त्रयश्च ते।
सन्निपाताद्विषात् ज्ञेयः षष्ठो दुःखेन चेतसः॥ ३९॥

"श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च। लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः॥ आध्मानमुग्रमथ चोद्गिरणं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि। हिक्काज्वरतोद-कफसंस्रवकम्पधमा-मूर्च्छावमिज्वरशिरोरुजनप्रदाहाः। द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः। हीनोत्तरौष्ठमतिशीतममन्ददाहं तैल-प्रभास्यमतिपानहतं त्यजेत्तु॥" (रा० वि० मदात्यया०) इति॥३७॥

दाहा इति।—दह्यते इति दाहः; यतः,—"त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभि-मूर्च्छितः। दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम्॥" (सु० उ० ४७ अ०) इति। तथा रक्तादिति—उद्रिक्तशोणितात्। तृष्णाया इति—तृष्णानिरोधादब्धातौ क्षीणे सति तेजः समुद्धतं भवतीत्यर्थः। पित्तत इति—विकृतपित्तात् पित्तज्वरसमो दाहो भवतीति। धातुक्षयादिति—रसादिधातूनां क्षीणत्वादतीव दाहो भवति। मर्मघातादिति—मर्माभिघातजनितोऽपि दाहो भवति। रक्तपूर्णोदरादिति—रक्तेन * उदरपूर्णत्वा-द्दाहो भवति। † दाहेन पीडितः जिह्वां निष्कृष्य वेपते इति लक्षणोक्तत्वात्॥३८॥

उन्मादा इति।—धीविभ्रमसंज्ञो वातादिना जनितः उन्माद इति प्रसिद्धः; तदुक्तं—"मदयन्त्युद्धता दोषा यस्मादुन्मार्गमास्थिताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः॥" (सु० उ० ६२ अ०) इति। विषादिति—विषाभिव्याप्तशरीरत्वात्।

* उदरशब्देनात्र कोष्ठोऽभिप्रेतः, सुश्रुतादौ "असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात् सुदुस्तरः" इत्युक्तेः।

† लक्षणमिदं तृष्णानिरोधजदाहस्य, न तु रक्तपूर्णोदरजदाहस्य; तथा च —"तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम्। सबाह्याभ्यन्तरं देहं प्रदहेन्मन्द-चेतसः॥ संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते॥" (सु० उ० ४७ अ०) इति।

विंशतिभूतोन्मादानां विवरणम् ।—

भूतोन्मादा विंशतिः स्युर्स्ते देवाद्दानवादपि ।
गन्धर्वात् किन्नरात् यक्षात् पितृभ्यो गुरुशापतः ॥४०॥
प्रेताच्च गुह्यकाद्वृद्धात् सिद्धाद्भूतात् पिशाचतः ।
जलाधिदेवतायाश्च नागाच्च ब्रह्मराक्षसात् ॥
राक्षसादपि कुष्माण्डात् कृत्या-वेतालयोरपि ॥४१॥

चतुर्विधापस्माराणां विवरणम् ।—

अपस्मारश्चतुर्द्धा स्यात् समीरात् पित्ततस्तथा ।
श्लेष्मणोऽपि तृतीयः स्याच्चतुर्थः सन्निपाततः ॥४२॥

---

षष्ठो दुःखेन चेतस इति—दुःखन्तु त्रिविधम्, आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकमिति। ननु तद्दुःखसंयोगा व्याधय इत्युच्यते, तत् कथं भूतोन्मादाः कथिताः ? दुःखेनैवेति प्राधान्यार्थत्वात् ; सत्यम् ; दुःखजनका अन्येऽपि भावाः सन्ति, यथा धननष्टनाशादय ; यदुक्तं—"चौरैर्नरेन्द्रपुरुषैरारिभिस्तथाऽन्यैर्वित्रासितस्य धनबान्धवसङ्क्षयाद्वा। गाढ़ं क्षते मनसि च प्रियया रिरंसोर्जायेत चोत्कटतरो मनसो विकारः॥" ( सु० उ० ६२ अ० ) इति ; एतदभिप्रायेण स्याददोषः ॥३९॥

भूतोन्मादा विंशतिरिति।—तद्विंशतेर्विवरणमाह, ते देवाद्दानवादपीत्यादि।—देवाः देवग्रहाः, तेन गणनातृभादयोऽपि ग्राह्याः। दानवा असुराः, पापबुद्धयो देवशत्रव इत्यर्थः। गन्धर्वा देवगायकाः। किन्नरास्तद्भेदा विख्याताः। यक्षाः धनदादयः। पितरः अग्निष्वात्तादयः। गुरवो ब्राह्मणाः वृद्धादयश्च। प्रेताः प्रसिद्धाः। गुह्यका देवयोनयः। सिद्धाः सनकादयः। भूता विख्याताः। पिशाचाः पिशिताशनाः। जलाधिदेवताः प्रतीताः। नागाः शेषनागप्रभृतयः। ब्रह्मराक्षसा राक्षसभेदाः। राक्षसा रावणादयः। कुष्माण्डा अपि राक्षसभेदाः। कृत्याः प्रसिद्धाः, ताश्च मन्त्रादिमारणात्मकरूपाः। वेतालाश्च देवयोनयः इति। एते ग्रहास्तु यदा शरीरं प्रविशन्ति तदा भूतोन्मादा इति सञ्ज्ञयाऽभिहिता भूतचेष्टाकारत्वेनादृष्टत्वात् ; तदुक्तं—"दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा। स्वमणिं भास्करश्चैव यथा देहञ्च देहधृक्। विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम् ॥" ( सु० उ० ६ अ० ) इति ॥४०।४१॥

अपस्मार इति।—हतस्मृतेः पुरुषस्य तमःप्रवेश इव तथा संरम्भश्च अपस्मार इत्यभिहितः ; तथा चोक्तं—"तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः। अपस्मार

चतुर्विधामवातानां विवरणम्।—

चत्वारश्चामवाताः स्युर्वात-पित्त-कफैस्त्रिधा।
चतुर्थः सन्निपातेन—" ॥४३॥

अष्टशूलानां विवरणम्।—

"—शूलान्यष्टौ बुधा जगुः।
पृथग्दोषैस्त्रिधा द्वन्द्व-भेदेन त्रिविधान्यपि॥
आमेन सप्तमं प्रोक्तं सन्निपातेन चाष्टमम्॥ ४४॥

अष्टपरिणामशूलानां विवरणम्।—

परिणामभवं शूलमष्टधा परिकीर्त्तितम्।
मलैर्यैः शूलसञ्ज्ञा स्यात्तैरेव परिणामजम्॥४५॥

---

इति ज्ञेयो गदो घोरश्चतुर्विधः॥" (रो० वि० अपस्मार०) इति। चतुर्द्धा स्यादिति—अत्र समीरादिति अनिलकोपात्। सन्निपातत इति—मिलितदोषत्रयात॥४२॥

चत्वारश्चामवाता इति।—आमेन दुष्टो वात आमवातः, यद्वा—आमसम्पृक्तो दुष्टो वात आमवातः इति, तद्द्वयमसङ्गतं कारणत्वात् (?) किन्तु दुष्टामवातयोः संयोग-श्चामवात इति कथितः; यदुक्तं—"युगपत् कुपितावन्तः त्रिकसन्धिप्रवेशकौ। स्तब्धं वा कुरुतो गात्रमामवातः स उच्यते॥" (रो० वि० आमवात०) इति। एके द्वन्द्वजभेदान् कथयन्ति; यतः,—"एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते। सर्वदेहचरः शोथः स कृच्छ्रः सान्निपातिकः॥" (रो० वि० आमवात०) इत्यादिवचनात्॥४३॥

शूलानीति।—शूलनिखातवत् वेदनाजनकत्वात् शूलसंज्ञा; यतः,—"शङ्कुस्फोटनवत् तस्य यस्मात् तीव्राश्च वेदनाः। शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते॥" (सु० उ० ४२ अ०)। इति। द्वन्द्वभेदेन द्विदोषजनितेनात्र त्रयो भेदाः। आमेना-परिपक्वरसेन वातकारणत्वात्; यतः,—"सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः" (रो० वि० शूल०) इति॥४४॥

परिणामभवं शूलमिति।—परिणामकालसम्बन्धि परिणामशूलं, तच्चोक्तशूल-सञ्ज्ञाकैरेव बोद्धव्यम्। संज्ञान्तरैरप्येतच्च दर्शितम्; तद्यथा—"भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्। केचिदन्नद्रवं प्राहुरन्ये तत् पक्तिदोषजम्॥ पक्तिशूलं वदन्त्येके केचिदन्नविदाहजम्॥" इति॥४५॥

एकैकाम्लद्रव-जरत्पित्तशूलयोर्विवरणम्।—

अम्लद्रवभवं शूलं जरत्पित्तभवं तथा।
एकैकं गणितं सुधैः—" ॥४६॥

त्रयोदशोदावर्त्तानां विवरणम्।—

"—उदावर्त्तास्त्रयोदश।
एकः क्षुन्निग्रहात् प्रोक्तस्तृष्णारोधाद्द्वितीयकः॥ ४७॥
निद्राघातात्तृतीयः स्याच्चतुर्थः श्वासनिग्रहात्।
छर्दिरोधात् पञ्चमः स्यात् षष्ठः क्षवथुनिग्रहात्॥४८॥
जृम्भारोधात् सप्तमः स्यादुद्गारग्रहतोऽष्टमः।
नवमः स्यादश्रुरोधाद्दशमः शुक्रधारणात्॥४९॥
मूत्ररोधान्मलस्यापि रोधात् वातविनिग्रहात्।
उदावर्त्तास्त्रयश्चैते घोरोपद्रवकारकाः॥५०॥

---

एवञ्चाम्लद्रवभवं शूलमेव पृथक् गणितं लक्षणान्तरबलात्; तदुक्तं—"जीर्णे जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते। पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च॥ न शमं याति नियमात् सोऽम्लद्रव उदाहृतः॥" ( रो० वि० शूल० ) इति। पिष्टाकृतिद्रवरूपो यो मूत्रमार्गेण स्रवेत सोऽम्लद्रवसंज्ञ इति केचित, तन्न सर्वसम्मतम्। जरत्पित्तभवं शूलमिति—जरत्पित्तमम्लपित्तम्, अम्लशूलमित्यन्ये॥४६॥

उदावर्त्ता इति।—ऊर्द्ध्वेन वेगविधारणेनावृतस्य वायोर्वर्त्तनमित्युदावर्त्तः, अथवा —वायोरूर्द्ध्वमावर्त्तो गमनमित्युदावर्त्तः, यतः सर्वेषु वायुरेव कारणम्; तदुक्तं— "सर्वेष्वेतेषु विधिवदुदावर्त्तेषु तत्त्वगः। वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये॥" (सु० उ० ५५ अ०) इति। त्रयोदशविधानां विवरणमाह, एकः क्षुन्निग्रहादित्यादि।— क्षुत भोजनेच्छा तस्या निग्रहो धारणमिति भावः। एवं तृष्णा पानीयस्याभिलाषः। निद्रा स्वप्नेच्छा। श्वासः उच्छ्वासः। छर्दिर्वमनम्। क्षवथुर्हाञ्चिका। जृम्भा जृम्भणं प्रसिद्धम्। उद्गारो वातोद्गिरणम्। अश्रु नेत्राम्बुसंज्ञम्। शुक्रं रेतः। मूत्रं प्रसिद्धम्। मलं पुरीषम्। वातविनिग्रहादिति—अधोवातरोधात्। एवं त्रयोदश व्याख्याताः। एतेषां मध्ये ये मूत्रविनिग्रहणादयस्ते घोरोपद्रवकारका ज्ञातव्याः। घोरोपद्रवकारका इत्यनेन मारणात्मकरूपा इत्यभिप्रायः। ननु * चतुर्दशविधा उदावर्त्ता अन्यत्र प्रति-

---

* चतुर्दशविधा उदावर्त्ताः चरकादौ कुत्रापि नोक्ताः, सर्वेष्वेव तन्त्रेषु

द्विविधानाहस्य विवरणम्।—

**आनाहो द्विविधो ज्ञेय एकः पक्वाशयोद्भवः।**
**आमाशयोद्भवश्चान्यः प्रत्यानाहः स कथ्यते ॥५१॥**

एकविधोरोग्रहस्य विवरणम्।—

**उरोग्रहस्तथा चैको—"**

पञ्चहृद्रोगाणां विवरणम्।—

**"—हृद्रोगाः पञ्च कीर्त्तिताः।**

पादिताः; तथा हि—"वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम्। निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥" (वा० सू० ४ अ०) इत्यादिना, तत् कथमत्र त्रयोदश भेदाः? उच्यते; श्रमेण श्वास उत्पद्यते तस्य धारणमिति व्याख्यायाः श्वासान्तर्गतः एव श्रमभेदोऽत्र दर्शितः। उद्गारस्थाने कास इति केचित् वातकारणत्वादिति ॥४७—५०॥

आनाह इति।—* आनाह उदरपूरणलक्षणः, स च वातोत्कटदोषैर्जनितः, आमाशयोद्भवत्वात् न स्वतन्त्रेण वायुना, अन्यथा प्रत्यानाहे तृष्णाप्रतिश्यायशिरोविदाहादयः कथं सम्भवन्ति? तथा चोक्तं—"तस्मिन् भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः। आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनञ्च ॥" (सु० उ० ५६ अ०) इति वदन्ति। "एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इत्यभिप्रायेण वातकोपेन पित्तकफावपि प्रकुपितौ भवतः इति ॥५१॥

उरोग्रह इति।—उरो गृहीतमिव मन्यते, तत कफमारुताद्भवति; तथा हि—"स्रास्रं मांसं यकृत्प्लीहा: सद्यो वृद्धिं यदा गतम्। उरोग्रहं तदा कुक्षौ कुरुतः कफमारुतौ ॥" इति। हृद्रोगाः पञ्च कीर्त्तिता इति।—हृदि रोगो हृद्रोगः, हृदि

---

त्रयोदशविधा उक्ताः, टीकाकारस्येयमाशङ्का सर्वथैव भित्तिहीना, "श्रमश्वास" इति वाग्भटीयवाक्यस्य एकविधहेतुत्वेन गणनात्।

* आनाहोऽत्र आध्मानार्थक इति मन्ये, शास्त्रे प्रत्यानाहाख्यरोगादर्शनात्, वातव्याधिविवरणे आध्मानशब्दादर्शनाच्च, न तु "आमं शकृद्वा" इत्यादिलक्षणकः आनाहः; एवञ्च "तृष्णाप्रतिश्याय" इत्यादि टीकाकारोक्तिः न सङ्गच्छते इति; किञ्च एष एव आनाहः "आमं शकृद्वा निचितं क्रमेण" इत्याद्युक्तलक्षणक आनाहः ग्रन्थकर्त्तुरभिप्रेतश्चेत् प्रकृतस्थेन आनाहसंज्ञता केवलवातजन्यत्वञ्च तथा आमजस्य

वातादिभिस्त्रयः प्रोक्तास्तुर्थः सन्निपाततः ॥
पञ्चमः क्रिमिसञ्जातः—" ॥५२॥

अष्टोदराणां विवरणम् ।—

"—तथाऽष्टावुदराणि च ।
वातात् पित्तात् कफात्त्रीणि त्रिदोषेभ्यो जलादपि ॥
प्लीह्नः क्षतात् बद्धगुदादष्टमं परिकीर्त्तितम् ॥५३॥

बाधेत्यन्ये; यदुक्तं—"दूषयित्वा रसं दोषा विगुणा हृदयं गताः । हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥" (सु० उ० ४३ अ०) इति । पञ्चमः क्रिमिसञ्जात इति—क्रिमियोगात् पञ्चमो हृद्रोगो भवतीत्यर्थः, तथोक्तत्वात्; तद्यथा—"ज्वरो विवर्णता शूलं हृद्रोगः सदन भ्रमः । भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमि-लक्षणम् ॥" (सु० उ० ५४ अ०) इति ॥५२॥

तथाष्टावुदराणि चेति ।—अतोदरस्थो रोगोऽप्युदरशब्देन वाच्यतङ्गतत्वात्; यतः,—"तात्स्थ्यात्तद्धर्मताध्यासात् तत्समीपतयाऽपि च । तत्साहचर्य्याच्छब्दानां वृत्तिरेषा चतुर्विधा ॥" इति । तत्र वातादीनां पृथक् त्रयो भेदाः, तेन वातोदरं पित्तोदरं श्लेष्मोदरञ्च । त्रिदोषेभ्य इति—मिलितदोषत्रयाच्चतुर्थः, अस्य सन्निपातोदरस्य दूष्योदरं नामान्तरं वदन्त्येके; तदुक्तं—"स्त्रियोऽन्नपानं नखरोममूत्रविडार्त्तवैर्युक्त-मसाधुवृत्ताः । यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥ तेनाशु रक्तं कुपिताश्च दोषाः कुर्य्युः सुघोरं जठरं त्रिलिङ्गम् । तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च ॥ स चातुरो मूर्च्छति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च । दूष्योदरं कीर्त्तितमेतदेव—" (सु० नि० ७ अ०) इति । जलादपि जलपानात्, अप्रशस्तजलपानादित्यभिप्रायः । अस्यापि दकोदरसंज्ञां प्रवदन्ति; यदुक्तं—"यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥ स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववद-भ्युपैति ॥" (सु० नि० ७ अ०) इति । प्लीह्न इति प्लीहवृद्धेः प्लीहोदरसंज्ञा, प्लीहा "मनहवा" शब्दवाच्यः । अस्य भेदो यकृद्दाल्युदरम्; तथा च—"विदाह्यभिष्यन्दिरतस्य

प्रत्यानाहसंज्ञता कफवातजत्वञ्च युज्यते; एवञ्च, "आनाह उदरपूरणलक्षणः, स च उत्कटवातेन जनितः, प्रत्यानाहश्च आनाहार्थाङ्गत्वात् न स्वतन्त्रेण वायुना, अन्यथा तुल्य तथाभतिस्माय—" इत्यादिरूपपाठकल्पनं सङ्गतम् इति सुधीभिर्विवेच्यम् ।

अष्टगुल्मानां विवरणम्।—

**गुल्मास्त्वष्टौ समाख्याता वात-पित्त-कफैस्त्रयः।**
**द्वन्द्वभेदास्त्रयः प्रोक्ताः सप्तमः सन्निपाततः॥**
**रक्तादष्टमकः ख्यातो—"** ॥५४॥

जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च। प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति॥ तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र। मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः॥ सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव॥" ( रो० वि० उदर० ) इति। क्षतादिति—प्रहारकण्टकादिषु, ततः परिस्राव्युदरमिति संज्ञा; यदुक्तं—"शल्यं तथाऽन्नोपहितं यदन्नं भुक्तं भिनत्त्यागतमन्यथा वा। तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः॥ नाभेरधश्चोदरवृद्धिमेति निस्तुद्यते दाल्यति चातिमात्रम्। एतत् परिस्राव्युदरं प्रदिष्टं दकोदरं कीर्त्तयतो निबोध॥" ( रो० वि० उदर० ) इति। बद्धगुदादिति—अष्टममुदरञ्च बद्धोदरसंज्ञमिति; बद्धगुदोदरमित्यन्ये; यतः,—"यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत्। सञ्चीयते तस्य मलः सदोषः शनैः शनैः सङ्करवच्च नाड्याम्॥ निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्। हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति॥" ( रो० वि० उदर० ) इति॥५३॥

गुल्मास्त्विति।—कोष्ठान्तर्ग्रन्थिरूपिणं गुटिकाकारं गोलमिति प्रसिद्धम्; यदुक्तं—"हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वाऽचलः। चयापचयवान् स गुल्म इति कीर्त्तितः॥" (सु० उ० ४२ अ०) इति। ते तु वातादिभेदेन पृथक् त्रयो गणिताः। द्वन्द्वभेदादिति—द्विदोषजनितास्त्रयः। सप्तमः सन्निपातत इति—सप्तमो गुल्मो मिलितदोषत्रयाद्भवति। रक्तादष्टमक इति—दुष्टरुधिरादष्टमो गुल्मो भवतीत्यर्थः, स च प्रायशः स्त्रीणाञ्च प्रसूत्यनन्तरं भवति; तदुक्तं—"नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा। वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम्॥" ( सु० उ० ४२ अ० ) इति। ननु माधवेन पञ्चधा गुल्मो लिखितः, तत् कथमयमष्टविधः? सत्यम्; माधवेन तु * पञ्चस्थानविशेषेण पञ्चधा

* पञ्चस्थानविशेषेण पञ्चधा कथितः इति तु न सम्यक्, "स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः। पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः॥" ( रो० वि० गुल्म० ) इत्यनन्तरोक्तेः वातपित्तकफसन्निपातरक्तजभेदेन पञ्चविधो गुल्मः माधवेन निर्दिष्ट इति।

त्रयोदशमूत्राघातानां विवरणम् ।—

"—मूत्राघातास्त्रयोदश ।
वातकुण्डलिका पूर्व्वा वाताष्ठीला ततः परः ॥५५॥
वातवस्तिस्तृतीयः स्यान्मूत्रातीतश्चतुर्थकः ।
पञ्चमो मूत्रजठरं षष्ठो मूत्रक्षयः स्मृतः ॥ ५६ ॥
मूत्रोत्सङ्गः सप्तमः स्यात् मूत्रग्रन्थिस्तथाऽष्टमः ।
मूत्रशुक्रन्तु नवमो विड्घातो दशमः स्मृतः ॥५७॥
मूत्रसादश्चोष्णवातो वस्तिकुण्डलिका तथा ।
त्रयोऽप्येते मूत्राघाताः पृथक् घोराः प्रकीर्त्तिताः ॥५८॥

कथितः, तथा हि—"दुष्टा वातादयोऽत्यर्थं मिथ्याऽऽहारविहारतः । कुर्व्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥ तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिवस्तयः ॥" (रो० वि० गुल्म० ) इति । अत्र तु चिकित्सार्थं द्वन्द्वभेदास्त्रयो गणिता इत्यदोषः ; यतः,—निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलञ्च । व्यामिश्रलिङ्गानपरांश्च गुल्मांस्त्रीनादिशेद्दौषधकल्पनार्थम् ॥" ( च० चि० गुल्म० ) इति ॥५४॥

मूत्राघाता इति ।—मूत्रस्याभिघातो मूत्राघातः । आघातो वेदनाविशेषवान् मूत्रनिरोध इत्यपरे । स च वातादिदोषजनितः । त्रयोदश इत्यस्य विवरणमाह, वातकुण्डलिका पूर्व्वं इत्यादि ।—पूर्व्वः प्रथमः वातकुण्डलिका कथिता, तद्यथा—यत्र सवेदनो वायुर्वस्तौ मूत्रमाविश्य कुण्डलीवत् विगुणो भूत्वा सञ्चरति सा वातकुण्डलिका ज्ञेया । वाताष्ठीला ततः पर इति—ततः परः द्वितीयः, यत्रानिलः पाषाणग्रन्थिवत् वस्तौ वृत्तमुन्नतं मूत्रविण्मार्गरोधिनं व्याधिं कुर्य्यात् सोऽष्ठीलाशब्दवाच्यः । अयन्तु वातरोगे पठिताष्ठीलायाः वस्तिगतत्वाद्भिन्नः । वस्तिकुक्षिनिपीडितो यत्र मूत्रसङ्गो भवेत् स वातवस्तिः । यत्र मूत्रं चिरं तिष्ठति शीघ्रं न प्रवर्त्तते मन्दं वा प्रवर्त्तते स मूत्रातीतः । यत्र नाभेरधस्तात् तीव्रवेदनमाध्मानं भवति तन्मूत्रजठरं ज्ञेयम् । यत्र वस्तिस्थौ पित्तमारुतौ सरुग्दाहं मूत्रक्षयं कुरुतः स मूत्रक्षयो ज्ञेयः । यत्र शनैरल्पमल्पं सरुजं नीरुजं वा मूत्रं स्रवेत् स मूत्रोत्सङ्गः । यत्रान्तर्वस्तिमुखे स्थिरोऽल्पो वृत्तो ग्रन्थिः, अत्र तु अश्मरीतुल्यरुग्भवति स मूत्रग्रन्थिः, अश्मरी तु भिन्नदोषदूषितत्वात् (?) । यत्र भस्मोदकप्रतीकाशं स्यानाच्युतं शुक्रं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते तन्मूत्रशुक्रमित्युच्यते । यत्र तु विट्संसृष्टं विड्गन्धं

अष्टमूत्रकृच्छ्राणां विवरणम्।—

मूत्रकृच्छ्राणि चाष्टौ स्युर्वात-पित्त-कफैस्त्रिधा।
सन्निपाताच्चतुर्थः स्याच्छुक्र-कृच्छ्रञ्च पञ्चमम् ॥५९॥
विट्कृच्छ्रं षष्ठमाख्यातं घातकृच्छ्रञ्च सप्तमम्।
अष्टमञ्चाश्मरीकृच्छ्रं—" ॥६०॥

चतुर्विधाश्मरीणां विवरणम्।—

"—चतुर्द्धा चाश्मरी मता।
वातात् पित्तात् कफाच्छुक्रात्—" ॥६१॥

कृच्छ्रान्मूत्रयेत् स विड्घात इति। यत्र सदाहं रोचनाशङ्खचूर्णवर्णं समस्तवर्णं वा मूत्रयेत् स मूत्रसादः। यत्र कृच्छ्रात् पुनः पुनः हारिद्रमथवा रक्तं मूत्रं मूत्रयेत् स शोणवातः। यः शूलस्पन्दनदाहार्त्तो बिन्दुं बिन्दुं मूत्रयेत् पीड़ितस्तु धारां स्रवेत् तस्य बस्तिकुण्डलिका कथिता। त्रयोऽप्येते मूत्राघाता इति—त्रयस्तु मूत्रसादादयः प्रत्याख्येयाः, ते तु घोरा बहुदुःखकरा इत्यर्थः ॥५५—५८॥

मूत्रकृच्छ्राणीति।—मूत्रस्य कृच्छ्रेण महता दुःखेन प्रवृत्तिर्मूत्रकृच्छ्रम्; तच्चाष्टविधं भवति, वातादिभिः पृथक् त्रयो भेदाः। सन्निपाताच्चतुर्थः। यत्र तु बस्तिमेहनशूलं भवति सशुक्रं मूत्रयेत् तत्तु शुक्रकृच्छ्रम्। यत्र पुरीषाघातात् विगुणतां गतो वायुराध्मानशूले करोति तत् विट्कृच्छ्रम। यत्र शल्येन मूत्रवाहिस्रोतःस्वभिहतेषु सत्सु स्रग्रं दारुणं मूत्रकृच्छ्रं भवति तत् घातकृच्छ्रं ज्ञेयम्। अश्मरीवदश्मरीकृच्छ्रं, तत् बस्तिमेहनशूलान्वितं भवति। अश्मरीभेदोऽपि शर्करेति केचित; यतः,—"अश्मरी शर्करा चैव तुल्यसम्भवलक्षणे। विशेषं शर्करायाश्च शृणु कीर्त्तयतो मम ॥ पच्यमानाऽश्मरी पित्तात् शोष्यमाणा च वायुना। विमुक्तकफसन्धाना क्षरन्ती शर्करा मता ॥" (रो० वि० मूत्रकृच्छ्र०) इति। ननु मूत्रकृच्छ्रमूत्राघातयोर्बस्तिगतदोषसाधर्म्यात् को भेदः? उच्यते; मूत्रकृच्छ्रे कृच्छ्रत्वमधिकं विबन्धस्त्वल्पः, मूत्राघाते तु विबन्धो बलवान् कृच्छ्रत्वमल्पञ्चेति भेदः ॥५९-६०॥

चतुर्द्धा चाश्मरी मतेति।—या बस्तिगता पाषाणगुटिकावद्भवति सा अश्मरीशब्दवाच्या; तदुक्तं—"विशोषयेद्बस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा। यदा तदाऽश्मर्य्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः॥" (च० चि० त्रिमर्मीय०) इति। क्रमोऽत्र प्रसङ्गतोऽपि लिख्यते; यथा—"अप्सु स्वच्छास्वपि यथा निषिक्तासु

विंशतिमेहेषु दशश्लेष्ममेहानां विवरणम्।—

"—तथा मेहाश्च विंशतिः।

इक्षु-मेहः सुरा-मेहः पिष्ट-मेहश्च सान्द्रकः॥६२॥

शुक्र-मेहोदकाख्यौ च लाला-मेहश्च शीतकः।

सिकताख्यः शनैर्मेहो दशैते कफ-सम्भवाः॥६३॥

अथ षट्पित्तमेहानां विवरणम्।—

मञ्जिष्ठाख्यो हरिद्राख्यो नील-मेहश्च रक्तकः।

कृष्ण-मेहः क्षार-मेहः षडेते पित्त-सम्भवाः॥६४॥

अङ्गे घटे। कालान्तरेण पक्वः स्यादश्मरीसम्भवस्तथा॥" (सु० नि० ३ अ०) इति। सा अश्मरी चतुःप्रकारा भवति, वातपित्तकफात् शुक्रादिति। वातादीनां पृथक् त्रयो भेदाः। वातपित्तकफादित्यनेन त्रिदोषसम्भवत्वपरं; यतः,—"नैकदोषाश्रयाः सर्वाः" (टी० वि० अश्म०) इत्यादिवचनात्। शुक्रादिति—शुक्रधारणात् शुक्राश्मरी भवतीत्युच्यते, "शुक्राश्मरी तु महतां जायते शुक्रधारणात्। स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः॥ शोषयत्युपसंगृह्य शुक्रं तत् शुक्रमश्मरी॥" (मा० नि० ९ अ०) इति॥६१॥

तथा मेहाश्च विंशतिरित्यादि।—तथेति—बस्तिगतदोषत्वाद्ग्रहणम्। मेहः प्रमेहः, प्रकर्षेण मूत्रातिप्रवृत्त्यादि मेहतीति प्रमेहः; तदुक्तं—"मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो बस्तिगतः प्रदूष्य। करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि॥ क्षीणेषु दोषेष्ववकृष्य धातून् सन्दूष्य मेहान् कुरुतेऽनिलश्च॥" (च० चि० प्रमेह०) इति। विंशतिरिति—विंशतिभेदाः, तद्यथा—इक्षुरसतुल्यम् इक्षुमेहः, तुल्यता मूत्रस्येत्यभिप्रायः। सुरा मदिराविशेषः, तत्तुल्यं सुरामेहः। पिष्टं तण्डुलकल्कः, तद्रसतुल्यं पिष्टमेहः। सान्द्रं घनम् आविलञ्च सान्द्रमेहः। शुक्रतुल्यं शुक्रमेहः। स्वच्छमुदकसदृशमुदकमेहः। तन्तुबद्धमिव पिच्छिलं लालामेहः। बहुवारान्मधुरमतिशीतलं शीतमेहः। सान्द्रं सिकतारूपं सिकतामेहः। शनैः शनैः सकफं कृच्छ्रं शनैर्मेहः, एते दश भेदाः कफजा ज्ञेयाः। अथ पित्तजानाह—मञ्जिष्ठासलिलोपमं विस्रञ्च माञ्जिष्ठमेहः। सदाहं हरिद्रासन्निभञ्च हरिद्रामेहः। सफेनमच्छं नीलवर्णञ्च नीलमेहः। विस्रमुष्णञ्च शोणितप्रकाशं रक्तमेहः। मसीनिभं कृष्णमेहः। स्रुतक्षारप्रतिमं क्षारमेहः, क्षारतोयसदृशमित्यर्थः; तदुक्तं—"गन्धवर्णरसस्पर्शैः क्षारेण

तत्र चतुर्विधवातमेहानां विवरणम्।—

हस्ति-मेहो वसा-मेहो मज्ज-मेहो मधुप्रभः।
चत्वारो वातजा मेहा इति मेहाश्च विंशतिः॥६५॥

एकसोमरोगस्य विवरणम्।—

सोमरोगस्तथा चैकः—"

दशप्रमेहपिडकानां विवरणम्।—

"—प्रमेहपिड़का दश।
शराविका कच्छपिका जालिनी विनताऽलजी॥६६॥

आवर्तोदकवत्" (मा० नि० १० अ०), इति षट् पित्तजाः। इदानीं वातजानाह, हस्तिमेह इत्यादि।—मत्तमातङ्गवदजस्रं प्रस्रवेत् हस्तिमेही। वसाप्रकाशं वसामिश्रं वा वसामेहः। मज्जाभं मज्जामिश्रं वा मज्जमेहः। मधु क्षौद्रं, तस्य तुल्यं तद्वर्णं वा मधुमेहः, इति चत्वारो वातजा ज्ञेयाः। इति मेहाश्च विंशतिरिति—इति पूर्वोक्तप्रकारेण विंशतिर्मेहाः साध्या याप्या असाध्याः। ते चानेन प्रतिपादिताः; यदुक्तं—"साध्याः कफोत्था दश पित्तजाः षट् याप्याश्चतुष्कः पवनादसाध्यः। समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते॥" (च० चि० प्रमेह०)। * ननु मधुमेहोऽन्यत्र पृथक् एकविंशतिको गणितः, तत् कथमत्र वातजेषु पठितः? सत्यम्; विवेकार्थं तु पृथगन्यत्रास्य ग्रहणं कृतम्, असाध्यत्वेन वातजेषु प्रमेहेष्वेवान्तर्भूतो दर्शितः दोषदूष्यरसवर्णसाधर्म्यात्, यतः,—"सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः। मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि॥" (सु० नि० ६ अ०) इति॥६२—६५॥

सोमरोग इति।—एकः सोमरोगः, स च मूत्रमार्गेण स्रवति; तथा हि—"आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च। मूत्रमार्गेण विमलाः सोमरोग इति स्मृतः॥" अस्य चिह्नमप्यतीव बलहानित्वेनोपलक्षितम्; तदुक्तं—"शरीरधारणाच्चापि सोम इत्यभिशब्दितः। तस्मात् सोमक्षयाद्देही शिथिलश्च भवेत् सदा॥" इति।

* चरकसुश्रुतवाग्भटादिषु केष्वपि तन्त्रेषु मधुमेहः प्रमेहेषु एकविंशतित्वेन न गणितः, वातिकमधुमेहः विंशत्यन्तर्गत एव, अपरश्च प्रमेहोपेक्षाजनितः मधुमेहः प्रमेहावस्थाविशेष एव, तेन च न सङ्ख्यातिरेकः; अतः "अन्यत्र पृथक् एकविंशतिको गणितः" इति टीकाकारोक्तिः चिन्त्या।

मसूरिका सर्षपिका पुत्रिणी च विदारिका।
विद्रधिश्च दशैताः स्युः पिडका मेह-सम्भवाः ॥६७॥

मूत्रातीसारोऽस्य भेद इति मन्यन्ते केचित् द्रवदोषसाधर्म्यात्; यतः,—"मूत्रातीसारमतिमैथुनतः प्रसूतं शुक्लोदतापपरिवर्जितमल्पमल्पम्। शुक्लाविहीनमपि सोममेहञ्च तस्य भेदं वदन्ति भिषजो मलकाममयज्ञाः॥" इति। प्रमेहपिडका दर्शयति।—अप्रतिक्रियमाणात् प्रमेहात् पिडकाश्चोत्पद्यन्ते। पिडका नानाकारा व्रणसंज्ञा एव; तथा चोक्तं—"सन्धिमर्मसु जायन्ते मांसलेषु च धामसु" (मा० नि० १० अ०) "तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः" (च० सू० कियन्तःशिरसीय०) इति। वास्तु व्रणाधिष्ठानम्। कदाचिदन्येषां; यतः,—"विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" (च० सू० कियन्तःशिरसीय०) इत्यपि। तासां स्वरूपं कथञ्चिज्ज्ञापनार्थं लिख्यते। तत्र शराविका यथा—"अन्तोन्नता तु तद्रूपा निम्नमध्या शराविका" (चं० वि० प्रमेह०) इति। कच्छपिकामाह—"सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः" (सु० नि० ६ अ०) इति। जालिनीमाह—"जालिनी तीव्रदाहा तु मांसजालसमावृता" (सु० नि० ६ अ०) इति। तन्त्रान्तरेऽपि "परस्परासम्बद्धा पिडका चैकदेशगा। पित्तोत्कटा दाहवती सम्यक् जालिनी मता॥" इति। विनतालक्षणमाह—"अवगाढरुजा क्लेदा पृष्ठे वाप्युदरेऽपि वा। महती पिडका नीला विनता नाम सा स्मृता॥" (चं० वि० प्रमेह०) इति। अलजीमाह—"रक्ताऽसिता स्फोटचिता विज्ञेया त्वलजी भवेत्" (चं० वि० प्रमेह०) इति। मसूरिकामाह—"मसूराकृतिसंस्थाना विज्ञेया तु मसूरिका" (सु० नि० ६ अ०) इति। सर्षपिकामाह—"गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी" (सु० नि० ६ अ०) इति। पुत्रिणीमाह—"महत्यल्पाचिता ज्ञेया पिडका साऽपि पुत्रिणी" (सु० नि० ६ अ०) इति। विदारिकामाह—"विदारीकन्दवत् वृत्ता कठिना च विदारिका" (सु० नि० ६ अ०) तथा (मा० नि० १० अ०) इति। विद्रधिमाह—"विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा" (सु० नि० ६ अ०)। विद्रधिलक्षणयुक्तत्वेनैव विद्रधेः पञ्च भेदा बोद्धव्याः। पिडकानामारम्भकमप्याह कश्चित्—"ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः" (सु० नि० ६ अ०) इत्यादि। पिडकाः प्रायेणाधःकाये भवन्ति, दोषदूष्याणामधःप्रसरणात् रक्तवाहीनां दौर्बल्याच्च ॥६६।६७॥

वृद्धीनां विवरणम्।—

वृद्धयः सप्त गदिता वातात् पित्तात् कफेन च।

रक्तेन मेदसा मूत्रादन्त्रवृद्धिश्च सप्तमी ॥ ६९ ॥

एकविधाण्डवृद्धेः विवरणम्।—

अण्डवृद्धिस्तथा चैका—"

एकगण्डमालाया विवरणम्।—

"—तथैका गण्डमालिका।

एकगण्डालज्या विवरणम्।—

गण्डालजी तु चैका स्यात्—" ॥७०॥

---

वृद्धय इति।—वृद्धिस्तु शोथोपलक्षितत्वात् शोथभेद एव; तथा हि—"क्रुद्धोऽधोगोऽनिलः शोथशूलकरश्चरन्। मुष्कौ वंक्षणतः प्राप्य फलकोषाभिवाहिनीः॥ प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः। दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः॥" (वा० नि० ११ अ०) इति। सेत सप्तप्रकारा भवन्ति; तद्यथा—वातपूर्णदृतिस्पर्शो वातवृद्धिः, पक्वोदुम्बरसङ्काशः पित्तवृद्धिः, कण्डूमान् कठिनोऽल्परुक् इत्यादिना श्लेष्मवृद्धिः। रक्तेनेत्यादि—दुष्टरक्तेन रक्तजस्फोटावृतः पित्तवृद्धिलिङ्गश्च। मेदसेति—कफवृद्धिवत्तालफलोपमश्च। मूत्रादिति—मूत्रधारणशीलस्य पानीयपूर्णदृतिवत् क्षुभ्यति सव्यथो मृदुश्च मूत्रजवृद्धिः। अन्त्रवृद्धिस्तु दुष्टोऽन्त्रावयवं यदा पवनो विगुणीकृत्य स्वस्थानात् अधो नयेत्, तदा वंक्षणसन्धौ ग्रन्थ्याभः श्वयथुर्भवेत्, उपेक्षणाच्च कालान्तरेण आध्मानादियुता मुष्कवृद्धिरिति; यदुक्तम्—"अन्त्रं विगुणमादाय गच्छन्नधोऽनिलो वंक्षणम्। वंक्षणात् तद्गुणायुक्तं फलकोषं प्रपद्यते॥" (भोज०) इति। अत एवास्य चापरो भेदो ब्रध्न इति कथितः॥६९॥

अण्डवृद्धिस्तथा चैका इति।—एका अण्डवृद्धिस्तस्या एव भेदः, यत उक्तम्—* "उपेक्षणाच्च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः" (वा० नि० ११ अ०)

---

* लक्षणमिदमन्त्रवृद्धेः वाग्भटेन माधवेन च कथितं, न त्वण्डवृद्धेः। किञ्च, "अण्डवृद्धिस्तथा चैका" इति पाठ एव चिन्त्यः, वृद्धिशब्दः अण्डवृद्धिवाचक एव, सप्तविधवृद्ध्यतिरिक्ताण्डवृद्धिरेका सुश्रुतवाग्भटमाधवादीनां कथापि नोक्ता। अन्ये, या खलु वृद्धिः कालप्रकर्षात् वातजादिसप्तविधवृद्ध्यवस्थामतिक्रम्य अतीव प्रवृद्धा वर्तते सैवात्र अण्डवृद्धित्वेन गृहीता इति। परन्तु "अण्डवृद्धिस्तथा चैका" इत्यत्र "गलगण्डस्तथा चैकः" इति पाठकल्पनं सर्वथैव मनोरममिति।

ग्रन्थीनां विवरणम्।—

"—ग्रन्थयो नवधा मताः।

त्रिभिर्दोषैस्त्रयो रक्ताच्छिराभिर्मेदसो व्रणात्॥

अस्थ्ना मांसेन नवमः—" ॥७१॥

---

इत्यादिना कुरण्डकशब्दवाच्यत्वेन, चिकित्सार्थं तु पृथगभिधानमात्रमस्य न दोषः। तथैका गण्डमालिका इति।—गण्डमाला जातिश्च (?) एका स्यात्। गले गण्डरूपा व्रणा एव गण्डमालादयो (?) ज्ञेयाः, मालातुल्यगण्डयोगात् गण्डमाला गलगण्डाद्भिन्ना; यदुक्तं—"कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु। मेदःकफाभ्यां चिरमन्ददाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः॥" (रो० वि० गलगण्ड०) इति। अस्या एव भेदोऽपचीति वदन्ति केचित् तुल्यग्रन्थिसाधर्म्यात् (?); यतः,—"ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये। कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति तज्ज्ञाः॥" (रो० वि० गलगण्ड०) इति। ननु कथं कण्ठस्थानप्रसिद्धत्वाद्गण्डमालाऽपची च वङ्क्षणे प्रतीता? सत्यम्; दोषगतिविशेषाद्वङ्क्षणस्थानेऽपि गण्डमाला भवतीति न दोषः; यदाह भोजः,—"वातपित्तकफा दुष्टा मेदश्चापि समाश्रितम्। जङ्घयोः कण्डरां प्राप्य मन्याकुक्षिदृग्गात्रान् बहून्॥ कुर्वन्ति ग्रथितांस्तेभ्यः पुनः प्रकोपितोऽनिलः। तान् दोषानूर्ध्वगो यः कक्षमन्यागलाश्रितः॥ नानाप्रकारान् कुरुते ग्रन्थीन् या त्वपची मता। अपची कण्ठमन्यासु कक्षावङ्क्षणसन्धिषु। गण्डमालां विजानीयादपचीतुल्यलक्षणाम॥" इति। गण्डालजी तु चैका स्यादिति।—गण्डालजी चात्र गलगण्डस्यैव नामान्तरं, यतो गण्डमालया भिन्नो गलगण्ड एव नान्यत्; अत एवाह माधवः,—"वातः कफश्चापि गले प्रदुष्टो मन्ये च संश्रित्य तथैव मेदः। कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः॥" (सु० नि० ११ अ०) इति। भोजेनाप्युक्तं—"महान्तं शोथमल्पं वा हनुमन्यागलाश्रयम्। लम्बन्तं मुष्कवद्दृष्टं गलगण्डं विनिर्दिशेत्॥" इति। यद्वा—गण्डालजीत्यलजी + क्षुद्ररोगपठिता बोद्धव्या। एके गण्डालजीस्थाने गण्डापचीति पठन्ति, तन्मते तु एको गण्डः एका अपची चेति। अयमपि पाठो मनोहरो न दोषः॥७०॥

ग्रन्थयो नवधा मता इति।—ग्रन्थिस्तु शोफसमुत्थानो व्रणभेदः, लोके "बतोगुटी" इति शब्दवाच्यत्वेन प्रतीतः; तद्यथा—"वातादयो मांसमसृक् प्रदुष्टाः सन्दूष्य

+ सुश्रुते क्षुद्ररोगे अलजी नास्ति, वाग्भटे एका अलजी या दृश्यते सुश्रुते सा अन्धालजी, रोगविज्ञाने अन्त्रालजी इति नाम्ना पठ्यते, सा च चक्षिरपि यन्ये

अर्बुदानां विवरणम् ।—

"—षड्विधं स्यात्तथाऽर्बुदम् ।
वातात् पित्तात् कफाद्रक्तात् मांसादपि च मेदसः ॥७२॥

त्रिविधश्लीपदानां विवरणम् ।—

श्लीपदञ्च त्रिधा प्रोक्तं वातात् पित्तात् कफादपि ॥७३॥

---

मेदश्च तथा शिराश्च । वृत्तोन्नतं विग्रथितश्च शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥" ( वी० वि० गलगण्ड० ) इति। नवप्रकारमाह, त्रिभिर्दोषैरिति ।—त्रयो भेदाः, तैर्व्यस्तैर्वातेन, पित्तेन, कफेनेत्यर्थः । रक्ताद्रुधिराच्चतुर्थः । शिराभिरिति—शिराग्रन्थिः पञ्चमः । मेदसा इति—दुष्टमेदसा जनितः षष्ठः । व्रणादिति—व्रणजनितः सप्तमः । अस्थ्नेति—दोषदूषितास्थिजनितोऽष्टमः । मांसेनेति—मांसजनितो नवम इति। ननु माधवेन पञ्चभेदा ग्रन्थयोऽभिहिताः, वातादिदोषैस्त्रयः मेदः-शिराभ्याञ्च द्वाविति ; तत्र कथमत्र नवभेदा दर्शिताः ? उच्यते ; यद्यपि मांसास्थिजाविव दूष्यभेदेनोदाहृतौ, तथाऽपि ग्रन्थ्याश्रयत्वेन स्थानविशेषान्मेद-शिरावत् तत्सम्बन्ध्यान एवोक्तौ ; यदुक्तं भोजे—"मेदो वायुर्यदा मांसे निक्षिपेदथवा त्वचि । तत्र मेदोभवग्रन्थिः श्यावो भवति पाण्डुरः ॥" इत्यादिना। चिकित्सार्थं तु पृथगभिधानम् अन्यत्रापि दृश्यते ; यदुक्तं—"ग्रन्थौ मांसोद्भवे योज्या श्लेष्मैव क्रियापथः । शिराग्रन्थिं परित्यज्य शेषं यत्नेन साधयेत् ॥" इत्यादिभिरदोषः ॥७१॥

षड्विधमिति ।—अर्बुदमपि व्रणभेदो व्रणाकारत्वात् ; यतः,—"गात्रप्रदेशे क्वचिदेव दोषाः सम्मूर्च्छिता मांसमसृक् प्रदूष्य । वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥ कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति ॥" ( वी० वि० गलगण्ड० ) इति। षड्विधत्वञ्च सुगमम्। मांसादपि चेति चकारग्रहणादत्र द्विरर्बुदमपि ग्राह्यम्, अध्यर्बुदमपि केचित् ; तथा हि—"यज्जायतेऽन्यत् खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः । यद्द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥" ( सु० नि० ११ अ० ) इति ॥७२॥

श्लीपदञ्चेति ।—चरणयोः शिलावद्दुष्टः श्लीपदशब्दवाच्यः । तच्चेति ग्रहणात् करकर्णादिषु च भवतीति केचिदाहुः ; यदुक्तं—"यः सज्वरो वङ्क्षणजो भृशार्त्तिः शोथो नृणां पादगतः क्रमेण । तत् श्लीपदं स्यात् करकर्णनेत्रशिश्नौष्ठनासास्वपि

---

क्षुद्ररोगे अस्ति । चरके शोथाधिकारे ग्रन्थेरनन्तरमेवा अपची पठिता । किञ्च, गलगण्डो गलगण्डस्य नामान्तरमिति तु न मनोरमम् ।

षड्विद्रधीनां विवरणम्।—

विद्रधिः षड्विधः ख्यातो वातपित्तकफैस्त्रयः।

रक्तात् क्षतात् त्रिदोषैश्च—" ॥७४॥

पञ्चदशव्रणानां विवरणम्।—

"—व्रणाः पञ्चदशोदिताः।

तेषां चतुर्धा भेदाः स्युरागन्तुर्देहजस्तथा ॥७५॥

केचिदाहुः॥" (टी० वि० श्लीपद०) इति। वातपित्तकफादित्यनेन व्यस्तसमस्तेन कृत्वा * चत्वारो भेदाः, तेन वातेन पित्तेन श्लेष्मणा चेत्यभिप्रायः। एके तु त्रय एव भेदाः श्लीपदस्येति वदन्ति, यतः तत्र कफस्याव्यभिचारेण प्राधान्यम्; तदुक्तं—"त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात्। गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात्॥" (सु० नि० १२ अ०) इति॥७३॥

विद्रधिरिति।—विद्रधिरपि व्रणभेद एव; यदुक्तं—"त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः। दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम्॥ महामूलं रुजावन्तं वृत्तं वाऽप्यथवाऽऽयतम्। स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः॥" (सु० नि० ९ अ०) इति। चरके तु विदाहप्रकर्षाद्विद्रधिसंज्ञा; यदुक्तं—"स वै शीघ्रविदाहित्वात् विद्रधीत्यभिधीयते" (च० सू० कियन्तःशिरसीय०) इति। स च बाह्याभ्यन्तरे भवति, अन्तरे तु गुल्मसादृश्यम्; यतः,—"तुल्यदोषसमुत्थानात् विद्रधेर्गुल्मकस्य च" (सु० नि० ९ अ०) इति। ननु तुल्यत्वात् कथं विद्रधेः पाकः गुल्मस्य न पाकः? उच्यते; "न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः। गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते॥ विवरानुचरो ग्रन्थिरसृक् बुद्बुदको यथा। एवम्प्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति॥" (सु० नि० ९ अ०) इति। तथाऽन्यत्रापि—"मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः। मांसशोणितहीनत्वात् गुल्मः पाकं न गच्छति॥" (सु० नि० ९ अ०) इति। षड्विधोऽत्र सुगमः,तत्र तु क्षतादिति—काष्ठलगुडपाषाणादिप्रहारात्। त्रिदोषैरिति—मिलितदोषत्रयेण, सन्निपातेनेत्यर्थः॥७४॥

व्रणा इति।—व्रणन्तु शोथसमुत्थानं कथितं शोथोपलक्षितमित्यर्थः; अत एवाह कश्चित् पूर्वरूपत्वेन यथा—"एकदेशोत्थितः शोथो व्रणानां पूर्वलक्षणम्" (टी० वि०

* सुश्रुतवाग्भटयोः रोगविनिश्चये च त्रिविधमेव श्लीपदमुक्तं, न तु चतुर्विधम्। अनेन टीकाकारेणापि चत्वारो भेदाः इत्युक्त्वा विवरणे पुनः त्रैविध्यमेव प्रदर्शितम् इति सुधीभिर्द्रष्टव्यम्।

शुद्धो दुष्टश्च विज्ञेयस्तत्सङ्ख्या कथ्यते पृथक् ।
वातव्रणः पित्तजश्च कफजो रक्तजो व्रणः ॥७६॥
वात-पित्तभवश्चान्यो वात-श्लेष्मभवस्तथा ।
तथा पित्त-कफाभ्याञ्च सन्निपातेन चाष्टमः ॥७७॥
नवमो वात-रक्तेन दशमो रक्त-पित्ततः ।
श्लेष्म-रक्तभवश्चान्यो वात-पित्तासृगुद्भवः ॥७८॥
वात-श्लेष्मासृगुत्पन्नः पित्त-श्लेष्मासृसम्भवः ।
सन्निपातासृगुद्भूत इति पञ्चदश व्रणाः ॥७९॥

---

व्रणशोथ० ) इत्यादि । स च शोथो विलक्षणः पक्वः पुनः पाचितः समो विषमो वा त्वङ्मांसव्यापी दोषसङ्घातः शरीरैकदेशोत्थित इत्युच्यते । तस्य चतुर्द्धा भेदः स्यादिति—तथा व्रणानां चतुर्द्धा भेद इति । अत्र चतुःप्रकारभवत्वेन सञ्चारितः सामान्यो दर्शितः, आगन्तुर्देहजः शुद्धो दुष्टश्चेति । आगन्तुरिति—शस्त्रादिबलप्रभवः, शस्त्रव्याघातादिकृत इत्यर्थः । देहजः इति—दोषबलप्रभवशारीरसंज्ञः ; यदुक्तं—"द्विधा व्रणः स विज्ञेयः शारीरागन्तुभेदतः । दोषैराद्यस्तयोरन्यः शस्त्रादिक्षतसम्भवः ॥" ( यो० वि० शारीरव्रणा० ) इति । शुद्ध इति—शुद्धव्रणः ; यदुक्तं—"जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः । सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः ॥" ( यो० वि० शारीरव्रणा० ) इति । दुष्ट इति—दुष्टो व्रणः ; यदुक्तं—"पूतिः पूयातिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः । दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्ययः ॥" ( यो० वि० शारीरव्रणा० ) इति । केचित्तु शुद्धदुष्टशब्दौ साध्यासाध्यत्वेन व्याख्यानयन्ति ; तन्न सर्वमतम् । तत्सङ्ख्या कथ्यते पृथगिति—तद्व्रणस्य सङ्ख्या गणनानियमः पृथक् भिन्नत्वेनाव कथ्यते, सा तु पञ्चदशप्रकारा वक्ष्यमाणा बोद्धव्या । यद्यपि षड्विधोऽन्यत्र व्रणः वातपित्तादिलक्षणोऽप्येवं दोषाणां प्रसरणेन पञ्चदशप्रकारो दर्शितः ; तदुक्तं सुश्रुते—"कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वा चानेकधा प्रसरन्ति" ( सु० सू० २१ अ० ) इति ; तेन पञ्चदशप्रकारा भवन्ति ; यतः त्रिभिरेव वातादिकैः शोणितचतुर्थैः शरीरमिदं धार्यते इति द्वितीयदर्शनात् ; यदुक्तं—"कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य । पचत्यतः शोणितमेव पाको मतोऽपरेषां विदुषां द्वितीयः ॥" ( सु० सू० १७ अ० ) इति । पञ्चदशसङ्ख्या सुबोधा इति ॥७५—७९॥

अष्टसद्योव्रणानां विवरणम्।—

सद्यो-व्रणास्त्वष्टधा स्यात् * अवकृत्त-विलम्बितौ।
छिन्न-भिन्न-प्रचलित-घृष्ट-विद्ध-निपातिताः ॥८०॥

सद्योव्रण इति।—शस्त्रादिप्रहारजनित आगन्तुकव्रणः, स चानेकाकृतिरित्येवं भाष्यते; यदुक्तं—"नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः। भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोध मे॥" (सु० चि० सद्योव्रण०) इति। तेषां भेदमाह, अवकृत्तमिति—अपकर्त्तनम्। विलम्बितौ लम्बमानौ, मांसावलम्बनेनेत्यभिप्रायः। छिन्नमिति—तिर्य्यक् ऋजुर्वा छेदनमवयवादिषु, गात्रस्य पातनमिति भावः। भिन्नमिति—कोष्ठे बहुधा शक्तिकुन्तखड्गविषाणादिभिर्भेदनम्; यदुक्तं—"शक्तिकुन्तेषुखड्गाग्रविषाणै-राशयो हतः। यत् किञ्चित् प्रस्रवेत् तद्धि भिन्नलक्षणमुच्यते॥" (सु० चि० सद्योव्रण०) इति। आशयोऽत्र स्थानं, तत् कोष्ठशब्देनोपदर्शितम्; तद्यथा—"स्थानान्यामाग्नि-पक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते॥" (सु० चि० २ अ०) इति। अत्र पक्वाशयरहितेऽप्यन्यदेशे व्यथ एव वचनात्। प्रचलितमिति—प्रकर्षेण चलितं मांसादिकमिति भावः। तन्त्रान्तरे पिच्चितमिति नामान्तरम्, यतः,—"प्रहार-पीडनाभ्यान्तु यदङ्गं पृथुतां गतम्। सास्थि तत् पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम्॥" (सु० चि० २ अ०) इति। † अथवा प्रचलितमित्यनेन यद्व्रणं भग्नस्य तथा सद्योव्रणस्य च चिकित्साविषयं, तेन भग्नाधिकारे प्रतिपादितोऽपि तस्यात्रावतरणे न दोषः मज्जरक्तपरिप्लुतत्वेन व्रणभावित्वात्। घृष्टमिति—घर्षितम्; तद्यथा—"घर्षणा-दभिघाताद्वा यदङ्गं विगतत्वचम्। उषास्रावान्वितं तत्तु घृष्टमित्यभिधीयते॥" (सु० चि० सद्योव्रण०) इति। विद्धमिव विद्धम्; यथा—"सूक्ष्मास्यशल्याभिहतं

* वाग्भटे अवकृत्त इत्यत्र अपकृत्त तथा प्रचलित इत्यत्र पिच्चित इति नामद्वयं सङ्गतार्थकम्, अवकृत्तप्रचलितनामकौ तु टीकाकारकृतव्याख्यानसङ्गतेः। एवञ्च टीकायामपि अवकृत्तमित्यत्र अपकृत्तं तथा प्रचलितमित्यत्र पिच्चितमिति नामद्वयं युज्यते, ततश्च अपकृत्तपिच्चितयोः तन्त्रान्तरोक्तं स्वतं पिच्चितञ्च इति नामान्तरमपि सङ्गच्छते।

† "अथवा" इत्यारभ्य "न दोषः" इत्यन्तः ग्रन्थः अर्थसङ्गतिविरहितः दुष्टः। "मज्जरक्तपरिप्लुतमित्यनेन व्रणभावात् मज्जरक्तागमं दर्शयति, तेन यत् व्रणं पिच्चितं तत् भग्नस्य सद्योव्रणस्य च चिकित्साविषयम्" इति मधुकोषविवृतिरत्र द्रष्टव्या।

विवर्त्तितश्च विश्लिष्टस्तिर्य्यक्क्षिप्तस्त्वधोगतः ॥
ऊर्द्धगः सन्धिभग्नश्च—" ॥८२॥

तुल्यमवपाटनकौ" इत्यादि । विदारितो नाम भग्नस्यास्थिभङ्गेनान्यत्र प्रतिपादितत्वात् अत्रापि निवृत्तः । * सुश्रुतेनाप्ययमेव संज्ञान्तरेण कथितः, यदुक्तं—"तरुणान्यस्थीनि नम्यन्ते भज्यन्ते नलकानि च । कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च ॥" (सु० नि० १५ अ०) इति । अत्र रुचकादिशब्दस्यान्यापि स्फुटान्त इत्यभिप्रायः ; यतोऽस्थीनि पञ्चविधानि भवन्ति तरुणनलकवलयकपालरुचकभेदात् ; अत एव स्फुटितमिति भग्नं सुश्रुतेनोक्तम् । यथोक्तानपिष्टविदारितादीनामपि विवरणमाह— सन्धावुत्पिष्टः शोथो वेदनादिश्च विश्लेषः । विदारित इति—† द्वयोः सन्ध्यस्थ्नोरति-क्रान्तता वेदना च । विवर्तित इति—एकसन्धेः पार्श्वापगमनात् विषमाङ्गता वेदना च । विश्लिष्ट इति—मनाक् सन्धिविश्लेषः शिथिलतामात्रं परिवृत्याशोथौ च । तिर्य्यक्-क्षिप्त इति—एकं सन्ध्यस्थि सन्धिस्थानं त्यक्त्वा तिर्य्यक् याति तथा तीव्रपीडाः स्युः । अधोगत इति—वक्ष्यमाणोर्द्धगलक्षण., किञ्चिदधोगमनमिति विशेषः । ऊर्द्धग इति— विषमा द्वयोः सन्ध्यस्थ्नोरतिक्षिप्तत्वात्, तेन एकास्थिविक्रियया उभयास्थिविक्रियया वा

टीकायां श्रीकण्ठदत्तेन "छिन्न इति एकमस्थि विदीर्णं बहुविदीर्णमन्यत्, एकं विदीर्णं संलग्नम् अपरं विदीर्णं द्विधाभूतम् ; अपरस्तु विपुलैकविदरणमित्याह । सुश्रुते एतत् पाठनमस्ति" इत्यनेनोक्तम् । ऊर्द्धगश्च सुश्रुतमाधवाभ्याम् अति-क्षिप्तनाम्ना अभिहितः । अत्र मधुकोषविवृतिः,—"अधःक्षिप्तवत् ऊर्द्ध्वे क्षिप्तस्यापि अभिधाने प्राप्ते अन्यान्यतिक्षिप्तेऽवरोधात" इति ।

* विदारितभग्नं साधयितुं "सुश्रुतेनाप्ययमेव" इत्यादिना यदुक्तं तदपि न मनोरमं, यतः तरुणादिभेदेन पञ्चविधानामस्थ्नां नमनादिरूपं भग्नविशेषं दर्शयितुं सुश्रुतेन श्लोकोऽयं निबद्धः । विदारितस्य साधनार्थम् उक्तश्लोकः प्रमाणञ्चेत् नमनादिकस्यापि अस्थिभङ्गसङ्ख्यायां गणनमुचितम् । किञ्च विदारितस्य संज्ञान्तर-मपि उक्तश्लोके किमपि नास्ति । विदारितस्तु द्वादशविधास्थिभग्नान्तर्गतः पाटित इति प्रागेव प्रदर्शितम् इति ।

† लक्षणमेतत् सुश्रुतेन अतिक्षिप्तस्यैव उक्तम् । अपरञ्च टीकाकारेणानेन "विदारितो नाम भग्नस्य अस्थिभङ्गेन" इत्यादिना प्रागेव अस्थिभङ्गान्तर्गत एव विदारित इति प्रतिपादितम्, अत्र पुनः सन्धिभग्ने विदारित उक्त इति सुधीभि-र्विभाव्यम् ।

चतुर्विधाग्निदग्धव्रणानां विवरणम्।—

"—वह्निदग्धश्चतुर्विधः।

प्लुष्टोऽतिदग्धो दुर्दग्धः सम्यग्दग्धः प्रकीर्त्तितः ॥८३॥

पञ्चनाडीव्रणानां विवरणम्।—

नाड्यः पञ्च समाख्याता वात-पित्त-कफैस्त्रिधा।

त्रिदोषैरपि शल्येन—" ॥८४॥

द्वयोरस्थ्नोः परस्परातिक्रमणं दूरगमनं वेत्यर्थः। * सन्धिभग्न इति—द्वयोः अस्थ्नोः सन्धानं सन्धिः, सन्धेस्तु विश्लेषः सन्धिभग्नः कथितः। ननु कथं सन्धिमुक्तं भग्नमुच्यते? अस्थ्ना हि भङ्गो युक्तः; उच्यते—साध्यविश्लेषोऽत्र भग्नोऽभिप्रेतः, यतः अस्थि-सन्ध्योः पृथग्भावत्वात्, तेन काण्डभग्नं सन्धिभग्नञ्चाग्निवेश पूर्वं द्विधा प्रतिपादितम्; यदुक्तं—"षडात्पष्टादिभेदेन सन्धिविश्लेष उच्यते। काण्डभग्ना द्वादशभिर्भेदैः कर्कटकादिभिः॥" इत्यादि। अत्र काण्डभग्नोऽस्थिभग्नः, तस्य द्वादशभेदाः सन्धि-भग्नान्तर्भूता बोद्धव्या इति न दोषः ॥८२॥

वह्निदग्ध इति।—अग्निदग्धश्चतुर्विधश्चतुःप्रकारः; ते के प्रकारा इत्याह, प्लुष्ट इत्यादि।—यो विवर्णमतिमात्रं प्लुष्यते स प्लुष्टः। यत्र मांसावलम्बनं गात्रविश्लेषः शिरास्नायुसन्ध्यस्थिव्यापादनं ज्वरदाहपिपासामूर्च्छाद्योपद्रवा भवन्ति सोऽतिदग्धः। यत्रोत्तिष्ठन्ति स्फोटास्तीव्रदाहवेदनाश्चिराच्चोपशाम्यन्ति स दुर्दग्धः। सम्यक् दग्ध इति—अनवगाढं तालवर्णः सुसंस्थित इति ॥८३॥

अथ नाडीभङ्ग्याः, नाड्य इति।—नाडीति—गम्भीरगतिः, पूयस्यातिदूरप्रवेशनात् गतिरिष्यते, नाडीव वहतीति सा नाडी इत्युच्यते, अन्तःशुषिरं नालं नाडी, तेन लोके "सरद्वा" शब्दवाच्यो व्रणविशेषः, तथा हि—"शोफं न पक्वमिति पक्व-

* भग्नस्तु सामान्यतो द्विविधः, काण्डभग्नः सन्धिभग्नश्च, तत्र काण्डभग्नः अस्थि-भग्नः, स च द्वादशविधः, सन्धिभग्नश्च पिष्टादिरूपः षड्विधः, न तु सन्धिभग्नः षड्विधान्तर्गतभग्नविशेषः सुश्रुतेनोक्तः, एवञ्च सन्धिभग्न इत्यस्य अस्थिभङ्गभेदे गणनं नोचितम्। अस्थिभङ्गः भग्नः अष्टधा प्रोक्तः, सन्धिभग्ननामा भग्नश्च पिष्टादिरूपः, एवमन्वर्थे कृते कथञ्चित् सङ्गतिः स्यात्, परन्तु विदारितस्य सन्धिभग्नभेदे अन्त-र्भावात् सप्तविधश्च सन्धिभग्नो भवति; अपरञ्च अस्थिभग्नः द्वादशधा सुश्रुते, अत्र तु अष्टधा एतत् वैषम्यद्वयमायाति इति।

अष्टभगन्दराणां विवरणम्।—

"—तथाऽष्टौ स्युर्भगन्दराः।
शतपोनस्तु पवनादुष्ट्रग्रीवश्च पित्ततः ॥८५॥
परिस्रावी कफाज्ज्ञेयः ऋजुर्वात-कफोद्भवः।
परिक्षेपी मरुत्पित्तादर्शोजः कफ-पित्ततः ॥
आगन्तुजातश्चोन्मार्गी शङ्कावर्त्तस्त्रिदोषजः ॥८६॥

मुपैत्यते यां यां वा व्रणं प्रचुरपूयमसाधुवृत्तः। अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य स्थानानि पूर्वविहितानि ततः स पूयः॥ तस्यातिमात्रगमनाद्गतिरिष्यते तु नाडीव यद्वहति तेन मता तु नाडी॥" (सु० नि० १० अ०) इति। पञ्च समाख्याताः—पञ्चप्रकाराः। वातपित्तकफैस्त्रिधा त्रिदोषैरपि शल्यजेनेति—वातेन पित्तेन कफेन त्रयो भेदाः। त्रिदोषैरिति—मिलितदोषत्रयेण चतुर्थः। शल्यजेनेति—आगन्तुनिमित्तः पञ्चमो भेदः इति। शल्यनिमित्तलक्षणञ्च यथा—"नष्टं कथञ्चिदनुमार्गमुदीरितेषु स्थानेषु शल्यमचिरेण गतिं करोति। सा फेनिलं मथितमुष्णमसृग्विमिश्रं स्रावं करोति सहसा सरुजा च नित्यम्॥" (रो० वि० नाडीव्रण०) इति॥ ८४॥

तथाऽष्टाविति।—गुदवस्तिभगदेशदारणात् भगन्दरः, भगशब्दो गुदाद्युपलक्षणम्; भोजेऽप्युक्तं—"भगं परि समन्ताच्च गुदं वस्तिं तथैव च। भगवद्दारयेत यस्मात्तस्मात् ज्ञेयो भगन्दरः॥" इति। अष्टाविति—अष्टसंख्याः स्युः, तास्तु शतपोनक-प्रभृतयः। शतपानकतुल्यत्वात् शतपोनकः, स तु वातप्रायः, शतपोनचालनिका इति लोके, सहस्रधारा इत्यन्ये। उष्ट्रग्रीव इति—पिडकावस्थागतगलवक्रत्वेनोष्ट्रग्रीवा-कारत्वं, तेनोष्ट्रग्रीवसंज्ञा, अयन्तु पित्तबहुलः। परिस्रावयोगात् परिस्रावी कण्डूमान् भवति, स च कफप्रायः। ऋजुर्वातकफोद्भव इति—वातकफलक्षणाभ्यां युक्तः ऋजुः। परिक्षेपी मरुत्पित्तादिति—वातपित्तलक्षणाभ्यां युक्तः; परिक्षेपीति—गुदं परि समन्तात् प्रसरणशीलः प्रायेण इति भावः। अर्शोजमाह, अर्शोजः कफपित्ततः इति—कफपित्तचिह्नाभ्यां मिलितः। अर्शोज इति—अर्शोभगन्दरः इति, तत् यथा—"कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः। अर्शोमूले ततः शोथः कण्डूदाहादिमान् भवेत्॥ स शीघ्रं पक्वभिन्नोऽस्य क्लेदयन् मूत्रमर्शसः। स्रवत्यजस्रं गतिभिरयमर्शोभगन्दरः॥" (वा० उ० २८अ०) इति। आगन्तुजातश्चोन्मार्गीति—आगन्तुजः प्रहारादिजनितो भगन्दर उन्मार्गिसंज्ञो भवति, उन्मार्गेण क्रिमिकृतमार्गेण

पञ्चोपदंशानां विवरणम्।

**मेढ्रे पञ्चोपदंशाः स्युर्वात-पित्त-कफैस्त्रिधा।**
**सान्निपाताच्च रक्ताच्च—"  ॥८७॥**

पुरीषादिनिर्गमनात्। शम्बूकावर्त इति—शम्बूकावर्तो नाम भगन्दरस्त्रिदोषजनितो ज्ञेयः; शम्बूकावर्त्तवत् व्रणविशेषः, पूर्णनद्याः शम्बूकावर्त्तवत् आवर्त्तेन वेदना दोषगतिविशेषाद्भवति; तथा च भोजः,—"नदीनां परिपूर्णानां शम्बूकावर्त्तका यथा। समुत्तिष्ठन्ति वेगेन तोयवेगसमीरिताः॥" इति। ननु माधवेन भगन्दरः पञ्चविध उक्तः; तथा हि—"गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकार्त्तिकृत्। भिन्ना भगन्दरो ज्ञेयः स च पञ्चविधो मतः॥" (मा० नि० भगन्दर०) इति; तत् कथमष्टविधः? उच्यते, माधवनिदाने तु त्रयः संसर्गभेदाः वातपित्तकादीनां दोषलक्षणदर्शनात् तेष्वेवान्तर्भाव्याः, अन्यत्र प्रतिपादितनिजलक्षणत्वात् विवक्षार्थं पृथक् दर्शितो न दोषः, यथाऽर्शोभगन्दरं प्रतिपादितत्वात् (?)॥ ८५।८६॥

मेढ्रे पञ्चोपदंशाः स्युरिति।—उपदंशसंज्ञा रूढा बाह्या व्रणविशेषत्वेन, मेढ्रे लिङ्गे पञ्चप्रकारो भवति, यदुक्तमन्यत्रापि—"हस्ताभिघातान्नखदन्तपातादधावनादत्युपसेवनाद्वा। योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधोपचारैः॥" (मो० नि० उपदंश०) इति। पञ्चप्रकारा अत्र सुगमाः। चकारात् लिङ्गे लिङ्गवर्त्तिरिति भेदोऽत्र ज्ञातव्यः; यदुक्तम्—"अङ्कुरैरिव सञ्जातैरुपर्युपरिसंस्थितैः। क्रमेण जायते वर्त्तिस्ताम्रचूडशिखोपमा॥ कोषस्याभ्यन्तरे सन्धौ सर्वसन्धिगताऽपि वा। लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे॥" (मो० नि० उपदंश०)। अथाचार्य्येणायमपि वक्ष्यमाणशूकदोषेषु पठितो न दोषः, एकस्थानगतसाधर्म्यात्। यद्यपि अभिघातजते मेहने उपदंशः आगन्तुः षष्ठः सम्भवी, तथाऽपि तस्य * दोषलिङ्गव्युत्क्रान्ततया दोषजेष्वेवान्तर्भावः; अत एवाह कश्चित्—"वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः। दोषा दुष्टा गता गुह्यं त्रयोविंशतिरामयान्॥" (वा० उ० ३३अ०) इत्यादि। त्रयोविंशतिरित्यनेन पञ्चोपदंशा दश चाष्टौ च शूकजा इत्यर्थः। गुह्यशब्देनात्र स्त्रीणामुपदंशसम्भवः क्वचिदिति; यतः,—"हस्तादाद्यार्त्तिवह्न्यास्थापातोदसमन्विताः। स्त्रीणां पुंसाञ्च जायन्ते उपदंशाः सुदारुणाः॥" इति पाठः प्रायेण अनार्षं आहुः॥८७॥

* "दोषलिङ्गयुक्ततया" इति मधुकोषपाठः युक्तः, व्युत्क्रान्तशब्दस्य अतिक्रान्तविपरीतार्थबलात् पाठोऽयमसङ्गतः।

चतुर्विंशतिशूकदोषाणां विवरणम्।—

"—मेढ्रे शूकामयास्तथा।

चतुर्विंशतिराख्याता लिङ्गार्शो ग्रथितं तथा ॥८८॥

निवृत्तमवमन्थश्च मृदितं शतपोनकः।

अष्ठीलिका सर्षपिका त्वक्पाकश्चावपाटिका ॥८९॥

मेढ्रे शूकामयास्तथेति।—तथेति—लिङ्गसमानस्थानत्वात् शूकामयाः शूकजाः व्याधयः कथिताः। शूको जलशूकः, स तु सविषः जलजन्तुः जलनलोद्भूतो जीवविशेष इत्यर्थः, तत्प्रधानो योग इति। यद्वा—लिङ्गवृद्धौ वात्स्यायनादिशास्त्रोक्तो योगः शूक उच्यते, तन्मुख्यत्वात् लिङ्गवृद्धौ अन्येऽपि योगाः शूकाः कथ्यन्ते, तेषां यो विकारस्तस्य शूककारणत्वात् शूकदोषजा व्याधय इत्यभिप्रायः। चतुर्विंशतिराख्याता इति—तत्र लिङ्गार्श इत्युक्तो भेदः उपदंशेषु दर्शितः। अष्टादशभेदा माधवेन लिखिताः; तद्यथा—"अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः। व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः॥" (रो० वि० शूकदोष०) इति। अवशेषाः पञ्चान्यत्र क्षुद्ररोगेषु पठिताः। ते के? निरुद्धावपाटिका निरुद्धमणि-निरुद्धप्रकश परिवर्त्तिकाश्चेति, मेढ्रस्थानसम्भवत्वादत्रापि लिखिता न दोषः। एवं चतुर्विंशतिः शूकदोषाः कथिताः। एतेषां विवरणं केषाञ्चित् ज्ञापनार्थं लिख्यते, यथा—तत्र लिङ्गार्शसो लक्षणमुपदंशेषु दर्शितमेव। ग्रथितमिति—"शूकैर्यत् पूरितं शश्वत् ग्रथितं नाम तत् कफात्" (रो० वि० शूकदोष०)। निवृत्तमिति—उपस्थचर्मपरिवर्त्तनादियुक्तं निवृत्तम्, यदुक्तं—"विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम्। निवर्त्तते सरुग्दाहं क्वचित् पाकञ्च गच्छति॥ पिण्डितं ग्रथितं चर्म तत् प्रलम्बमधो मणेः। निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तु तत्॥" (वा० उ० ३३ अ०) इति। अवमन्थ इति—"दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः। सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत्॥" (सु० नि० १४ अ०)। मृदितमिति—"मृदितं पीडितं यत्तु संरब्धं वातकोपतः" (सु० नि० १४ अ०)। शतपोनक इति—"छिद्रैरणुमुखैर्लिङ्गं चितं यस्य समन्ततः। वातशोणितजो व्याधिः स ज्ञेयः शतपोनकः॥" (रो० वि० शूकदोष०) इति। अष्ठीलिकेति—"कठिना विषमैर्भुग्नैर्वायुनाऽष्ठीलिका भवेत्" (रो० वि० शूकदोष०) इति। सर्षपिकेति—"गौरसर्षपसंस्थाना शूकदुर्भग्नहेतुका। पिडका * शोणितवाताभ्यां ज्ञेया सर्षपिका तु सा॥" (रो० वि० शूकदोष०)। त्वक्पाक

* सुश्रुतवाग्भटयोः "कफरक्ताभ्याम्" इति पाठः।

मांसपाकः स्पर्शहानिर्निरुद्धमणिरुत्तमा ।
मांसार्बुदं पुष्करिका सम्मूढ़पिड़काऽलजी ॥६०॥

इति—* "वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान्" ( रो० वि० शुक्रदोष० ) । अव-पाटकेति—"यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् । † सकण्डुः कठिना वाऽपि सैव शूकसमुत्थिता ॥" ( सु० नि० १३अ० ) । मांसपाक इति—"शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः । विद्यात्तं मांसपाकन्तु सर्वदोषकृतं भिषक् ॥" ( सु० नि० १४अ० ) । स्पर्शहानिरिति—"स्पर्शहानिं तु जनयेच्छोणितं शुक्रदूषितम्" ( रो० वि० शुक्रदोष० ) । निरुद्धमणिरिति—अल्पमूत्रच्छिद्रत्वेन निरुद्धमणीति ; यदुक्तं—"वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत् । स्रोतो मूत्रं ततोऽभ्येति मन्दधारमवेदनम् ॥ मणेर्विकाशरोधश्च स निरुद्धमणिर्गदः ॥"( वा० उ० ३३अ० ) इति । उत्तमेति—"मुद्गमाषोपमा रक्ता रक्तपित्ताद्भवा च या । व्याधिरेषोत्तमा नाम शूकाजीर्णनिमित्तः ॥" ( रो० वि० शुकदोष० ) इति । मांसार्बुदमिति—"मांसदोषेण जानीयादर्बुदं मांससम्भवम्" ( सु० नि० १४अ० ) । पुष्करिकेति—"पिडका पिडकाव्याप्ता पित्तशोणित-सम्भवा । पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिकेति सा ॥" ( रो० वि० शुकदोष० ) । सम्मूढपिडकेति—"पाणिभ्यां भृशसम्मूढे सम्मूढपिडका भवेत्" ( सु० नि० १४अ० ) । अलजीति—"तुल्यां तां त्वलजीं विद्यात् यथाप्रोक्तां विचक्षणः"( रो० वि० शुकदोष० ) ।

* सुश्रुतवाग्भटयोः "पित्तरक्तकृतः" इति पाठः ।

† "सकण्डूः कठिना—"इत्यादि ग्रन्थः सुश्रुतमाधवाभ्यां परिवर्त्तिकायाः लक्षणत्वेन पठितत्वात् पाठोऽयं भ्रान्तः ; तथा च—"मर्दनात् पीडनात् वाऽपि तथैवाऽप्यभिघाततः । मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः ॥ तदा वातोपसृष्टन्तु चर्म प्रतिनिवर्त्तते । मणेरधस्तात् कोषश्च ग्रन्थिरूपेण लम्बते ॥ सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित् । मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम् ॥ सकण्डूः कठिना चैव सैव शूकसमुत्थिता ॥" ( सु० नि० १३अ० ) इति । अवपाटिकायाः लक्षणन्तु —"अल्पीयःखां यदा हर्षात् बलात् गच्छेत् स्त्रियं नरः । हस्ताभिघातादथवा चर्मण्युद्वर्त्तिते बलात् ॥ मर्दनात् पीडनात् वाऽपि शुक्रवेगविघाततः । यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥" ( सु० नि० १३ अ० ) इति द्रष्टव्यम् ।

रक्तार्बुदं विद्रधिश्च कुम्भीका तिलकालकः।
निरुद्धप्रकशः प्रोक्तस्तथैव परिवर्त्तिका ॥९१॥

अष्टादशकुष्ठानां विवरणम्।—

कुष्ठान्यष्टादशोक्तानि वातात् कापालिकं भवेत्।
पित्तेनौडुम्बरं प्रोक्तं कफान्मण्डलचर्चिके ॥

रक्तार्बुदमिति—"कृष्णैः स्फोटैः * सरक्ताभिः पिडकाभिर्निपीडितम्। यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम्॥" (रो॰ वि॰ शूकदोष॰) इति। विद्रधिरिति—"विद्रधिं सान्निपातेन यथोक्तमभिनिर्दिशेत्" (सु॰ नि॰ १४अ॰) इति। कुम्भिकेति—"कुम्भिका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा" (सु॰ नि॰ १४अ॰)। तिलकालक इति—"कृष्णानि चित्राण्यथवा शूकानि सविषाणि च। पातितानि पचन्त्याशु मेढ्रं निरवशेषतः॥ कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः। सन्निपातसमुत्थांस्तु तान् विद्यात्तिलकालकान्॥" (रो॰ वि॰ शूकदोष॰)। निरुद्धप्रकश इति—"वातोपसृष्टे मेढ्रे वै चर्म संश्रयते मणिम्। मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च॥ निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम्। मूत्रं प्रवर्त्तते जन्तोर्मणिर्विव्रियते न च॥ निरुद्धप्रकशं विद्यात् सरुजं वातसम्भवम्॥" (रो॰ वि॰ शूकदोष॰)। परिवर्त्तिकेति—†"मणेरधस्तात् कोषश्च ग्रन्थिरूपेण लम्बते। परिवर्त्तिका तु तां विद्यात् सरुजां वातसम्भवाम्॥" इति॥८८—९१॥

कुष्ठानीत्यादि।—कुष्ठमिति रूढिः महारोगविशेषत्वात्, तान्यष्टादशभेद-

* "कृष्णैः स्फोटैः सरक्तैश्च" इत्यनेन सुश्रुते "सरागैरसितैः स्फोटैः" इत्यनेन च वाग्भटे रक्तशब्दः स्फोटविशेषणत्वेन पठितः न तु पिडकायाः।

† सुश्रुते एवं पाठः,—"मर्दनात् पीडनाच्चापि तथैवाप्यभिघाततः। मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः॥ तदा वातोपसृष्टं तु चर्म प्रतिनिवर्त्तते। मणेरधस्तात् कोषश्च ग्रन्थिरूपेण लम्बते॥ सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित्। मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम्॥" ("सरुजा वातसम्भूता तां विद्यात् परिवर्त्तिकाम्" इति रोगविनिश्चये पाठः) दृश्यते। अस्मिन् शूकामयविवरणे आचार्य्येणानेन निरुद्ध-परिवर्त्तिकयोः निरुद्धमणि-निरुद्धप्रकशयोश्च पृथक् पृथक् गणनं कृतं, किन्तु सुश्रुते या परिवर्त्तिका, वाग्भटे सैव निरुद्धः, सुश्रुते यः निरुद्धप्रकशः, वाग्भटे स एव निरुद्धमणिनाम्ना पठितः। कथमाचार्य्येणानेन एवमभिन्नरूपयोर्द्वयोः पृथक् पृथक् कृतं तत् विचार्य्यमिति।

मरुत्पित्तादृष्यजिह्वं श्लेष्मवाताद्विपादिका ।
तथा सिध्मैककुष्ठञ्च किटिभञ्चालसं तथा ॥८३॥
कफपित्तात् पुनर्दद्रुः पामा विस्फोटकं तथा ।
महाकुष्ठं चर्मदलं पुण्डरीकं शतारुकम् ॥
त्रिदोषैः काकणं ज्ञेय—" ॥८४॥

भिन्नानि; तथा हि—"वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च । दूषयन्ति स कुष्ठानां सप्तको द्रव्यसङ्ग्रहः ॥ अतः कुष्ठानि जायन्ते सप्त चैकादशैव च ॥" (च० चि० कुष्ठ०) इत्यादि । अष्टादशसङ्ख्या यथा—तत्र कृष्णारुणकपालाभं कापालिकम् । उदुम्बरफलसदृशमौदुम्बरम् । मण्डलं श्वेतरक्तमुन्नतमण्डलं मण्डलमिति । कण्डूदाहादियुक्तं विचर्चिकेति । ऋष्यो नीलाण्डगः, गवयः इतरत्र प्रसिद्धः, तज्जिह्वाकारमृष्यजिह्वमिति । विपादिकेति—वैपादिकं, तत्र पाणिपादस्फुटनं तीव्रवेदना च । सिध्ममिति—श्वेतलोहिताभमलाबुकुसुमोपमं घृष्टाद्रजो मुञ्चतीति । किटिभमिति—श्यावारुणं खरस्पर्शं कण्डूमच्चेति । अलसमिति—कण्डूभिः सरागैर्गण्डैश्चितं, स्फोटाचितमित्यर्थः । दद्रुः च * शुभ्रमण्डला पिडका सकण्डूरिति । पामेति—स्रावयुक्ताः पिडकाः कण्डूमत्यः सदाहाश्चेति पामाः कथ्यन्ते । तनुत्वचः † तीव्रदाहैरुपेताः पाणौ कक्षे स्फिचि च भ्रष्टकारा इति विस्फोटाः । महाकुष्ठमिति—शीघ्रसमुत्थानत्वधात्ववगाहन-बहुदोषजन्यत्व-क्रियाभूयस्त्वयोगान्महाकुष्ठमित्युच्यते । चर्मदलमिति—‡ मत्स्यशकलोपमं बहलं हस्तिचर्मवदित्यर्थः ।

* सुश्रुते दद्रुः अतसीकुसुमवर्णा ताम्रा वा, वाग्भटे अतसीकुसुमवर्णा, तथा चरके रागवती इतिमात्रमुक्तम् । मधुकोषे चासिता असिततरा च दद्रुरिति दृश्यते । केवलं डल्लनेन सिता असिता च इति द्विविधा दद्रुरुक्ता । चरकादिषु दद्रोः शुभ्रमण्डलत्वं न निर्दिष्टम् इति ।

† चरकवाग्भटमाधवैः श्यावारुणत्वं तनुत्वक्त्वञ्च विस्फोटस्य लक्षणत्वेन निर्दिष्टम्; तीव्रदाहोपेतादिलक्षणन्तु कच्छ्वा एव; यदुक्तं—"सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया: पाण्योः कच्छूरुग्रा स्फिचोश्च ॥" इति ।

‡ लक्षणमेतत् एककुष्ठस्य चर्मकुष्ठस्य च, न तु चर्मदलस्य; तथा च— "अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् । तदेककुष्ठं, चर्माख्यं बहलं हस्तिचर्मवत् ॥ रक्तं सकण्डु सस्फोटं सरुक् दलति चापि यत् । तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ॥" (च० चि० कुष्ठ०) इति ।

त्रिविधश्वित्राणां विवरणम्।—

"—तथाऽन्यत् श्वित्रसंज्ञकम्।

तच्च वातेन पित्तेन श्लेष्मणा च त्रिधा भवेत् ॥८५॥

षष्टिक्षुद्ररोगाणां विवरणम्।—

क्षुद्ररोगाः षष्टिसङ्ख्यास्तेष्वादौ शर्करार्बुदम्।

इन्द्रवृद्धा पनसिका विवृताऽन्धालजी तथा ॥८६॥

* पुण्डरीकमिति—श्वेतकमलपत्रोपममध्यं पर्य्यन्तरक्तं श्रोत्सेधमित्यर्थः। शताकक-मिति—"रक्तं श्यावं सदाहार्त्तिः शतारुः स्याद्बहुव्रणम्" ( च० चि० कुष्ठ० ) इति। काकणमिति—काकणन्तिकासवर्णत्वेन मध्ये कृष्णमन्ते रक्तम् † अपाकं तीव्र-वेदनमिति ॥ ८२—८४ ॥

तथाऽन्यदिति।—श्वित्रसंज्ञकमिति—श्वेतकुष्ठम्, धवलवर्णमिति लोके, तच्च वातादिदोषत्रयभेदेन त्रिधा भवति ; यदुक्तम्—"वाताद्रूक्षारुणं पित्तात्ताम्रं कमल-पत्रवत्। सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥" ( वा० नि० १४अ० ) इति। तन्त्रान्तरे श्वित्रभेदः किलास इति प्रसिद्धः, "कुष्ठैकसम्भवं श्वित्रं किलासं चाऽरुणं भवेत्। निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥" ( वा० चि० कुष्ठ० ) इति। अपरे तु किलासमेव धात्वन्तराश्रितं संज्ञान्तरं लभते इति वदन्ति ; यत्,—"अरुणं तत्तु विज्ञेयं मांसधातुसमाश्रितम्। मेदःश्रितं भवेच्छ्वेतं दारुणं रक्तसंश्रयम् ॥" ( भालुकि० ) इति। तत् श्वित्रं द्विविधमप्याचक्षते, व्रणजं दोषजञ्च ; यदुक्तं भोजे—"श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथा। तत्र मिथ्योपचाराद्धि व्रणस्य व्रणजं स्मृतम् ॥ दोषजं द्विविधं प्राहुरात्मजं परजं तथा। परसंस्कारसंस्पर्शात् यत्तत् परजमुच्यते ॥ तदात्मजं विजानीयात् यद्देहेष्वानलादिजम् ॥" इति ॥८५॥

क्षुद्ररोगा इत्यादि।—क्षुद्रहेतुलक्षणचिकित्सानां रोगाणां पारिशेष्यात् क्षुद्ररोगाः कथिताः। ननु यदि क्षुद्रत्वमेषां हेतु लक्षण-चिकित्साऽल्पत्वेन, तर्हि रोगाणामग्नि-रोहिणीप्रभृतीनां त्रिदोषजत्वेन हेत्वादिबाहुल्यात् कथं क्षुद्रत्वम् ? नैवं, बाहुल्यम् तावत् छत्रिणो गच्छन्तीतिवत्, किंवा अवान्तरभेदविरहत्वं क्षुद्रत्वं, येनात्र वक्ष्या-णामजगल्लिकादीनां न दोषदूष्यादिकृतभूरिसङ्ख्याभेदेन व्रणज्वरादिवन्निर्देशः, किन्तु प्रत्येकं स्वाकसङ्ख्ययाऽभिधानं तेषामिति। अन्यस्त्वाह—क्षुद्रशब्दोऽल्पे रौद्रे च वर्त्तते,

* पुण्डरीकं रक्तपद्ममिति मधुकोषः।

† 'सपाकम्' इति क्वचित् पाठः।

वराहदंष्ट्रो वल्मीकं कच्छपो तिलकालकः।
गर्दभो रकसा चैव यवप्रख्या विदारिका ॥८९॥

तेन यथायोग्यं सर्वत्र व्यवस्था दृश्यते। रौद्रे क्षुद्रशब्दो यथा—"क्षुद्रा मृगा यत्र भ्रान्ताश्चेरुरन्यैः समं मृगैः" इति। केचित्तु क्षुद्राणां बालानां प्रायेण रोगाः क्षुद्ररोगाः इति व्याख्यानयन्ति, एवमपि अजगल्लिकाऽहिपूतनादीनामेव परिग्रहो न त्वन्येषाम्। षष्टिसङ्ख्या यथा—तत्र शर्करार्बुदादयो गन्धिकान्ताश्चतुस्त्रिंशत्, चत्वारो व्यङ्गाः, अष्टौ विस्फोटाः, चतुर्दशभेदा मसूरिका इति षष्टिसङ्ख्याः क्षुद्ररोगाः पूर्यन्ते। शर्करार्बुदमिति—अत्र वृद्धाः; (?)—"दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः शिराः। स्रवन्ति सहसा रक्तं तं विद्याच्छर्करार्बुदम्॥" (रो० वि० क्षुद्र०) इति। अन्यत्र शर्करा भिन्नपठितत्वात् पृथग्गृहीता, यदुक्तं—"प्राप्य मांसशिरास्नायुः श्लेष्मा मेदस्तथाऽनिलः। ग्रन्थिं कुर्वन्त्यसौ भिन्नो मधुसर्पिर्वसानिभम्॥ स्रवत्यास्रावमनिलस्तत्र वृद्धिं गतः पुनः। मांसं विशोष्य ग्रथितां शर्करां जनयेत्ततः॥" (रो० वि० क्षुद्र०) इति; अत्र शर्कराऽर्बुदस्य शर्करायाश्चैव इत्येक एवार्थविकारः, तेन न सङ्ख्यातिरेकः। भोजेऽप्युक्तं—"तमेव भिन्नं दुर्गन्धं घृतमेदोनिभं शिराः। स्रवन्ति स्रावमनिशं तदा स्याच्छर्कराऽर्बुदम्॥" इति। इन्द्रवृद्धेति—मध्ये पुष्करवत् पिडकाभिः समाचितेन्द्रवृद्धा कथिता। पनसिकेति—कर्णस्याभ्यन्तरे शालूकवद्गुरुक् व्रणविशेषः। भोजे कर्णस्य समन्तत इति, तेन कर्णस्य बहिरपि भवतीत्याचष्टे; यदुक्तं—"कफवातौ प्रकुपितौ मांसमाश्रित्य कर्णयोः। समन्ततः परिक्षिप्तां कुरुतः पिडकां स्थिराम्॥ विषमा दाहसंयुक्तां विद्यात् पनसिकां तु ताम्॥" (भोजः) इति। विवृतेति—पित्तेनाधिकपाकाद्विवृतमुखतया विवृतेति संज्ञा, यदुक्तं—"विवृतास्या महादाहा पक्वोडुम्बरसन्निभाम्। सुमण्डलां पित्तकृतां विवृतानामिकां विदुः॥" इति। अन्धालजीति—अन्धालजी बहिर्वक्त्ररहिता अन्तर्मुखी स्नाय्वाश्रिता च; यदुक्तं—"कफानिलौ श्रितौ स्नायुं पिडकां परिमण्डलाम्। दुष्टौ जनयतोऽवक्त्रामल्पपूयामकण्डुराम्। आमोडुम्बरसङ्काशां विद्यादन्धालजीं तु ताम्॥" (भोजः) इति। वराहदंष्ट्र इति—शूकरदंष्ट्राकारत्वेन वराहदंष्ट्रो व्रणविशेषः, स च विसर्पलिङ्ग इति केचित्; उक्तं—"सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः। कण्डूमान् ज्वरकारी च स स्यात् शूकरदंष्ट्रकः॥" (रो० वि० क्षुद्र०) इति। वल्मीकमिति—वल्मीको व्रणविशेषः, तेन वल्मीकवत् प्रचुरशिखरत्वमुच्छ्रितत्वं दूरावगाढमूलत्वञ्च प्रतिपद्यते, तथा हि—"ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः। ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम्॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्प-

कदरो मषकश्चैव नीलिका जालगर्दभः।
इरिवेल्ली जतुमणिर्गुदभ्रंशोऽग्निरोहिणी ॥८८॥

वत् सर्पति चोन्नताग्रैः। वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ॥" (रो० वि० क्षुद्र०) इति। कच्छपीति—मध्ये उन्नतत्वेन पर्यन्ते निम्नतया च कच्छपिकासंज्ञा; यदुक्तं—"ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यां पिडका ज्ञेया कच्छपिका बुधैः ॥" इति। तिलकालक इति—नीरुजानि तिलसदृशानि तानि तिलकालकशब्दवाच्यानि कफस्य शोषणात्; यदुक्तं—"कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात्तान् विद्यात् तिलकालकान् ॥" (सु० नि० १३ अ०) इति। तन्त्रान्तरे रक्तोद्रेकादपि सम्भवति; यतः,—"मारुतः पित्तमादाय कफरक्तसमाश्रितः। चिनोति तिलमात्राणि त्वचि ते तिलकालकाः ॥" इति। गर्दभीति—वर्त्तुलाकारत्वेनोन्नतत्वेन च पिडकाविशेषो गर्दभीशब्दवाच्यः; तथा हि—"मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम्। रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥" (रो० वि० क्षुद्र०) इति। रकसा चेति—रकसा तु अन्यत्र कुष्ठभेदेषु दर्शिता, क्षुद्रत्वादत्रापि लिखिता न दोषः, तद्यथा—"कण्डून्विता या पिडका शरीरे संस्रावहीना रकसोच्यते सा" (सु० नि० ५ अ०)। यवप्रख्येति—यववन्मध्ये स्थूला अन्ते निम्ना पिडका यवप्रख्येति कथिता; यदुक्तं—"यवाकारा सुकठिना ग्रथिता मांससंश्रिता। पिडका श्लेष्मवाताभ्यां यवप्रख्येति सा मता ॥" (सु० नि० १३ अ०) इति। विदारिकेति—विदारिकन्दवद्वृत्ता वर्त्तुलाकारा या पिडका सा विदारिकाशब्दवाच्या, यदुक्तं—"विदारिकन्दवद्वृत्ता कक्षावङ्क्षणसन्धिषु। विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणा ॥" (रो० वि० क्षुद्र०) इति। कदर इति—कदरो बदरफलवदुन्नतः पादयोः पिडकाविशेषः; तथा हि—"शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः। ग्रन्थिः कोलवदुत्सन्नो जायते कदरं हि तत् ॥" (वा० उ० ३१ अ०) इति। कदरं हस्तेऽपि भवति भोजेन पठितत्वात्; यतः,—"हस्तयोः पादयोश्चापि गम्भीरानुगतं खरम्। मांसकीलं जनयतः कुपितौ कफमारुतौ ॥ सशल्यमिव तं देशं मन्यते तेन पीडितः। शर्कराकदरं केचिन्मन्यन्ते वातकण्टकम् ॥" (भोजः) इति। मषक इति—माषवदुन्नतं कृष्णं यद्भवति स मषकसंज्ञ इति; यदुक्तम्—"अवेदनं स्थिरञ्चैव यस्मिन् गात्रे प्रदृश्यते। माषवत् कृष्णमुत्सन्नं वातान्मषकमादिशेत् ॥" (रो० वि० क्षुद्र०) इति। माषकमिति नामान्तरमस्य। भोजे चांशसि पाठात् कोमलं कथितम्; यतः,—"वातेरिते त्वचि यदा दूष्येते कफमेदसी।

**सन्निरुद्धगुदः कोठः कुनखोऽनुशयी तथा।**
**पद्मिनीकण्टकाक्षिप्यमलसो मुखदूषिका ॥८८॥**

श्यावं मृदु सवर्णं च कुरुते मशकं वदेत् ॥" (भोजः) इति। नीलिकेति—अतिनीलत्वान्नीलिका, तेन कृष्णा नीला च कथिता; यदुक्तम्—"कृष्णमेवंगुणं गात्रे नीलिकां तां विनिर्दिशेत्" (भोज०) इति; अत एवात्र पठितात् व्यङ्गाद्भिन्ना, व्यङ्गोऽत्र व्यङ्गभेदोऽवगन्तव्यः, तेनैतेषां श्यामवर्णाकृतिविलक्षणत्वादयुक्त एव भेदः; तद्यथा—"श्यावो व्यङ्गो मुखाश्रितः" इत्यादि। "गात्रे कृष्णा तु नीलिका" इत्यादि। "रक्तपित्तान्वितो वायुस्त्वक्प्रदेशमाश्रितो यदा। जनयेन्मण्डलं कृष्णं श्यावं वा व्यङ्गमादिशेत् ॥" इति भोजवचनेन च परस्परभेदो दर्शितः। जालगर्दभ इति—यः शोथो विसर्पवत् सर्पति स जालगर्दभशब्दवाच्यः; यत.,—"विसर्पवत् सर्पति यः शोथस्तनुरपाकवान्। दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्दभः ॥" (सु० नि० क्षुद्र०) इति। दाहज्वरकारकत्वेन ज्वालागर्दभ इति नामान्तरम्। भोजेऽपि विसर्प एवेति नामास्य; यदुक्तं—"पित्तोत्कटास्त्रयो दोषा जनयन्ति त्वगाश्रिताः। श्यावं रक्तं तनु शोथमपाकं बहुवेदनम् ॥ विसर्पिणं सदाहञ्च तृष्णाज्वरसमन्वितम्। विसर्पनामकं व्याधिमपरं जालगर्दभम् ॥" (भोज०) इति। इरिवेल्लीति—शिरोभागगता वर्तुलाकारा या पिडका सा इरिवेल्लीति शब्दवाच्या; यदुक्तं—"पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम्। सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥" (सु० नि० क्षुद्र०) इति। जतुमणिरिति—सहजं रक्तं लक्ष्मोदयमण्डलञ्च सहजत्वेन जतुमणिं प्राहुः; तथा हि—"सममुत्सन्नमरुजं मण्डलं कफरक्तजम्। सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु सः ॥" (सु० नि० क्षुद्र०) इति। गुदभ्रंश इति—यत्र गुदस्य बहिर्निर्गमो भवति स गुदभ्रंशशब्दवाच्यः; यदुक्तं—"प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत् ॥" (सु० नि० १३अ०) इति। अग्निरोहिणीति—कक्षभागेषु प्रदीप्ताङ्गारसन्निभाः स्फोटाः अग्निरोहिणीशब्दवाच्याः; तथोक्तं—"पित्तरक्तोत्कटा दोषाः प्रदीप्ताङ्गारसन्निभान्। कक्षभागेषु कुर्वन्ति तीव्रदाहरुजाज्वरान् ॥ मांसावदारणान् स्फोटान् ये हन्युरनुपक्रमात्। पक्षाद्वा ह्यादशाहाद्वा सा ज्ञेया ह्यग्निरोहिणी ॥" इति। सन्निरुद्धगुद इति—शुक्रदोषोक्तनिरुद्धमणि-निरुद्धप्रकशवदत्रापि चर्मसङ्कोचात् सन्निरुद्धगुदोऽभिहितः; यदुक्तं—"वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः। निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च ॥ मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति। सन्निरुद्धगुदं व्याधिमेनं विद्यात् सुदारुणम् ॥" (सु०

कक्षा वृषणकच्छूश्च गन्धः पाषाणगर्दभः।
राजिका च—" ॥१००॥

नि० १३अ० ) इति। कोठ इति—वक्ष्यमाणोदर्दशीतपित्तयोर्भेदः कोठ इति प्रसिद्धः, त्वग्दोषसामान्यात्। अत्र तु असम्यक् वमनयोगादिति निदानत्वेन वाणकोत्पाद-विनाशत्वेनाप्युत्क्षिप्तचाय लिखित.; यदुक्तं—"वरटीदष्टसङ्काशः कण्डूमान् लोहितो-ऽसकृत्कोपनात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः॥" (माधवनि०) इति। कुनख इति—कुत्सितं नखं यस्य पुरुषस्येत्यभिप्रायः। एतच्च वक्ष्यमाण-चिप्परोगान्तरमिति मन्यन्ते केचित; यतः—"नखवाच्यनखैर्दोषैः कुनखः परुषो भवेत्" इति, नखैरित्यनेन चिप्पमिति व्याख्यानयन्ति। अनुशयी तथेति—चरणस्योपरि अवर्णत्वेन पिडका भवति साऽनुशयीशब्दवाच्या, तथा हि—"गम्भीरामल्पसंरम्भां सवर्णामुपरि स्थिताम्। पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिनीम्॥" (सु० नि० क्षुद्र०) इति। पद्मिनीकण्टकप्रख्यो व्रणविशेषः तेन पद्मिनीकण्टकः कथितः; यदुक्तं—"कण्टकैराचितं वृत्तं मण्डलं पाण्डु कण्डुरम्। पद्मिनीकण्टकप्रख्यैः तदाख्यं कफवातजम्॥" (सु० नि० क्षुद्र०) इति। चिप्पमिति—नखमांसमधिष्ठितो दोषो दाहपाकौ करोति तच्चिप्पमिति रोगविशेषः कथितः, यथा—"नखमांसमधिष्ठाय पित्तं वायुश्च वेदनाम्। करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्॥" (सु० नि० क्षुद्र०) इति। तन्त्रान्तरे अङ्गुलीवेष्टमिति विख्यातः अक्षतनामाऽयं विकारः, यदुक्तं—"रोगोऽक्षतश्चर्मनखान्तरे स्यान्मांससदोषो भृशदाहपाकः" (अ० चि० स्मृत्यु०) इति। अलस इति—पादाङ्गुलिषु दुष्टकर्दमजलस्पर्शत्वेन यः क्लिन्नभावः सोऽलसशब्दवाच्यः, यतः—"क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ। दुष्टकर्दम-संस्पर्शादलसं तं विभावयेत्॥" (सु० नि० १३अ०) इति। मुखदूषिकेति—यूनामेव मुखे पिडकाः सम्भवन्ति तेन मुखदूषिकाः कथिता मुखकान्तिहरणात्; अस्य यौवनपिडकेति नामान्तरम्, यतः—"शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः। युवानपिडका यूनां विज्ञेया मुखदूषिकाः॥" (सु० नि० क्षुद्र०) इति। कक्षेति—नामतः प्रसिद्धा, सा तु पिडकाकारत्वेनोपलक्षिता, यतः—"बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम्। पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्दिशेत्॥" (सु० नि० क्षुद्र०)। वृषणकच्छूरिति—वृषणयोर्मलदूषितत्वात् या कण्डूर्भवति सा वृषणकच्छूः कथिता; यदुक्तं—"स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः। प्रक्लिद्यते यदा स्वेदात् कण्डूं जनयते तदा॥ ततः कण्डूयनात् क्षिप्रं स्फोटः स्रावश्च जायते।

तत्र चतुर्विधव्यङ्गानां विवरणम्।—

"—तथा व्यङ्गश्चतुर्धा परिकीर्त्तितः।
वातात् पित्तात् कफाद्रक्तादित्युक्तं व्यङ्गलक्षणम् ॥१०१॥

प्राहुर्यवप्रख्यकच्छूं तां श्लेष्मरक्तप्रकोपजाम ॥" (सु० नि० १३अ०) इति। एषा च सामान्यादनतिहीनताद्पि निदानविशेषात् प्रायो व्रणभावित्वाद्दुष्टचिकित्सोपयोगित्वाच्च कुष्ठोक्तकच्छूतोऽस्या भिन्नता। गन्ध इति।—कक्षास्फोटसदृशा एकैव पिडका भवति स गन्ध इति प्रसिद्धः, यदुक्तम्—"एकामेतादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम्। त्वग्गतां पित्तकोपेन गन्धनाम्ना प्रचक्षते॥" इति। पाषाणगर्दभ इति—हनुसन्धिगतो यः कठिनशोथः स पाषाणगर्दभशब्दवाच्यः; तथा हि—"वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः। स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः॥" (रो० वि० चू८०) इति। राजिकेति—राजिकाकारपिडकानां सम्भवत्वेन राजिकाशब्दवाच्या, एषा * मसूरिकाभेदादन्यैरप्येवं प्रतिपादिता, तत्र कोद्रव इति नाम्ना प्रसिद्धा; यथा—"कफवातादिसम्भूतः कोद्रवो नाम नामतः। लोको वदति पक्वावः (?) स च पाकं न गच्छति॥" इत्यादि ॥ ९९—१०० ॥

तथेति।—व्यङ्ग इति—मुखे श्यावं मण्डलाकारं यद्भवति तत् व्यङ्गशब्दवाच्यं, मुखच्छाया इति लोके प्रसिद्धम्; यदुक्तं—"क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। मुखमागत्य सहसा मण्डलं विसृजत्यतः॥ नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत्॥" (सु० नि० १३अ०) इति। अथ स्वरूपेण वातादिदोषेण चतुःप्रकारो व्यङ्गः कथितः। यद्यपि सपित्तेन वायुना व्यङ्गो निर्दिष्टस्तथाऽप्यत्र कफरक्तावनुबन्धौ द्रष्टव्यौ, यतः नीरुजत्वं कफेन विना न सम्भवति, श्यावत्वञ्च † धूम्रानुविद्धरक्तवर्णं, तेन सरक्तादोषकारणं, तेन सर्वदोषोद्भवो व्यङ्ग इति तात्पर्यार्थः ॥ १०१ ॥

* राजिका सौम्यपिडका इति ख्याता "घामाचि" इति लोके; तथा च वाग्भटः,—"घर्मस्वेदपरीतेऽङ्गे पिडकाः सरुजो घनाः। राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः॥" (वा० उ० ३१अ०) इति। राजिका मसूरिकाभेदः इति तु कुत्रापि तन्त्रे न दृश्यते इति।

† "श्यावः धूम्रानुविद्धः कृष्णो वर्णः" इति मधुकोष-तत्त्वचन्द्रिकादिकाराः। "तेन नरक्तादोषकारणम्" इति पाठः न सङ्गतार्थकः।

तत्र अष्टविस्फोटानां विवरणम्।—

विस्फोटाः क्षुद्ररोगेषु तेऽष्टधा परिकीर्त्तिताः।
पृथक् दोषैस्त्रयो द्वन्द्वैस्त्रिविधः सप्तमोऽस्रजः॥
अष्टमः सन्निपातेन—" ॥१०२॥

तत्र चतुर्दशमसूरिकाणां विवरणम्।—

"—क्षुद्रकन्तु मसूरिका।
चतुर्दशप्रकारेण त्रिभिर्दोषैस्त्रिधा च सा॥१०३॥

विस्फोटाः क्षुद्ररोगेष्वित्यादि।—क्षुद्ररोगगणनायां व्यक्तविस्फोटा अपि लिखिताः, पृथगेव चिकित्सार्थत्वात्; तद्यथा—"अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः। क्वचित् सर्वत्र वा देहे विस्फोटा इति ते स्मृताः॥" (रो० वि० विस्फोट०) इति सकलविस्फोटेषु रक्तपित्तयोरव्यभिचारित्वं सूचितम्, यदुक्तं भोजेन—"यदा रक्तञ्च पित्तञ्च वातेनानुगतं त्वचि। अग्निदग्धनिभान् स्फोटान् कुरुतः सर्वदेहगान्॥" इति। अत एव माधवेनोक्तं यथा—"त्वचमाश्रित्य ते रक्त-मांसास्थीनि प्रदूष्य च। घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान्॥" (रो० वि० विस्फोट०) इति, तत्राष्ट विस्फोटा अष्टधा कथिताः, अष्टप्रकारत्वाच्च सुबोधम्॥१०२॥

क्षुद्रकन्तु मसूरिकेत्यादि।—क्षुद्ररोगाणां मसूराद्याकारत्वादेवापि मसूरिका लिखिता, अत्रैव चिकित्सानिमित्तेन प्रतिपादिता न दोषः। मसूराकृतिः पिडका मसूरिका, लोके "शीतला" शब्दवाच्या; यतः,—"मसूरकुसुमानाञ्च तुल्या तत्फलकोपमा। गात्रेषु वदने वाऽपि पित्ताज्ज्ञेया मसूरिका॥" इति। पित्ताज्ज्ञेयेत्यत्र रक्तपित्ताधिक्यं दर्शयति, तेन सर्वदोषप्रकोपत्वं सूचयन्, यदुक्तं—"कट्वम्ललवणक्षार-विरुद्धाध्यशनाशनैः। दुष्टनिष्पावशाकाद्यैः प्रदुष्टैः पवनोदकैः॥ क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्धताः। जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः॥ मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः॥" (रो० वि० मसू०) इति। * मसूरोपलक्षितत्वाद्दोषदूष्याणां सम्पृक्ततारविशेषेण तासां वर्णाकारान्तराणि सम्भवन्ति, यदुक्तं तन्त्रान्तरे—"पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम्। तदा करोति पिडकाः सर्वगात्रेषु देहिनाम्॥ मसूरमुद्गमाषाणां तुल्याः कोलोपमाः क्वचित्। प्रवालसदृशाः काश्चित् काश्चिज्जम्बूफलोपमाः॥ लोहजालनिभाः काश्चिदतसीफलसन्निभाः। मसूरिकास्तु ता ज्ञेयाः

* मसूरस्य उपलक्षणत्वात् इति पाठकल्पनं सङ्गतम्।

द्वन्द्वजा त्रिविधा प्रोक्ता सन्निपातेन सप्तमी।
अष्टमी त्वग्गता ज्ञेया नवमी रक्तजा मता ॥१०४॥
दशमी मांसजा ख्याता चतस्रोऽन्याश्च दुस्तराः।
मेदोऽस्थिमज्जशुक्रस्थाः क्षुद्ररोगा इतीरिताः ॥ १०५ ॥

नवविसर्पाणां विवरणम्।—

विसर्परोगो नवधा वातपित्तकफैस्त्रिधा।
त्रिधा स द्वन्द्वभेदेन सन्निपातेन सप्तमः॥
अष्टमो वह्निदाहेन नवमश्चाभिघातजः॥ १०६ ॥

पित्तरक्ताधिका बुधैः॥" इति। तस्याश्चतुर्दशभेदानाह, चतुर्दशप्रकारेत्यादि।—तत्र दोषैः पृथक् त्रयो भेदाः, मिलितदोषद्वयेनापि त्रयः, सन्निपातेनैकः, सप्तधातुगतत्वेन सप्त भेदाः, एवं चतुर्दश भवन्ति। अष्टमी त्वग्गतेत्यत्र त्वक्शब्देन रसोऽभिधीयते, धातुगतप्रस्तावात्; अत एवाह काश्चित्—"त्वग्रक्तमांसमेदांसि" इत्यादि। अन्यत् सुगमम्। एवं षष्टिसङ्ख्याः क्षुद्ररोगाः ईरिताः कथिताः॥ १०२—१०५ ॥

विसर्पेति।—विसर्पणाद्विसर्पः, तेन सर्वतो विविधं वा विसर्पणादिति भावः; यदुक्तं चरके—"विविधं सर्पति यतो विसर्पस्तेन स स्मृतः। परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात्॥" (च० चि० वीसर्प०) इति। नवधेति—नवप्रकारः, तेन वातजः, पित्तजः, कफजः, वातपित्तजः, वातश्लेष्मजः, श्लेष्मपित्तजः, सन्निपातजः, अग्निदाहजः, आघातज इति। ननु माधवेन सप्तविधो विसर्प उक्तः; यथा—"लवणाम्लकटूष्णादि-संसेवादोषकोपतः। विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्॥" (रो० वि० विसर्प०) इत्यादिना, तत् कथमत्र नवधा प्रोक्तः? उच्यते—माधवेन तु दोषकारणत्वात् चतुर्णां विसर्पः पित्तजे दर्शितः; तद्यथा—"बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन्। वीसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम्॥ स्फोटैः शोफज्वररुजा-दाहाढ्यं श्यावशोणितम्॥" (मा० नि० १३अ०) इति। भोजेऽप्युक्तं—"शस्त्रप्रहारैस्तैस्तैस्तु व्यालदन्तनखैरपि। क्षते वाऽप्यथवा भग्ने बहुदोषस्य देहिनः॥ रक्तं पित्तञ्च कुपितं त्वचमाशु प्रपद्यते। कुलत्थे समेते तु प्रत्यग्रीयं सुदारुणम्॥ आचितं तनुविस्फोटैः कृष्णैः पीतकसन्निभैः। पित्तविसर्पवल्लिङ्गं तस्य शेषं विनिर्दिशेत्॥" इति। तथा चरके तस्य चान्तर्बाह्यज-भेदेन प्रतिपादितत्वाच्च; तथा हि—"मर्मोपघातात् सम्मोहादयनानां विघट्टनात्। तृष्णातियोगात् वेगानां विषमाणां प्रवर्त्तनात्॥ विद्यात् विसर्पमन्तर्जमाशु चाग्निबल-

एकैकोदर्दशीतपित्तयोः विवरणम्।—

तथैकः श्लेष्मपित्ताभ्यामुदर्दः परिकीर्त्तितः।
वातपित्तेन चैकस्तु शीतपित्तामयः स्मृतः॥ १०७॥

त्रिविधाम्लपित्तानां विवरणम्।—

अम्लपित्तं त्रिधा प्रोक्तं वातेन श्लेष्मणा तथा।
तृतीयं श्लेष्मवाताभ्यां—" ॥ १०८॥

---

चयात। धर्त्तो विपर्य्ययात् बाह्यमन्यैर्विद्यात् स्वलक्षणैः॥" (च० चि० विसर्प०) इति। अग्निदाहकोऽपि दोषप्रकोपलक्षणत्वादन्तर्गत एव; यतः,—"अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति। ततस्तेनैव वेगेन पित्तमस्याप्युदीर्य्यते॥" (सु० सू० १२अ०) इत्यादिनाऽत्र पित्तविसर्पान्तर्गतोऽग्निदाहविसर्पो बोद्धव्यः, अत्र तु गणनासङ्कुलत्वेन पृथक् दर्शितावित न दोषः। तन्त्रान्तरं द्वन्द्वजविसर्पाणां नामान्तराणि प्रवदन्ति; तद्यथा—"वातपित्ताग्निरीसर्पः कथितो ग्रन्थिसंज्ञकः। कफवातात् पित्तकफात् कर्दमाख्यो निबध्यते॥" इति॥ १०६॥

तथेति।—तथेत्यनेन दोषत्रयजन्यत्वमुक्तमनयोः; यदुक्तं—"शीतमारुतसंस्पर्शात् प्रदुष्टौ कफमारुतौ। पित्तेन सह सम्भूय बहिरन्तर्विसर्पतः॥" (रो० वि० शीतपित्त०) इत्यादिना; अत्र तु पित्तानुबन्धयोः कफवातयोराधिक्यविशेषेण दर्शितौ न दोषः; यतः,—"वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः" (रो० वि० शीतपित्त०) इत्यादि। उदर्द एव शीतपित्तामयः प्रतिपादितः; अतोऽन्यैः गणनामात्रेणापि पृथक् लिखितः; यदुक्तं—"वरटीदष्टसंस्थानः शोथः सञ्जायते बहिः। सकण्डूतोदबहुलः छर्दिज्वरविदाहवान्॥ उदर्दमिति तं विद्याच्छीतपित्तमथापरे॥" (रो० वि० शीतपित्त०) इति॥ १०७॥

अम्लपित्तमिति।—विदाह्याद्यम्लगुणोद्रिक्तं पित्तमम्लपित्तमित्युच्यते, यतः विदाह्याद्यम्लगुणं पित्तमम्लपित्तं, विदग्धमम्लतामुपेतोत्यादिना तिक्ताम्लशास्त्रत्वाच; अत एवाम्लपित्तं प्रधानं वातकफाभ्यामनुगतौ गौरवोद्गारकर्मादिना ज्ञेयौ; तथा हि—"अविपाकक्लमोत्क्लेश तिक्ताम्लोद्गारगौरवैः। हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक्॥" (रो० वि० अम्ल०) इति। केचिदम्लपित्ते मिलिते कफपित्ते सामान्य मर्थेत्वं ब्रुवन्तित्याहुः; "करचरणदाहमौष्ण्यं महतीमरुचिं ज्वरञ्च कफपित्तम्। जनयति कण्डूमण्डलपिडकाशतनिचितगात्ररोगनिचयम्॥" (रो० वि० अम्ल०) इति

अष्टविधवातरक्तानां विवरणम्।—

"—वातरक्तं तथाऽष्टधा।
वाताधिक्येन पित्ताच्च कफाद्दोषत्रयेण च॥
रक्ताधिक्येन दोषाणां द्वन्द्वेन त्रिविधः स्मृतः॥ १०९॥

अशीतिवातरोगाणां विवरणम्।—

अशीतिर्वातजा रोगाः कथ्यन्ते मुनिभाषिताः।

त्रैविध्यमस्य प्रसिद्धम्। एके "अम्लपित्तं द्विधा प्रोक्तमूर्द्ध्वाधोभेदतस्तथा" इति पठन्ति व्याख्यानयन्ति च; तत्र "प्रयात्यधो वा विविधप्रकारम्" इत्यादिना कृतार्थत्वात् "वान्तं हरित्पीतकनीलकृष्णम" इत्यादिवाक्येनोक्तम् इति॥ १०८॥

वातरक्तमिति।—कुपितो वातः रक्तञ्च कुपितं वातरक्तमित्युच्यते, वातस्य प्राबल्यात् प्राधान्याच्च वातरक्तव्यपदेशः, न तु रक्तवातः; यतः, एकेनैव स्वहेतुक्रुद्धेन वातेन विमानस्थं रक्तं दूषितम्, एवं रक्तं स्वहेतुक्रुद्धं समानस्थं वातदूषितं न (?)। चरकेऽप्युक्तं—"वायुः प्रवृद्धो वृद्धेन रक्तेनावारितः पथि। क्रुद्धः सन्दूषयेत् रक्तं तज्ज्ञेयं वातशोणितम्॥" (च० चि० वातरक्त०) इति। करपादगं रोगं तं वातरक्तमाहुरेके, यतः,—"पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि। आखोर्विषमिव क्रुद्धं तद्देहमुपसर्पति॥" (च० चि० वातरक्त०) इति। तत् वातरक्तं चरकेण द्विविधमुक्तम् उत्तानगम्भीरभेदात्; तदुक्तम्—"उत्तानमथ गम्भीरं द्विविधं वातशोणितम्। त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम्॥" (च० चि० वातरक्त०) इति। अष्टधा अष्टप्रकारः, तद्यथा—वाताधिक्येनैको भेदः, आधिक्यमत्र रक्तदोषात्। पित्ताधिक्यात् द्वितीयः। कफादिति—कफाधिक्यात् तृतीयः। दोषत्रयेण चतुर्थः, सन्निपातेनेत्यर्थः। रक्ताधिक्येन पञ्चमः, एतच्चारम्भकरक्ताद्रक्तान्तरं बोद्धव्यं, यतो रक्तमपि रक्तान्तरदूषकम्; यदुक्तं दुष्टरक्तलक्षणे—"पित्तवद्रक्तेनातिदुष्टञ्च" (सु० सू० १४ अ०) इति व्याख्यास्यतेऽर्थः। दोषाणां द्वन्द्वेनेति —दोषाणां वातपित्तकफानां द्वन्द्वेन द्विदोषमिलितेन त्रयो भेदा इत्यष्टधा पूर्य्यते॥ १०९॥

अशीतिर्वातजा रोगा इत्यादि।—वातेन जनिता वातजा रोगाः; यद्येवं तर्हि ज्वरादिषु व्यभिचारः; अन्यथा वात एव रोगः इति चेत्तर्हि स्वस्थस्यापि प्रसङ्गः; तस्मात् वातरोगाः किमिति प्रतिपादिताः? उच्यते, चरके द्विविधा रोगा उक्ताः, सामान्यजा नानात्मजाश्च; तत्र सामान्यजा वातादिभिः समस्तैः व्यस्तैश्च जन्यन्ते, यथा

आक्षेपको हनुस्तम्भ ऊरुस्तम्भः शिरोग्रहः ॥ ११० ॥
बाह्यायामोऽन्तरायामः पार्श्वशूलं कटिग्रहः।

ज्वरादयः; नानात्मजा ये नियतैकदोषजनिताः, यथा आक्षेपकादयः, ये वातेनैव जन्यन्ते न स्वतन्त्रेण पित्तेन कफेन वा, तथा ओषचोषादयः पित्तेनैव जन्यन्ते, न कफेन न वातेन वा; तथा तन्द्रातिनिद्रादयः कफेनैव जन्यन्ते, न वातेन न पित्तेनेति। यथा वक्ष्यमाणवातविकारादीनां स्वरूपमेवाव्यक्तं पूर्वरूपं, न तु ज्वरादिवत् विशिष्टमन्यत्; तदुक्तम्—"अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम्। आत्मरूपन्तु यत् व्यक्तमपायो लघुता पुनः॥" (च० चि० वातव्याधि०) इत्यादिना; एवमत्रापि न दोषः। अशीतिसङ्ख्याया विवरणमाह, आक्षेपक इत्यादि।—आक्षेपणादाक्षेपकः गात्रचालनम् इत्यर्थः स च हस्त्यारूढस्येव गात्रं चालयतीत्यभिप्रायः; यदुक्तं—"यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः। तदाऽऽक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः। मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः॥" (सु० नि० १अ०) इति। हनुस्तम्भो हनुग्रहः आयतः, स द्विविधः, विवृतास्यः संवृतास्यश्च इति; यदुक्तं—"कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू। करोति विवृतास्यत्वमथवा संवृतास्यताम्॥" (मा० नि० १५अ०) इत्यादि। ऊरुस्तम्भ इति—कुपितो वात ऊरुस्तम्भं करोतीत्यूरुस्तम्भः कथितः; तथा हि—"तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ। परकीयाविव गुरू स्यातामतिभृशव्यथौ॥" (मा० नि० १५अ०) इति। सुश्रुतेन वातस्य प्राधान्यान्महावातव्याधौ पठितस्तेनात्रापि सङ्ग्रहः, अन्यत्र चिकित्सार्थत्वेन पृथक् लिखितः। शिरोग्रहः इति—शिरः स्तब्धमिव भवतीति शिरोग्रहः। माधवेन तु रक्ताश्रितवायुना शिरोग्रहः प्रतिपादितः; यदाह—* "रक्तमाश्रित्य पवनः कुर्यान्मूर्द्धधराः शिराः। रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः॥" (मा० नि० १५अ०) इति। एके शिरोग्रहस्थाने † शिरःकुञ्चनमिति पठन्ति; तत्र कुञ्चनमन्तःप्रवेशो वक्रत्वं वा, धातूनामनेकार्थत्वात्; तथा हि—"शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि कुञ्चनम्" इति वचनात्। शिराग्रह इत्यपरे त्वाहुः, स तु शिराणां पूरणमिति वक्ष्यमाणत्वादत्रापि पुनरुक्तभयेन नास्माभिः स्वीकृतः। बाह्यायामोऽन्तरायाम इति—आयामो धनुर्वदानमनम्; यदुक्तं

* लक्षणमेतत् माधवेन शिराग्रहस्य लिखितं न तु शिरोग्रहस्य।

† "कुञ्चनम्" इत्यत्र "कुब्जनम्" इति चरकादिसम्मतः पाठः।

दण्डापतानकः खल्ली जिह्वास्तम्भस्तथाऽर्दितम् ॥१११॥
पक्षाघातः क्रोष्टुशीर्षो मन्यास्तम्भश्च पङ्गुता ।

—"बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च। अभ्यन्तरं धनुरिव यदा नमति मानवम्। तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली॥" (सु० नि० १अ०) इति। बाह्यायामे पृष्ठेन नतम् अभ्यन्तरायामे क्रोडेन नतमिति। पार्श्वशूलमिति—कोष्ठाश्रितवातः पार्श्वशूलं करोतीति "हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत्" (च० चि० वातव्याधि०) इत्यादिवचनात्; तथा हि—"तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः। ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलञ्च मारुते॥" (च० चि० वातव्याधि०) इति। कटिग्रह इति—कटीस्तम्भत्वेन वेदनाविशेषः, अत्रापि "हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत्" (च० चि० वातव्याधि०) इत्यादिना ज्ञेयः। दण्डापतानक इति—यो दण्डवत् गात्रं स्तम्भयति स च दण्डापतानकः, यदुक्तं चरके—"पाणिपादशिरः-पृष्ठश्रोणीः स्तभ्नाति मारुतः। दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः॥" (च० चि० वातव्याधि०) इति। स्तम्भायामान्याहतस्तम्भोऽप्यस्यैव भेद इति केचित्। खल्लीति—पादजङ्घाप्रभृतिषु शूलं परिवर्त्तनता च भवतः सा खल्लीशब्दवाच्या; यतः,—"खल्ली तु पादजङ्घोरुकरमूलावमोटनी" (च० चि० वातव्याधि०) इत्यादि। जिह्वास्तम्भ इति—यो वाग्वाहिनीशिरासंस्थोऽन्नपानवाक्येष्वनीशता करोति तत्र जिह्वास्तम्भ इति संज्ञा, यदुक्तं—"वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयते-ऽनिलः। जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता॥" (वा० नि० १५अ०) इति। अर्दित इति—मुखस्यार्द्धवक्रत्वेनोपलक्षितोऽर्दित इति प्रसिद्धः; तथा हि—"अर्द्धयत्यनिलो वक्त्रमर्दितं जनयत्यतः। वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते॥" (सु० नि० १अ०) इत्यादि। पक्षाघात इति—पक्षाघात एकाङ्गविकारः, पक्षस्य विघातमित्युक्तत्वात्; यतः,—"गृहीत्वार्द्धं तनोर्वायुः शिराः स्नायूर्विशोष्य च। पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन्॥ कृत्स्नोऽर्द्धकायस्तस्य स्यादकर्मण्यो विचेतनः। एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः॥" (वा० नि० १५अ०) इति। क्रोष्टुशीर्ष इति—ऊरुजङ्घयोः सन्धिः स्थौल्येन कृत्वा शृगालमस्तकवत् शोथान्वितो भवति तेन क्रोष्टुशीर्ष इति संज्ञा, लोके "गेरुव" शब्दवाच्यः; तदुक्तं—"वातशोणितजः शोथो जानुमध्ये महारुजः। ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत्॥" (वा० नि० १५अ०) इति। वातशोणिताभ्यां जातो वात-

कलायखञ्जता तूणी प्रतितूणी च खञ्जता ॥ ११२ ॥
पादहर्षो गृध्रसी च विश्वाची चापबाहुकः।

शोणितजः, * न पुनर्वातरक्तेन व्याधिना जनित इत्यभिप्रायः। मन्यास्तम्भ इति—ग्रीवामुभयतो द्वे मन्ये धमन्यौ, तयोः स्तम्भो निश्चलत्वम्; यतः,—"दिवास्वप्नासनस्थानविकृतोर्द्ध्वनिरीक्षणात्। मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः॥" (सु० नि० १अ०) इति। पङ्गुनेति—पङ्गुता खञ्जभेदः, तेन द्वयोः सक्थ्नोर्बधात् पङ्गुः एकसक्थिवधात् खञ्ज इति; बधश्चात्र गमनादिक्रियानाशः; तद्यथा—"वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेत यदा। खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्बधात्॥" (सु० नि० १अ०) इति। कलायखञ्जतेति—यः पादविक्षेपं कुर्वन् पुरुषः कम्पायमानः खञ्जन्निव गच्छति स कलायखञ्ज इति शास्त्रे रूढ़िसंज्ञा; यदुक्तं—"प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति। कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम्॥" (सु० नि० १अ०) इति। तूणी प्रतितूणी चेति—स्त्रीपुंसोर्गुह्यस्थानसंधिकवेदनाविशेषेण भिन्दन्तीव तूणीशब्दवाच्या, सैव प्रतिलोमेन प्रधावनात् प्रतितूणी च कथिता; तथा हि—"अधो या वेदना याति वर्चोमूत्राशयोत्थिता। भिन्दन्तीव गुदोपस्थं सा तूणी नाम नामतः॥" (सु० नि० १अ०) इति। प्रतितूणी यथा—"गुदोपस्थोत्थिता या तु प्रतिलोमं प्रधाविता। वेगैः पक्वाशयं याति प्रतितूणीति सोच्यते॥" (सु० नि० १अ०) इति। खञ्जतेति—खञ्जता पङ्गुविशेषे पूर्वं दर्शिता। पादहर्ष इति—यत्र रोमाञ्चप्रायोऽतिसुप्तता झिंझिंझिंमिवद्वेदनाविशेषः स पादहर्षः इति; यदुक्तं—"हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ। पादहर्षः स विज्ञेयः कफवातप्रकोपतः॥" (रो० वि० वातव्याधि०) इति। गृध्रसी चेति—गृध्रसीति प्रसिद्धा, लोके राधिनाशब्दवाच्या इति केचित्; तद्यथा—"स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्। गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः॥" (च० चि० वातव्याधि०) इति। गृध्रसीद्वयमाहुरेके, एका केवलवातजनिता, अपरा वातकफलक्षणयुक्तेति; अत एव "वाताद्वातकफात् तन्द्रा गौरवारोचकान्विता" (च० चि० वातव्याधि०) इत्यादिवचनात्। विश्वाची चापबाहुक इति—विश्वाची च बाहुगता गृध्रसीवत्; तथा हि—"तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः। बाह्वोः कर्मक्षयकरी विश्वाचीति निगद्यते॥" (सु० नि० १अ०) इति। बाह्वो-

* "वातशोणितज इति वातरक्ताख्यविकारजः चिकित्साभेदार्थं पृथक् पठित इति गयदासः। वातशोणिताख्यां जात इति जेज्जड़ः" इति मधुकोषः।

अपतानो व्रणायामो वातकण्टोऽपतन्त्रकः ॥ ११३ ॥

द्विवचनं सामान्यापेक्षया, कदाचित् एकस्मिन्नपि बाहौ भवतीति । भुजस्याप-कर्षणात् * अववाहुक इति, † अंसशोषक इति वा आहुः; तदुक्तम्—"अंस-देशस्थितो वायुः शोषयित्वांऽसबन्धनम् । शिराश्चाकुञ्च्य तत्रस्थो जनयत्यववाहुकम् ॥" (सु० नि० १अ०) इति । ‡ केवलं वातजनितोऽंसशोषः कफवातजनितोऽववाहुक इति सुश्रुतवचनाद्भिन्नत्वमनयोः । अपतान इति—आक्षेपस्यावस्थाविशेषोऽपतानको भवति; "सोऽपतानकसंज्ञो यः पातयत्यन्तरान्तरा" (सु० नि० १अ०) इत्यादि-वचनात्, य आक्षेपकोऽन्तरा अन्तरा पातयति सोऽपतानक इति तात्पर्य्यार्थं, सुश्रुते चिकित्सार्थं पृथक् उपात्तत्वात्; चरके तु बहुरूपत्वाद्भिन्न एव; यतः,—"हृदि संसक्य संज्ञाञ्च हत्वा कण्ठेन कूजति । हृदि मुक्ते नरः स्वास्थ्यं याति मोहं व्रजेत् पुनः ॥ वायुना दारुणं प्राहुरेके तदपतानकम् ॥" (च० सि० त्रिमर्मीय०) इति । व्रणायामोऽपि आक्षेपकभेदः आघातजत्वात्, यतः,—"कफपित्तान्वितो वायुर्वायुरेव च केवलः । कुर्य्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥" (सु० नि० १अ०) इति । चरकेण आक्षेपक एव दण्डापतानकोऽभ्यन्तरायामो बहिरायाम आगन्तुक इति चतुर्विधः । तेनाभिघातेन व्रणकरत्वादेव व्रणायामः कथितः । वातकण्टक इति—विषमपादन्यासेन कुपितो वायुर्गुल्फे वेदनां जनयति तं वातकण्टकमाहुः; तदुक्तं—"रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥" (सु० नि० १अ०) इति । अयमेवान्यत्र "खुडुकावात" इत्युक्तः । अपतन्त्रक इति—अपतन्त्रकोऽप्याक्षेपावस्था एव, 'स्वैरित्यादिना क्रुद्धो वायुः स्थानादूर्द्धं गत्वाऽपतन्त्रकं करोति इति सम्बन्धः; तथा च दृढबलः,—"क्रुद्धः स्वैः

* सुश्रुतादिषु अववाहुक इति पाठः ।

† अंसशोष, अववाहुकात् भिन्नः इति सुश्रुतमाधवाभ्यां पठितः; मधुकोष-कारेणापि तथैव व्याख्यातः, तथा च—"अंसशोषः केवलवातज उच्यते । अंसबन्ध-कारकः श्लेष्मा अंसबन्धनः । एतदनन्तरम् अंसशोषं जनयेदिति शेषः इति कार्त्तिकः । शिराश्चेत्यादिना अववाहुकः । तत्रस्थः अंसस्थः । अयञ्च वातकफजः, अन्ये तु मिलित्वा अववाहुकलक्षणमाहुः, तन्न; यत. सुश्रुतेनोक्तम्—अंसशोषाववाहुकयोर्बाहुमध्ये शिराश्रय इति ।"

‡ सुश्रुते ईदृशार्थकः कश्चित् ग्रन्थो न दृश्यते । अंसशोषे श्लेष्मशोषणात् श्लेष्म-सम्बन्धो दृश्यते, न तु अववाहुके । मधुकोषकारेण तु अंसशोषः केवलवातजः अववाहुकः वातकफजः इति पठितम् ।

अङ्गभेदोऽङ्गशोषश्च मिन्मिनत्वञ्च कल्लता।
प्रत्यष्ठीलाऽष्ठीलिका च वामनत्वञ्च कुब्जता॥ ११४॥

कोपनैर्वायुः स्थानादूर्द्धं प्रपद्यते। पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीडयन्॥ धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तदा। स कृच्छ्रादुच्छ्वसेच्चापि स्तब्धाक्षोऽथ निमीलकः॥ कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः॥" (च० सि० त्रिमर्मी०) इति।
अङ्गभेद इति—अङ्गभेदो वेदनाविशेषत्वेन दर्शितः; यतः,—"हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत्" (च० चि० वातव्याध०) इत्यादिवचनात्; यथा कुक्षिशूलं नामानुरूपः कीलनिखातवत् वेदनाविशेषमाप्यायते, तथा तादभेदादिभिरपि पीडाविशेष एव गम्यते; तदुक्तं,—"स्थाननामानुरूपैश्च लिङ्गैः शेषान् विनिर्दिशेत्" (च० चि० वातव्याधि०) इत्यादि। अङ्गशोष इति—अङ्गादीनां बाहुमुखादीनां शोषः अङ्गशोषः। मिन्मिनत्वम् इति—मिन्मिनः सानुनासिकवचनः। कल्लेति—कल्लताऽव्यक्तवचनत्वेन प्रतिपादिता, तत्र लुप्तपदव्यञ्जनाद्यभिधायिनी कल्लताशब्दवाच्या। वक्ष्यमाणं मूकत्वमपि तद्विध एव। एतच्च जिह्वागतशब्दवाहिनीनां धमनीनां कार्य्यम्; तथा हि—"आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः। नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्॥" (सु० नि० १अ०) इति।
प्रत्यष्ठीलाष्ठीलिका इति—नाभेरधस्ताद्दीर्घवर्तुलपाषाणवत् यो रोगः सोऽष्ठीलाशब्दवाच्यः, वाताष्ठीलेत्यत्र रूढिः, तथा चोक्तं—"नाभेरधस्तात् सञ्जातः सञ्चारी यदि वाऽचलः। अष्ठीलावत् घनो ग्रन्थिरूर्द्ध्वमायत उन्नतः॥ वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्॥ एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम्। प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम्॥" (सु० नि० १अ०) इति। वामनत्वमिति—दुष्टशुक्रारक्तत्वाद्गर्भावस्थायां यथा युगलैकाङ्गुलीवक्राङ्गुल्यादिकं भवति तथाऽयमपि वामनरोगः। कुब्जेति—* कुब्जत्वञ्च शिरागतवातविशिष्टत्वात् केचिदायामान्तरगत (?) इत्याहुः, पृष्ठादिनतत्वात्; "कुर्य्यात् शिरागतः शूलं शिराकुञ्चनपूरणम्" (सु० नि० १अ०)

* कुब्जत्वञ्च शिरागतवातविशेषत्वात् केचित् अन्तरायामबहिरायामान्तर्गतमित्याहुः: क्रोडादिनतत्वात् इति पाठकल्पनं सङ्गतम्, "अन्तरायामबहिरायामाभ्यां तन्त्रान्तरोक्तकुब्जत्वावरोधः" इति मधुकोषदर्शनात्। चरके कुब्जता स्नायुगतवायुकार्य्यमित्युक्तं, तथा च—"सर्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायुगतोऽनिलः। बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च॥" (च० चि० वातव्याधि०) इति।

अङ्गपीडाङ्गशूलञ्च सङ्कोचस्तम्भरूक्षताः ।
अङ्गभङ्गोऽङ्गविभ्रंशो विड्ग्रहो बद्धविट्कता ॥ ११५ ॥
मूकत्वमतिजृम्भा स्यादत्युद्गारोऽन्त्रकूजनम् ।
वातप्रवृत्तिः स्फुरणं शिराणां पूरणं तथा ॥ ११६ ॥
कम्पः कार्श्यं श्यावता च प्रलापः क्षिप्रमूत्रता ।
निद्रानाशः स्वेदनाशो दुर्बलत्वं बलक्षयः ॥ ११७ ॥

"बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च ॥" (च० चि० वातव्याधि०) इति । अङ्गपीडाद्यङ्गविभ्रंशान्तामयभेदा हेतुस्थानविशेषत्वेन तदनुरूपा बोद्धव्याः । अन्तरायामं खल्लीं कुब्जत्वमेव मन्वन्ति (?)। अङ्गपीडाद्यङ्गविभ्रंशम् (?)। तत्र मप्रभेदाः स्थानविशेषत्वेन त्वनुरूपा बोद्धव्याः । तत्राङ्गसङ्कोचः स्तम्भोऽङ्गस्य रूक्षता । रूक्षतापीडाशूलादीनामपि परस्परं भेदोऽस्तीत्यवगन्तव्यम् । विड्ग्रहो बद्धविट्कता चेति—विड्ग्रहः पुरीषस्यानिर्गमः । बद्धविट्कता पुरीषस्य कर्कशता, पक्वाशय-कुपितवातगुणत्वात् ; यतः,—"ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः" (च० चि० वातव्याधि०) इत्यादि । मूकत्वमिति—मूकत्वञ्च मिन्मिनत्वे दर्शितम् । अतिजृम्भता च वातदुष्टत्वात्, "जृम्भाऽत्यर्थं समीरणात्" (सु० उ० ३९ अ०) इत्यादिना । अत्युद्गारोऽपि वातविकारजनितत्वादत्र लिखितः ; आमाशयस्थः कुपितो वातोऽत्युद्गारं करोतीत्यर्थः ; "रुक् पार्श्वोदरहृन्नाभेस्तृष्णोद्गारविसूचिकाः । * करोति कण्ठास्यशोषं वातश्चामाशये स्थितः ॥" इति । अन्त्रकूजनमिति—पक्वाशयगतवायुना भवति "पक्वाशयस्थोऽन्त्रकूजम्" (सु० नि० १अ०) इत्यादिवचनात् । वातप्रवृत्तिरिति—गुदेन वातस्यातिनिर्गमः । स्फुरणमिति—अङ्गस्फुरणम्, अङ्गस्पन्दनमित्यर्थः । शिराणां पूरणमिति—शिरागतो वायुः शिराणां पूरणं करोति ; "कुर्याच्छिरागतः शूलं शिराकुञ्चनपूरणम्" (सु० नि० १अ०) इति वचनात्, पूरणं स्थूलत्वम् ; यदुक्तं तन्त्रान्तरे—"सुप्तास्तन्व्यो महत्यो वा शिरा वाते शिरागते" (च० चि० वातव्याधि०) इति । कम्प इति—सर्वाङ्गस्य शिरसश्च कम्पत्वेन वेपथुसंज्ञः ; यदुक्तं—

* "करोति कण्ठास्यशोषं वातश्चामाशये स्थितः" इत्यत्र "कासः कण्ठास्यशोषश्च श्वासश्चामाशये स्थितः" इति माधवनिदानधृतः चरकसम्मतः पाठः ।

अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतसः।
अनवस्थितचित्तत्वं काठिन्यं विरसास्यता ॥ ११८ ॥
* ( कषायवक्त्रताऽऽध्मानं प्रत्याध्मानश्च शीतता।
रोमहर्षश्च भीरुत्वं तोदः कण्डूरसाज्ञता ॥ )
शब्दाज्ञता प्रसुप्तिश्च गन्धाज्ञत्वं दृशः क्षयः ॥ ११९ ॥

"सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः" ( रो० वि० वातव्याधि० ) इति। शिरसः इत्यवयवोपलक्षणं, तेन हस्तपादयोरपि कम्पः स्यात्। कार्श्यमिति—कृशता शरीरस्य वातप्रकृतिजत्वात्। एके कार्श्यस्थाने कार्ष्ण्यमिति पठन्ति, तन्न सर्वसम्मतम्। श्यावता चेति—शुक्लानुविद्धकृष्णवर्णत्वं श्यावताशब्दवाच्यं, पित्तानुबद्धवातविकृतत्वात्। प्रलाप इति—असम्बद्धभाषणं, यथोन्मादे, प्रबलवातकार्य्यत्वात्। क्षिप्रमूत्रतेति—क्षिप्रमूत्रता शीघ्रमूत्रता; यदुक्तं—"मारुतेऽविगुणे बस्तौ मूत्रं सम्यक् प्रवर्त्तते। विकारा विविधाश्चात्र प्रतिलोमे भवन्ति हि" ॥ ( सु० नि० ३ अ० ) इति; विविधग्रहणं क्षिप्रमूत्रताया ग्रहणार्थम् इति। निद्रानाश इति—निद्रानाशोऽप्यनिद्रता, अनिद्रत्वेनाल्पनिद्रा बोद्धव्या। स्वेदनाश इति—स्वेदस्याप्यनिर्गमः, वायोः शोषकत्वात्। दुर्बलत्वं बलक्षयश्चेति—"रसादीनां शुक्रान्तानां यत् परं तेजस्तत् खल्वोजः, तदेव बलमित्युच्यते" ( सु० सू० १४ अ० ) तस्य बलस्याल्पत्वं दुर्बलत्व, तस्यापि क्षयो बलक्षय इति; अत्र वातः हेतुरिति प्रथोजकत्वात्। अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतस इति—शुक्रस्य कार्श्यञ्च क्षीणत्वं स्वमानादित्यर्थः, नाशश्चेति स्वमानादित्यर्थः (?), अत्रापि शुक्रगतवातविकृतत्वात्; यदुक्तं—"क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा। विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः॥" ( च० चि० वातव्याधि० ) इति। अनवस्थितचित्तत्वमिति—अत्रापि वातकारणत्वं सिद्धम्। काठिन्यमिति—कठिनत्वम्, अङ्गादीनामिति भावः। विरसास्यता मुखवैरस्यम्। शब्दाज्ञता बाधिर्यम्। प्रसुप्तिश्च त्वग्विषये स्पर्शाज्ञता। गन्धाज्ञत्वमिति—नासाविषयाज्ञता। दृशः क्षय इति—दृष्टिनाशः, अत्रापि श्रोत्रादिगतवातः कारणं बोद्धव्यम्; यदुक्तं—"श्रोत्रादिष्विन्द्रियवधं कुर्य्यात् क्रुद्धः समीरणः" ( च० चि० वातव्याधि० ) इति, श्रोत्रत्वक्चक्षुर्घ्राणरसनेन्द्रियाणां वधो विनाशः, तेन स्वविषयेष्वग्रहणशक्तिरित्यर्थः। एवमशीतिर्वातरोगाः प्रतिपादिताः ॥ ११० — ११९ ॥

* प्रत्याध्मानोऽथानिलात् कश्चित्।

चत्वारिंशत्पित्तरोगाणां विवरणम्।—

अथ पित्तभवा रोगाश्चत्वारिंशदिहोदिताः।
धूमोद्गारो विदाहः स्यादुष्णाङ्गत्वं मतिभ्रमः॥ १२०॥
कान्तिहानिः कण्ठशोषो मुखशोषोऽल्पशुक्रता।
तिक्तास्यताऽम्लवक्त्रत्वं स्वेदस्रावोऽङ्गपाकता॥ १२१॥

अथ पित्तभवा रोगा इति।—स्वहेतुदुष्टेन स्वतन्त्रेण पित्तेन जनिता इत्यर्थः, यथा ज्वरशोषादयः। चत्वारिंशदित्यस्य विवरणमाह—तत्र धूमोद्गारो धूमायनं, "ध्वाइयो" इति शब्दवाच्यः, मुखात् धूमोद्गमनमिव भवति, शिरोग्रीवामुखतालुभ्यः धूमस्य उद्गिरणं निःसरणम्। विदाहो विशिष्टो दाहः, अत विदाहशब्देन उषादिदाहः, तेषां षण्णां ग्रहणं कार्यं पित्तजन्यत्वात्। उषादिदाहलक्षणञ्च—"दाहः सर्वाङ्गसन्तापः उषः सस्वेदताऽरतिः। यः क्वापि देहावयवे शोषः स्यादग्निनेव सः॥ पाणिपादांसमूलेषु विदाहो विविधो मतः। दाहस्तु मुखताल्वोष्ठ दवथुश्चक्षुरादिषु॥ कोष्ठदाहोऽन्तर्दाहः स्याद्धृद्दाह उषो मतः॥" इति। सर्वेऽपि पित्तोपजाः; उक्तञ्च—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्॥" (वा० चि० १अ०) इति, अत एव उष्णाङ्गत्वं पित्तकर्मैव, अतः सङ्ग्रहः पित्तविकारेषु। पित्तविकाराः पुनः ओषचोषदाहदवथुविदाहसदाहाः त्वग्दाहोऽन्तर्दाह इत्युक्तम्। तथा मतिभ्रमोऽपि पित्तभव एव, न तु वातमद्यादिजः बुद्धिनाशः। ननु "पित्तं पक्त्यूष्मदर्शनैः। क्षुत्तृड्रुचिप्रभामेधा-धीशौर्य-तनुमार्दवैः॥" (वा० सू० ११अ०) इत्यादिना शरीरोपाकरणादाधिक्यात् वह्नेराधिक्यं स्यादिति चेन्न, "ऊष्मणा मन्दता यस्य तत एव स सीदति। उपघातस्तु तेनैव तथा नेत्रस्य तेजसः॥" इति न्यायात् पित्ताधिक्यात् बुद्धिनाश इति स्थितम्। कान्तिहानिः पित्तदग्धशरीरत्वात्, न तु वातादिवत् कार्श्यादि। कण्ठशोषो मुखशोषश्च तयोः शुष्कत्वं तदूष्मणः शुष्कद्रवत्वम्। अल्पशुक्रता पित्तादेव। तिक्तास्यता अम्लवक्त्रत्वमिति—तिक्तं निम्बादि तद्वदास्यं,* तथा अम्लास्यता अम्लमुखता। ननु वाग्भटे—"कटुकाम्लौ रसौ वर्णः पाण्डुरारुणवर्जितः" (वा० सू० १२अ०) इत्युक्तम्, इह तु तिक्त इति विरोधः, मैवं, वाग्भटोक्तस्य "कटुः स्यात् कटुतिक्तयोः" इति वचनात् तिक्त एवार्थः; "कषायतिक्तमधुरं वातादिषु मुखं क्रमात्" (वा०

* तिक्तरसवदास्यमित्यर्थः।

क्लमो हरितवर्णत्वमत्वग्निः पीतगात्रता।
रक्तस्रावोऽङ्गदरणं लोहगन्धास्यता तथा॥ १२२॥
दौर्गन्ध्यं पीतमूत्रत्वमरतिः पीतविट्कता।
पीतावलोकनं पीत-नेत्रता पीतदन्तता॥ १२३॥
शीतेच्छा पीतनखता तेजोद्वेषोऽल्पनिद्रता।
कोपश्च गात्रसादश्च भिन्नविट्कत्वमन्धता॥ १२४॥
उष्णोच्छ्वासत्वमुष्णत्वं मूत्रस्य च मलस्य च।
तमसो दर्शनं पीत-मण्डलानाञ्च दर्शनम्॥
निःसहत्वञ्च पित्तस्य चत्वारिंशद्रुजः स्मृताः॥ १२५॥

नि० ५अ० ) इति। स्वेदो घर्मस्तस्य स्रावः स्रुतिः। अङ्गपाकता अङ्गपाकत्वम्। क्लम इति—"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः॥" ( सु० शा० ४अ० ) इति। हरितवर्णत्वं हरितवर्णता, "दहा हरितहारिद्रः" इति वचनात्। अत्वग्निः त्वग्दहनं भवति। पीतगात्रता पीतशरीरत्वम्। रक्तस्रावः रक्तस्य स्रवणम्। अङ्गस्य दरणं विदरणम्। लोहगन्धास्यता लोहं * कालायसं, तद्वन्मुखगन्धो भवति। दौर्गन्ध्यम् अङ्गानाम्। पीतमूत्रत्वं हरिद्राभमूत्रत्वम्। अरतिः सर्वत्राप्रीतिः। पीतविट्कता पीतपुरीषता। पीतावलोकनं पीततादर्शनं वस्तुषु, नेत्रादिषु च पीतता। पीतदन्तता दन्तेषु पीतत्वम्। शीतेच्छा शीतवस्तुनोऽभिलाषः। पीतनखता पीतनखत्वम्। तेजोद्वेषः तैजसवस्तुद्वेषः। अल्पनिद्रता अल्पनिद्रत्वम्। † कोपश्च पित्तस्यैव, रक्तकोपता रक्तजेषूक्तत्वात्। गात्रसादो गात्रसादनम्। भिन्नविट्कत्वं भिन्नपुरीषता। अन्धता नेत्रस्यैव। उष्णोच्छ्वासत्वमिति—उष्णश्वासत्वम्। उष्णत्वं मूत्रस्य च मलस्य चेति—द्वयोरपि कोष्णं पित्तभवत्वात्। तथा तमसो दर्शनम् अन्धकारदर्शनम्। तथा पीतमण्डलानाञ्च

* लोहं रक्तमित्यर्थो युक्तः, लोहे गन्धाभावात्, रक्तपित्ते "लोहगन्धित्वं रक्तगन्धित्वम्" इत्यर्थदर्शनाच्च।

† "कोपश्च पित्तस्यैव" इत्यत्र "कोपः क्रोधाधिक्यम्" इत्यर्थो युक्तः, क्रोधस्य पित्तकार्यत्वात्, तथा धूमोद्गारादीनां सर्वेषामेव पित्तकोपजन्यत्वेन "कोपः पित्तस्येव" इत्यस्य पुनरुल्लेखासङ्गतत्वाच्च।

विंशतिकफरोगाणां विवरणम्।—

कफस्य विंशतिः प्रोक्ता रोगास्तन्द्राऽतिनिद्रता।
गौरवं मुखमाधुर्य्यं मुखलेपः प्रसेकता ॥ १२६ ॥
श्वेतावलोकनं श्वेत-विट्‌कत्वं श्वेतमूत्रता।
श्वेताङ्गवर्णता शैत्यमुष्णेच्छा तिक्तकामिता ॥ १२७ ॥
मलाधिक्यञ्च शुक्रस्य बाहुल्यं बहुमूत्रता।
आलस्यं मन्दबुद्धित्वं तृप्तिर्घर्घरवाक्यता ॥
अचैतन्यञ्च गदिता विंशतिः श्लेष्मजा गदाः ॥ १२८ ॥

दर्शनं पीतानि यानि मण्डलानि तेषां दृष्टिः। निःसहत्वञ्च पित्तस्येति—निःसहत्वं * निःसहता। इति चत्वारिंशत् पित्तजाः पित्तजनिता रोगा इत्यर्थः ॥ १२०—१२५ ॥

पित्तजानुक्त्वा कफजानाह, कफस्येति।—कफस्य श्लेष्मणः स्वहेतुदुष्टस्य जनिता रोगा विंशतिः प्रोक्ता इत्यर्थः। तेषां विवरणमाह, अतिनिद्रतेति—निद्रालक्षणम्—† "यदा तु मनसि क्लान्तिः कर्म्मात्मा च क्लमान्वितः। आलस्यं मन्दबुद्धित्वं तृप्तिर्घर्घरवाक्यता ॥ विषयेभ्यो निवर्त्तेत तस्य निद्रा विनिर्दिशेत् ॥" अति अत्यन्तं निद्रा अतिनिद्रता। गौरवमिति—तल्लक्षणम्—"आर्द्रचर्म्मावनद्धं हि यो गात्रमभिमन्यते। तथा गुरुशिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् ॥" (सु० शा० ४ अ०)। मुखमाधुर्य्यं मधुरास्यता। मुखलेपः कफेन लिप्तता। प्रसेकता लालास्रावता। श्वेतावलोकनं श्वेतस्य वस्तुनो दर्शनम्। तथा श्वेतविट्‌कत्वं शुभ्रपुरीषता। श्वेतमूत्रता शुभ्रमूत्रता। श्वेताङ्गवर्णता श्वेतत्वमङ्गस्य। शैत्यम् अङ्गशीतता। उष्णेच्छा उष्णवस्तुनोऽभिलाषः। तिक्तकामिता तिक्तस्य कटुवस्तुनः काङ्क्षा अभिलाषः। मलाधिक्यं मलस्याधिक्यता। शुक्रस्य बाहुल्यम् अतिशुक्रता। बहुमूत्रता मूत्रस्य बहुप्रवृत्तिः। आलस्यमिति—तल्लक्षणम्—"समर्थस्याप्यनुत्साहः कर्म्मस्वालस्यमुच्यते" (सु० शा० ४ अ०) इति। मन्दबुद्धित्वं बुद्धेर्मन्दता। तृप्तिर्भोजनानभिलाषः। घर्घरवाक्यता घर्घरशब्दत्वम्।

* सहनशक्तेरभावः, धैर्य्याभाव इत्यर्थः।

† लक्षणमिदं न समीचीनं "यदा" "तस्य" इति सर्व्वनामद्वयस्य सङ्गतिविरोधात् कर्त्तृपदक्रियापदयोः दूरान्वयदोषाच्च, तथा चरके "यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः। विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः ॥" इति पाठदर्शनाच्च।

दशरक्तरोगाणां विवरणम्।—

रक्तस्य च दश प्रोक्ता व्याधयस्तेषु गौरवम्।
रक्तमण्डलता रक्तनेत्रत्वं रक्तमूत्रता॥ १२९॥
रक्तनिष्ठीवनं रक्त-पिड़कानाञ्च दर्शनम्।
औष्ण्यञ्च पूतिगन्धत्व पीड़ा पाकश्च जायते॥ १३०॥

चतुःसप्ततिमुखरोगाणां विवरणम्।—

चतुःसप्ततिसङ्ख्याका मुखरोगास्तथोदिताः॥ १३१॥

तत्र एकादशौष्ठरोगाणां विवरणम्।—

तेष्वोष्ठरोगा गणिता एकादशमिता बुधैः।
वातपित्तकफैस्त्रेधा त्रिदोषैरसृजा तथा॥ १३२॥

---

अचैतन्यं चैतन्यं ज्ञानं तद्रहितत्वं जडता, * कफरुद्धस्रोतसां रोधात्। इति श्लेष्मरोगा विंशतिर्व्याख्याताः॥ ११६—१२८॥

अथ रक्तजानां रोगाणां विवरणमाह, रक्तस्येत्यादि।—रक्तस्य रुधिरस्य व्याधयः मुनिभिर्दश प्रोक्ताः। तेषु व्याधिषु गौरवं कफजमिव रक्तस्यानुरूपतया भवति। तथा रक्तमण्डलता आरक्तमण्डलोत्पात्तः। तथा रक्तनेत्रत्वम् आरक्तलोचनता। तथा रक्तमूत्रता रक्तमूत्रत्वं, तस्य रक्तगन्धत्वात्। रक्तनिष्ठीवनं रक्तामिश्रितनिष्ठीवनं रक्तस्यैव वा निष्ठीवनम्। तथा रक्तपिडकानाञ्च दर्शनं रक्तजा आरक्ता वा पिडकाः क्षुद्रस्फोटाः तासां दर्शनम। औष्ण्यम् उष्णत्वं, रक्तस्यापि तैजसत्वात्। पूतिगन्धत्वं दुर्गन्धता, सा तु रक्तजैवात्र ग्राह्या न त्वन्यजा। तद्वत् पीडाऽपि। तथा पाकश्च मांसादीनां रक्तस्य वा। इति दश रक्तजा रोगा व्याख्याताः॥ १२९।१३०॥

उद्देशक्रमेणैव मुखरोगाणां विवरणमाह, चतुःसप्ततीति।—मुखरोगा इति—मुखे भवा रोगा मुखरोगाः। आयतनसमुदायस्य तदधिष्ठितत्वान्मुखस्यात्र ग्रहणम्; यतः,—"मुखरोगाः समाख्याताः सप्तस्वायतनेषु च" इति। आयतनानि स्थानानि, यथा—दन्तौष्ठदन्तमूलजिह्वाकण्ठतालुसर्वगतानीति॥१३१॥

मुखरोगेषु प्रथमत ओष्ठरोगानाह, तेष्विति।—एकादशेत्यादि—वातपित्तकफैः

---

* कफरुद्धमनोवहस्रोतोरोधात् कफरुद्धचेतनावहस्रोतोरोधात् वा इति पाठान्तरं सङ्गतम्।

मांसार्बुदश्चैव खण्डौष्ठश्च जलार्बुदम्।
दोषार्बुदश्चार्बुदश्च रोगा एकादश स्मृताः॥ १२२॥

तत्र दशदन्तरोगाणां विवरणम्।—

दन्तरोगा दशाख्याता दालनः कृमिदन्तकः।

कृत्वा बहवो भेदाः; तद्यथा—"कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्रानिलवेदनौ। दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः॥ चीयेते पिडकाभिश्च सरुजाभिः समन्ततः। सदाहपाकपिडकौ पीताभासौ च पित्ततः॥ सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ। भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू॥" (रो० वि० अ०४०) इति। त्रिदोषैरिति—मिलितदोषत्रयेण चतुर्थो भेदः; यदुक्तं—"सकृत् कृष्णौ सकृत् पीतौ सकृत् श्वेतौ तथैव च। सन्निपातेन विज्ञेयावनेकपिडकाचितौ॥" (सु० नि० १६अ०) इति। असृजा रक्तेन पञ्चमो भेदः, रक्तोपसृष्टत्वात्; यतः,—"खर्जूरफलवर्णाभिः पिडकाभिर्निपीडितौ। रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ॥" (सु० नि० १६अ०) इति। क्षतामिति—अभिघातजम्; तेन कथम्भूतौ? यथा—"ओष्ठौ प्रच्छिद्येते पाट्येते चाभिघाततः" (रो० वि० अ०४०) इति। ननु क्षतादेव दोषप्रकोपः स्यात्, तेन दोषान्तर्गत एवायं भेदः किमिति न पठितः? यतो भोजनोक्तत्वात् "क्षताभिहतौ वाऽपि रक्तोष्ठौ सवेदनौ। भवतः सपरिस्रावौ कफरक्तप्रदूषितौ॥" इति। उच्यते, वातादिकः केवलः स्वकारणकुपितः, अत्र तु अभिघातात् कुप्यते, तेनाभिघातनिदानत्वात् द्वयोर्भेद इत्यदोषः। मांसार्बुदमिति—अर्बुदाकारत्वान्मांसपिण्डवदुन्नतावोष्ठौ भवतः इति; यदुक्तं—"गुरू स्थूलौ मांसदुष्टौ मांसपिण्डवदुन्नतौ। जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात्॥" (रो० वि० अ०४०) इति। खण्डौष्ठ इति—"खण्डौष्ठः क्षतभेदः स्यात्" इत्यादिना अत्र खण्डितौष्ठकर्दमत्वाद्भिन्नः, कदाचिद्गर्भावक्रान्तिभावाद्वा भिन्नः; "तत्र खण्डौष्ठ इत्युक्तो वातेनौष्ठो द्विधा कृतः" (वा० उ० २१अ०)। जलार्बुदमिति—जलबुद्बुदाकारं जलार्बुदम्; यदुक्तं—"जलबुद्बुदवत् वात-कफादोष्ठे जलार्बुदम्" (वा० उ० २१अ०) इति। अवार्बुदद्वयमर्बुदवत् ज्ञातव्यम्। तत्र मेदोऽर्बुदो यथा—"सर्षपकल्कप्रतीकाशौ मेदसा कण्डुरौ गुरू। अच्छं स्फटिकसङ्काशमास्रावं स्रवतो भृशम्॥ तयोर्व्रणो न संरोहेन्मृदुत्वञ्च न गच्छति॥" (रो० वि० अ०४०) इति॥१२२।१२३॥

अथ दन्तरोगानाह, दन्तरोगा दशेत्यादि।—तत्र दालन इति—दाल्यमानेष्विव रुजा भवति इति दालनः, यदुक्तं—"दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते।

दन्तहर्षः करालश्च दन्तचालश्च शर्करा ॥
अधिदन्तः श्यावदन्तो दन्तभेदः कपालिका ॥ १

दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥" (रो० वि० दन्त०) इति। कृमिदन्तक इति—कृमिकृतच्छिद्रत्वेन वेदनाविशेषो यत्र भवति स कृमिदन्तकः, यदुक्तम्—"कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः। अनिमित्तरुजो वाताद् विज्ञेयः कृमिदन्तकः॥" (सु० नि० १६अ०) इति। दन्तहर्ष इति—दन्तहर्षः स्वनामतः प्रसिद्धः, तथा हि—"शीतरूक्षप्रवाताम्ल-स्पर्शानामसहा द्विजाः। पित्त-मारुतकोपेन दन्तहर्षः स नामतः॥" (रो० वि० दन्त०) इति। कराल इति—करालो विषमदन्तकः, विसदृशदन्त इत्यर्थः; यदुक्तम्—"शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः। करालान् विकटान् दन्तान् करालो न स सिध्यति॥" (रो० वि० दन्त०) इति। दन्तचाल इति—दन्तानां चालनः। * माधवेन तु हनुमोक्ष इति पठितः, तद्यथा—"वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः। हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥" (सु० नि० १६ अ०) इति। विसंहत इति—हनुसन्धिश्च्युतः किञ्चिच्चलितः; अत एव सुश्रुते दन्तदेशसामीप्याद्दन्तपीडनाश्रयः पठितः। शर्करेति—शर्करा वालुका तद्वद्दन्तरोगो भवति, यतः—"मलो दन्तगतो यस्तु कफमारुतशोषितः। शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा॥" (रो० वि० दन्त०) इति। एके "दन्तानां गुणहारो च" इति पठन्ति। अधिदन्त इति—अधिदन्तः अधिकदन्तः, खलिवर्द्धन इति संज्ञान्तरम्, यदुक्तम्—"मारुतेनाधिको दन्तो जायते तीव्रवेदनः। खलिवर्द्धनसंज्ञोऽसौ जाते रुक् च प्रशाम्यति॥" (रो० वि० दन्त०) इति। श्यावदन्त इति—नीलदन्त इति वा, यथोक्तम्—"असृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः। श्यावतां नीलतां वाऽपि गतः स श्यावदन्तकः॥" (सु० नि०

---

* माधवनिदाने हनुमोक्षलक्षणं न कुत्रापि दृश्यते, दृश्यते च वातव्याधौ हनुग्रहलक्षणमिति। लक्षणमिदं सुश्रुतस्य। उक्तञ्च मधुकोषकारेण—"अत्रावकाशे हनुमोक्षः सुश्रुते दन्तदेशसामीप्यात् दन्तपीडनादपि पठितः, स इह ग्रन्थकारेण मुखदन्तगतत्वाभावान्न पठितः, पठितस्तु हनुग्रहसंज्ञया वातव्याधौ भोजवचनात्, यदुक्तम्—वाताभिघातात् जृम्भाद्वा हनुसन्धिर्विमुच्यते। निरस्तजिह्वः कृच्छ्रेण भाषितं तेन गच्छति॥ सम्यक् तमिमं व्याधिं हनुमोक्षं विनिर्दिशेत्॥" इति।

तत्र वर्णोद्दिष्टदन्तमूलरोगाणां विवरणम् ।—

त्रयोदशमिता दन्तमूलामयाः स्मृताः ।
शीतादोपकुशौ द्वौ तु दन्तविद्रधिपुप्पुटौ ॥ १२५ ॥
अधिमांसो विदर्भश्च महाशुषिरशौषिरौ ।

१६ अ० ) इति । दन्तभेद इति—दन्तभेदो भञ्जनकसंज्ञान्तरं, तीव्ररुजाकरत्वात् ; यतः,—"वक्त्रं वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक् । कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥" ( सु० नि० १६ अ० ) इति । कपालिकेति—* मलसञ्चितदन्तावयवेषु काठिन्यात् कपालतुल्येषु दीर्य्यत्सु दन्तमूलेष्विव शर्करैव कपालिका कथिता ; तथा हि—"कपालेष्विव दीर्य्यत्सु दन्तानां सैव शर्करा । कपालिकेति विज्ञेया सदा दन्तविनाशनी ॥" ( वा० वि० दन्त० ) इति ॥१२४॥

त्रयेति ।—मुखरोगाधिष्ठितत्वात् दन्तमूलगतरोगास्त्रयोदशसङ्ख्यया प्रोक्ताः । तत्र शीतादोपकुशाविति ।—शीताद इति—अभिघातादिनिमित्तं विना दन्तमांसशीर्णतादिभावेनोपलक्षितः ; तथा हि—"शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते । दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् । शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥" ( सु० नि० १६ अ० ) इति । उपकुश इति—उपकुशो दाहपाकयुक्तवेष्टः ; यथा—"वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च । यस्मिन् सोपकुशो नाम पित्तरक्तकृतो गदः ॥" ( वा० वि० दन्तवेष्ट० ) इति । दन्तविद्रधिरिति—"दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः । सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥" ( वा० उ० २१ अ० ) इति । पुप्पुट इति—दन्तपुप्पुटसंज्ञः, यतः,—"दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान् । दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥" ( वा० वि० दन्त० ) इति । अधिमांस इति—"हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः । लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥" ( सु० नि० १६ अ० ) इति । विदर्भ इति—विदर्भोऽभिघातज इत्युक्तत्वात् "घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् । भवन्ति च चला दन्ताः स विदर्भोऽभिघातजः ॥" ( सु० नि० १६ अ० ) इति । महाशुषिर इति—महाशौषिर इति संज्ञान्तरम्, यथा—"दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ।

* "मलसञ्चित" इत्यादि "दन्तमूलेष्विव" इत्यन्तस्थले "दन्तमलं एव काठिन्ये कपालप्राये दीर्य्यमाणे दन्तशर्करैव" इति पाठकल्पन सङ्गतम् ।

तेष्वेव गतयः पञ्च वातात् पित्तात् कफादपि ॥
सन्निपाताद्गतिश्चान्या रक्तनाडी च पञ्चमी ॥ १

अथ षड्जिह्वारोगाणां विवरणम्।—

तथा जिह्वामयाः षट् स्युर्वातपित्तकफैस्त्रिधा।
अलासश्च चतुर्थः स्यादधिजिह्वा च पञ्चमी ॥
षष्ठी चैवोपजिह्वा स्यात्—" ॥ १३७ ॥

यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञकः ॥" ( रो० वि० दन्तवेष्ट० ) इति। सर्वज इति—त्रिदोषजत्वेन मारणात्मको ज्ञेयः, यदुक्तं भोजे—"सदाहो दन्तमूलेषु शोथः पित्तकफानिलात्। जातः क्षपयति क्षिप्रं तस्मिंस्तु शोणितम् ॥ प्रहृष्टमनिशं दन्ताश्चाल्पोऽल्पमपि दारयेत्। महाशौषिर इत्येष समग्राग्निहन्त्यसून् ॥" इति। शौषिर इति प्रसिद्धः, यथा—"श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः। लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥" ( रो० वि० दन्तवेष्ट० ) इति। तेषु वक्ष्यादशविधेषु दन्तमूलगतेषु पञ्च गतयः पञ्च नाड्यो दोषादिभेदेन ज्ञातव्याः; यदुक्तं—"दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः" ( सु० नि० १६ अ० ) इति। नाडीव्रणनिदानोक्तलक्षणैः दन्तगतनाड्यः ज्ञेयाः। अत्र वातपित्तकफसन्निपातानान्तु निमित्तता। आगन्तुरभिघातजः तेनापि रक्तस्य प्रादुर्भावादत्र रक्तनाडी गणिता इति न दोषः ॥ १३५।१३६ ॥

तथा जिह्वामयाः षट् स्युरित्यादि।—तत्र वातात् शाकच्छदनप्रकाशा भवति, पित्तात् पीता च भवति, कफात् गुर्वी भवतीति; तथा हि—"जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च ॥ कफेन गुर्वी बहुला चिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ॥" ( सु० नि० १६ अ० ) इति। अलासः जिह्वागतशोथेनोपलक्षित इति; यदुक्तं—"जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ॥" ( सु० नि० १६ अ० ) इति। अधिजिह्वेति—जिह्वोपरि जातो यः श्वयथुस्तेनाधिजिह्वा कथिता; यतः,—"जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वोपरिष्टादपि रक्तमिश्रात्। ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥" ( रो० वि० कण्ठ० ) इति। उपजिह्वा चेति—जिह्वाया अग्रसदृशो जिह्वातलजातो यः शोथस्तेनोपलक्षितोपजिह्वा चेति; यदुक्तं—"जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तमूलः। लालाकरः कण्डुयुतः सचोषः सा तूपजिह्वा पठिता भिषग्भिः ॥" ( रो० वि० कण्ठ० ) इति ॥ १३७ ॥

तत्राष्टतालुरोगाणां विवरणम्।—

"—तथाऽष्टौ तालुजा गदाः।
अर्बुदं तालुपिड़का कच्छपो तालुसंहतिः॥
गलशुण्डी तालुशोषस्तालुपाकश्च पुप्पुटः॥ १३८॥

तत्राष्टादशगलरोगाणां विवरणम्।—

गलरोगास्तथाऽऽख्याता अष्टादशमिता बुधैः।

---

तदर्थ।—मुखरोगसङ्ख्याकरणत्वात् अष्टौ भेदा यथा अर्बुदमित्यादि। अर्बुदमिति—ताल्वर्बुदसंज्ञः, तथा च—"पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम्॥" (सु० नि० १६ अ०) इति। प्रोक्तलिङ्गमित्यत्र पूर्वोक्ताद्रक्तार्बुदादल्पलक्षणमित्यर्थः। भोजे तत्र श्लेष्मरक्तोद्भवमिति; तथा हि—"उपर्य्येव भवेद्वृद्धो यथा पद्मस्य कर्णिका। पार्श्वतश्चाङ्कुरैर्दीर्घैर्नासा चाप्यवसीदति॥ श्लेष्मरक्तसमुत्थानं तत्ताल्वर्बुदसंज्ञितम्॥" इति। तालुपिडकेति—तालुदेशे शोथकारत्वेन पिडका भवन्ति। तन्त्रान्तरे अध्रुष इति नामान्तरम्, तद्यथा—"शोथः स्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः॥" (सु० नि० १६ अ०) इति। कच्छपीति—कच्छपोन्नतपिडका तालुनि भवति, सा कच्छपीशब्दवाच्या; तदुक्तं—"कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणा च" (रो० वि० तालु०) इति। तालुसंहतिरिति—तालुसंहतमांससङ्घातेन कथितः; तथा हि—"दुष्टं मांसं नीरजं तालुमध्ये कफात् स्थूलं मांससङ्घातमाहुः॥" इति। गलशुण्डीति—वातपूरितचर्मपुटकतुल्यशोथो गलशुण्डीशब्दवाच्यः। गलशब्दत्वेन कण्ठशुण्डीति केचित्; यदुक्तं—"श्लेष्मासृग्भ्यां तालुमूले प्रवृद्धो दीर्घः शोथो ध्मातबस्तिप्रकाशः। तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना"॥ (रो० वि० तालु०) इति। तालुशोष इति—तालुशोषनामा व्याधिः, तद्यथा—"शोषोऽत्यर्थं दीर्य्यते चापि तालुः श्वासश्चोग्रस्तालुशोषोऽनिलाच्च" (रो० वि० तालु०) इति। "गलशुण्डी तालुशोष." इत्यत्र "तालुशोषस्तु पित्तात्" इति केचित् पठन्ति, पित्तस्यापि शोषकत्वात्। किन्तु अयं भोजेऽपि वातादेव पठितः; यथा—"तालुशोषो भवेद्वातात् व्याधिर्यः श्वाससंयुतः" इति। तालुपाक इति—तालुनि पित्तमेवात्यर्थं पाकं करोति; यदुक्तं—"पित्तं कुर्य्यात पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति" (सु० नि० १६ अ०) इति। पुप्पुट इति—तालुपुप्पुटः कथितः; तालुशब्दोऽत्र लुप्तोनिर्दिष्टो द्रष्टव्यः; यदुक्तं—"नीरुक् स्थायी कोलमात्रः कफात् स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे॥" (सु० नि० १६ अ०) इति॥ १३८॥

वातरोहिणिका पूर्वं द्वितीया पित्तरोहिणी ॥ १३९ ॥
कफरोहिणिका प्रोक्ता त्रिदोषैरपि रोहिणी।
मेदोरोहिणिका वृन्दो गलौघो गलविद्रधिः ॥ १४० ॥

गलरोगा इत्यादि।—गलोपलक्षितत्वेन कण्ठरोगप्रतीतिः। तत्र पञ्चानां रोहिणीनां सामान्यलक्षणं कण्ठाधः पलाङ्कुराः सम्भवन्तीत्यादिना दर्शितम्; यथा—"गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसञ्च तथैव शोणितम्। प्रकुर्वते कण्ठरुनः पलाङ्कुरान् निहन्त्यसून् व्याधिरियं हि रोहिणी॥" इति। यद्यपि सर्वा रोहिणी सन्निपातजा तथाऽप्युत्कर्षादिभेदेन वातजादिव्यपदेशः, व्यस्तलक्षणत्वाच्च; तद्यथा—"जिह्वां समन्तादृभृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः। तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रवगाढजुष्टाम्॥" (सु० नि० १६ अ०) इति। पित्तरोहिणीति—पित्तजाता रोहिणी शीघ्रोत्थानत्वेन दर्शिता; यतः,—"क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजा तु" (रो० वि० कण्ठ०) इति। कफरोहिणिकेति—कण्ठादिरोधकत्वाच्चिरपाका कफरोहिणीति; यदुक्तं—"स्रोतोनिरोधिन्यपि मन्दपाका गुर्वी स्थिरा सा कफसम्भवा च" (सु० नि० १६ अ०) इति। त्रिदोषैरपि रोहिणीति—मिलितदोषत्रयेण भवति सन्निपातजेत्यर्थः; उक्तं हि—"गम्भीरपाकिन्यनिवार्य्यवीर्य्या त्रिदोषलिङ्गा त्रितयोत्थिता च" (रो० वि० कण्ठ०) इति। मेदोरोहिणिकेति—दुष्टमेदोजनितरोहिणीति। एके मेदःस्थाने रक्ता रोहिणिकेति पठन्ति सर्वत्र प्रतिपादितत्वात्; तथा हि—"स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु" (रो० वि० कण्ठ०) इति। इतररोहिण्यपेक्षयाऽस्या सुखसाध्यत्वमुक्तम। वृन्द इति—वृत्तः समुन्नतः शोथकरः यः कण्ठे वृन्दरोगः कथितः; तथा हि—"समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति। तच्चापि पित्तक्षतजप्रकोपाज्ज्ञेयं सतोदं पवनात्मकञ्च॥" (रो० वि० कण्ठ०) इति। गलौघ इति—कण्ठावरोधात् गलौघसंज्ञः, स च शोथोऽन्नजलावरोधी कथितः; तथा हि—"शोथो महानन्नजलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता। कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्तितोऽसौ" (सु० नि० १६अ०) इति। (वायुगतेर्निहन्ता इति—अतिमहत्त्वादुदानवायोर्गतिनिरोधक इत्यर्थः)। गलविद्रधिरिति—विद्रधिवत् गले शोथो गलविद्रधिशब्दवाच्यः; यतः,—"सर्वं गलं व्याप्य समुत्थितो यः शोथो रुजो यत्र च सन्ति सर्वाः। स सर्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य॥" (सु० नि० १६ अ०)

स्वरघ्ना तुण्डिकेरी च शतघ्नी तालुकोऽर्बुदम् ।
गिलायुर्वलयश्चापि वाताद्गण्डः कफात्तथा ॥
मेदोगण्डस्तथैव स्यादित्यष्टादश कण्ठजाः ॥ १४१ ॥

इति । यद्यप्ययं स्थानप्रभावेण सन्निपातज एव, तथाऽपि चिकित्साभेदार्थं नामान्तरेण पुनरत्र ग्रहणं न दोषः । स्वरघ्नेति—स्वरनाशकत्वेन स्वरघ्ना नाम गलरोगः कथितः ; यदुक्तं—"यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः । कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥" ( रो० वि० कण्ठ० ) इति । ( श्वसनादिति—वातात् ) । तुण्डिकेरीति—तुण्डिकेरी वनकार्पासीफलं तत्सदृशीत्वतया तुण्डिकेरी कथिता । तन्त्रान्तरे * कण्ठशालूकेति नाम्ना सा प्रतिपादिता ; यतः,—"कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः । खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति ॥" ( सु० नि० १६ अ०) इति । शतघ्नी चेति—शतघ्नी पाषाणशिला, तत्तुल्यो रोगः शतघ्नीशब्दवाच्यः, "अथ कण्टकसङ्कुला शतघ्नी महती शिला" इत्यादिवचनात् ; तदाकारत्वात् अत्रापि मांसप्ररोहोपलक्षिता शतघ्नीति ; यदुक्तं—"वर्त्तिर्घना कण्ठनिरोधिनी या चिताऽतिमात्रं पिशितप्ररोहैः । नानारुजोच्छ्रायकरी त्रिदोषात् ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥" (सु० नि० १६ अ०) इति । † तालुक इति—तालुकोऽन्यत्र गलरोगे विदारिकेति नाम्ना पठितः, वदनसम्बन्धत्वादव तालुकव्यपदेशः , तद्यथा—"सदाहतोदं श्वयथुं सुरक्तमन्तर्गले पूतिविशीर्णमांसम् । पित्तेन विद्यात् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते ॥" (सु० नि० १६ अ० ) इति । अर्बुदमिति—अर्बुदाकारपिडका गले भवति इत्यर्बुदरोगः ; अयमेव ‡ मांसतान इत्यन्यत्र प्रतिपादितः ; यतः,—"प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण । स मांसतानः कथितोऽवलम्बी प्राणप्रणुत् सर्वकृतो विकारः ॥" (सु० नि० १६ अ० ) इति । एकेऽर्बुदमेवैकवृन्देति नाम्ना प्रतिपादयन्ति अपाक्यमद्दशीयत्वात् ; यतः,—"वृत्तोन्नतोऽन्तःश्वयथुः

* सुश्रुत माधवाभ्यां तुण्डिकेरी तालुगतमुखरोगाधिकारे कण्ठशालूकश्च कण्ठगतमुखरोगाधिकारे पृथक् पृथक् लक्षणनिर्देशेन पठितम् ।

† तालुक इत्यत्र शालूक इति ग्रन्थान्तरीयः पाठः समीचीनतया प्रतिभाति । शालूक-विदारिकयोर्लक्षणमपि सुश्रुतादिभिः भिन्नतया पठितम् ।

‡ वाग्भटे अर्बुदं कफजमिति पठितम्, अत्र मांसतानश्च त्रिदोषजः असाध्यश्च इति अर्बुद-मांसतानयोरभेदोक्तिः चिन्त्या ।

तत्राष्टमर्वसरमुखरोगाणां विवरणम्।—

मुखान्त:सम्भवा रोगा अष्टौ ख्याता महर्षिभि:।
मुखपाको भवेद्वातात् पित्तात्तद्वत् कफादपि ॥ १४२ ॥
रक्ताच्च सन्निपाताच्च पूत्यास्योर्द्धगुदावपि।
अर्बुदश्चेति मुखजाश्चतु:सप्ततिरामया: ॥ १४३ ॥

सदाह: तनुर्गुरोऽपाकस्तुर्गुरुश्च। नाम्नैकवन्द्र परिकीर्त्तितोऽसौ व्याधिर्बलाशबलज-प्रसूत: ॥" (रो० वि० कण्ठ०) इति। गिलायुरिति—आमलकास्थिमात्रो यो गले ग्रन्थि: स गिलायुशब्दवाच्यो रोग:; तथा हि—"ग्रन्थिर्गले त्वामलकास्थिमात्र: स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्ति:। संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञ: ॥" (सु० नि० १६ अ०) इति। वलय इति—वलयो गलरोगविशेष:; यथा—"बलास एवायतमुन्नतञ्च शोथं करोत्यन्नगतिं निवार्य। तं सर्वथैवाप्रतिवार्य्य-वीर्य्यं विवर्जनीयं वलयं वदन्ति ॥" (सु० नि० १६ अ०) इति। अथ गलरोगेषु त्रिधा गण्डानाह—एको वातगण्ड:, कफात् तथेति—कफगण्ड:, तथैव मेदोगण्ड इति। गलस्थानत्वादेव गलगण्डत्रयमुक्तम्, अन्यत्र गण्डमालाया गलगण्ड: पठित:, तत्र भिन्नचिकित्साविषयत्वात्; शार्ङ्गधराचार्य्येण नामसङ्ग्रहादेव गृहीत:, न तु गण्ड-मालागणनायाम् इत्यदोष:। एतेषां रूपन्तु तन्त्रान्तरात् बोद्धव्यम् इति ॥१३९—१४१॥

मुखान्त:सम्भवा रोगा इति।—यद्यपि मुखान्तर्भवरोगा दन्तजिह्वादिगता: कथिता:, तथाऽपि मुखदन्तोष्ठादिसमस्थानानां युगपत् व्यापकतया मुखपाकसंज्ञो रोग: प्रतीत:; अत एव तन्त्रान्तरे सर्वसर इति संज्ञयाऽभिहित:। सर्वमुखेषु सरतीति सर्वसर:, यदुक्तं—"स्फोटै: सतोदैर्वदनं समन्तात् यस्याचितं सर्वसर: स वातात्। रक्तै: सदाहै स्तनुभि: सपीतैर्यस्याचितञ्चापि स पित्तकोपात् ॥ अवेदनै: कण्डुयुतै: सवर्णै-र्यस्याचितं चापि स वै कफेन ॥" (रो० वि० सर्वसर०) केचिद्विदेहोक्तं रक्तजसर्वसर-लक्षणं पठन्ति, यथा—"रक्तेन पित्तोदित एक एव कैश्चित् प्रदिष्टो मुखपाकसंज्ञ:" (सु० नि० १६ अ०) इति। सन्निपाताच्चेति—मिलितदोषवर्गेण पञ्चमो मुख-पाकभेद:; पाकत्वे विकृतिविषमसमवायारब्धलिङ्गत्वात् स सान्निपातजो व्यपदेश:, यत:,—"वाताहृते नास्ति रुजा न पाक: पित्ताहृते नास्ति कफाच्च पूय:।" (सु० नि० १६ अ०) "तस्माद्धि सर्वे परिपाककाले पचन्ति शोफास्त्रिभिरेव दोषै: ॥" (रो० वि० व्रण०) इति। पूत्यास्य इति—दुर्गन्धास्य: प्रसिद्ध:। * ऊर्द्धगद इति—मुखरोग-

* वाग्भटे ग्रन्थान्तरे च "ऊर्द्धगद:" इति पाठ:, स एव साधु:।

अष्टादशकर्णरोगाणां विवरणम्।—

कर्णरोगाः समाख्याता अष्टादशमिता बुधैः।
वातात् पित्तात् कफात् रक्तात् सन्निपाताच्च विद्रधिः ॥१४४॥
शोथोऽर्बुदं पूतिकर्णः कर्णार्शः कर्णहल्लिका।

---

विशेषः, सर्वथाशोथमांसत्वेनाभ्यन्तरगुहाकारवत्, वेलोष्ठगुदाकारत्वेन सप्तमो भेदोऽत्र दर्शितो न दोषः, अन्यत्र पित्तजान्तर्गत एव। अर्बुदमिति—अर्बुदवत् मुखरोगः, अर्बुदस्य सर्वगतत्वादत्रैवान्तर्भवतीति न दोषः, तदाकारविषयकत्वेनाष्टमः प्रतिपादितः। तन्त्रान्तरे कफजेऽन्तर्गतं दर्शितम्। इति कथितप्रकारेण मुखजा आमयाः रोगाः चतुःसप्ततिः कथिता इत्यर्थः, सप्तसु स्थानेष्विति शेषः ॥ १४२।१४३ ॥

कर्णरोगा इति।—कर्णान्तरधिकृत्योत्पन्नाः, तत्र कर्णशष्कुल्यवच्छिन्नमदृष्टोपगृहीतं श्रोत्रमुच्यते। तत्र यद्यप्येकदेशगतो रोगस्तथाऽप्यवयवेऽपि समुदायोपचारात् कर्णव्यपदेशः। अष्टादशमिता बुधैरिति।—बुधैरिति—प्रवीणैः, येन सर्वतन्त्रेभ्यः संविचार्य सङ्ग्रहः कृतः; अत एवात्र चरकोक्तकर्णरोगचतुष्टयं दोषभेदेन तेष्वादौ कथितम्; तद्यथा—"नादोऽतिरुक् कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात्। शोथः सरागो दरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात् ॥ वैश्रुत्यकण्डूस्थिरशोथशुक्लस्निग्धस्रुतिः श्लेष्मभवेऽल्परुक् च। सर्वाणि रूपाणि च सन्निपातात स्रावश्च तत्राधिकदोषवर्णः ॥" (च० चि० त्रिमर्मीय०) इति। रक्तजस्य पित्तजेऽन्तर्भावः इति तन्त्रान्तरे; अत्र तु गणनाकृतत्वात् पृथक् पठितः। विद्रधिरिति—कर्णविद्रधिः, स द्विविधः, एकोऽभिघातजः अपरो दोषजश्च; यदुक्तं—"क्षताभिघातप्रभवस्तु विद्रधिर्भवेत् तथा दोषकृतोऽपरः पुनः। सरक्तपीतारुणमस्रमास्रवेत् प्रतोदधूमायनदाहचोषवान् ॥" (सु० उ० २०अ०) इति। अत्र तु आगन्तुकेन दोषप्रकोपत्वादेक एव व्यपदेशः। शोथ इति—कर्णशोथः। कर्णशोथार्बुदार्शसां लक्षणं पूर्वोक्तलक्षणैर्जानीयात्; यदुक्तं—"कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः" (रो० वि० कर्ण०) इति। तत्र * कर्णशोथाश्चत्वारः वातपित्तकफरक्तजत्वेन। एवं कर्णार्शश्चतुर्विधं वातपित्तकफसन्निपातभेदेन। कर्णार्बुदाः सप्तधा वातपित्तकफमांसमेदोरक्तसन्निपातभेदात्। शालाक्यसिद्धान्तेन सन्निपातजमधिकम् एवं सप्तार्बुदम्; यतः सुश्रुतोक्ता अष्टाविंशतिकर्णगतरोगास्तेनात्र लिखिता न दोषः। पूतिकर्ण इति—पूति पूयं स्रवतीति

* "कर्णशोथाश्चत्वारः वातपित्तकफरक्तजत्वेन। एवमर्शश्चतुर्विधम्; सहज-

बाधिर्य्यं तन्त्रिका कण्डुः शष्कुली कृमिकर्णकः॥

पूतिकर्णकः; यदुक्तं—"पूयं स्रवति यः पूति स ज्ञेयः पूतिकर्णकः" (रो० वि० कर्ण०) इति। कर्णकृमिकेति—कर्णप्रविष्टपतङ्गादिकीटत्वात् कथितः; तद्यथा —"पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि। अरतिं व्याकुलत्वञ्च भृशं कुर्वन्ति वेदनाम्॥ कर्णौ निस्तुद्यते तस्य तथा फरफरायते। कीटे चरति रुक् तीव्रा निष्पन्दे मन्दवेदना॥" (रो० वि० कर्ण०) इति। बाधिर्य्यमिति—बधिरता प्रसिद्धा; तद्यथा—"यदा शब्दवह स्रोतो वायुरावृत्य तिष्ठति। शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्य्यं तेन जायते॥" (सु० नि० १घ०) इति। * तन्त्रिकेति—तन्त्रिकाजन्यशब्दवद्रोगस्तन्त्रिकारोगः; अन्यत्र कर्णक्ष्वेड इति संज्ञयाऽभिहितः; यदुक्तं—"वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम्। करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते॥" (रो० वि० कर्ण०) इति। कण्डुरिति—कण्डुरप्यन्यत्र † कर्ण-गूथशब्दवाच्यः; यतः,—"मारुतः कफसंयुक्तः कर्णकण्डूं करोति च" (रो० वि० कर्ण०) "पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः" इति। यद्यपि कण्डुः कर्णगूथश्च पृथङ्निर्दिष्टः, तथाऽप्यत्र श्लेष्मशोषकत्वादपि कण्ड्वादीनां सम्भव इत्यदोषः (?)।

सान्निपातजाश्चेति: सन्निपातागन्तुजशोथर्शोऽर्शोबोमर्ब्बुदानां सन्निपातसम्भवात्। अर्बुदस्य सप्तविधं वातपित्तकफरक्तमांसमेदःशिरोग्रन्थिभेदात्। शिराजस्य वातजादिकडुत्वाद पृथक् गणनं शालाक्यसिद्धान्तसंवादादिति कार्त्तिकः। यथा सुश्रुत एव कर्ण-रोगानन्तरं, दोषैस्त्रिभिः, पृथगेकशश्च त्वयाऽप्यथाऽर्शांसि तथैव शोथान्। शालाक्य-सिद्धान्तमवेत्य चापि सर्वात्मकं सप्तममर्बुदन्तु॥ इति नासारोगेऽभिधास्यति, तथा इहापि युज्यते, तेन रक्तजस्य पित्तसमानलिङ्गत्वात् पित्तजेऽन्तर्भावः, तथा आगन्तुजस्यापि रक्तपित्तलिङ्गत्वात् पित्तज एवान्तर्भावः, तेन शाथः सन्निपातजो-ऽथागण्णनीयः, एवं सहज-रक्तजयोः दोषज एवान्तर्भावात् सान्निपातजमर्शः अपृथक् गणनीयम्। अर्बुदञ्च सान्निपातजं सप्तमामिति, एवमेभिः सहाष्टाविंशतिः सुश्रुतोक्ताः कर्णरोगा भवन्ति" इति मधुकोषे श्रीकण्ठः।

* तन्त्रिका वाग्भटे पालीगतरोगे उक्ता, तथा च—"कृशा दृढा च तन्त्रीवत् पाली वातेन तन्त्रिका" (वा० उ० १७ अ०)।

† कर्णगूथग्रन्थान्तरे न दृश्यते, सुश्रुते कर्णगूथकः अस्ति; "पित्तोष्मशोषित." इत्यादिलक्षणन्तु कर्णगूथकस्य माधवेन पठितं, तत्र च "पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम्" इति पाठः। कर्णकण्डुः कर्णगूथकात् भिन्नलक्षणा एवेति बोद्धव्यम्।

कर्णनादः प्रतीनाह इत्यष्टादश कर्णजाः॥ १४५॥

शष्कुलीति—* शष्कुली चात्रोपलक्षणं, तेन तद्गतविकृतदोषत्वात् कर्णस्रावत्वेन सर्वत्र कर्णस्राव इति संज्ञयाऽभिहिता; तद्यथा—"शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथवाऽपि विद्रधेः। स्रवेद्धि पूयं श्रवणोऽनिलार्दितः स कर्णसंस्राव इति प्रकीर्त्तितः॥" (रो० वि० कर्ण०) इति। एके शष्कुलीत्यनेन कर्णगूथमेव मन्यन्ते, तत् पूर्व्वाचार्य्यैरपठितत्वादस्माभिरपि न पठितः। कृमिकर्णक इति—कर्णकृमिकरोगः कृमिकर्णशब्दवाच्यः, यदुक्तं—"यदा तु मूर्च्छन्त्यथवाऽपि जन्तवः सृजन्त्यपत्यान्यथवाऽपि मक्षिकाः। तदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः कृमिकर्णको गदः॥" (रो० वि० कर्ण०) इति। कृमिलक्षणत्वात् (?) अयं विकारस्त्रिदोषजो ज्ञेयः; तथा च—"श्लेष्मपित्तनलोन्मिश्रे कोथे शोणितमांसजे। जायन्ते जन्तवस्तत्र कृष्णाः श्वेताः सितारुणाः॥ भक्षयन्तीव ते कर्णौ कुर्व्वन्तो विविधा रुजः। कृमिकर्णौ विजानीयात् सन्निपातप्रकोपजम्॥" (निमि०) इति। कर्णनाद इति—यत्र विविधस्वनान् शृणोति स कर्णनादः इति गदविशेषः कथितः; यथा—"कर्णस्रोतःस्थिते वाते शृणोति विविधान् स्वनान्। भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते॥" (रो० वि० कर्ण०) इति। न केवलं भेर्य्यादिस्वनम्, अन्येषामपि, अन्यत्र प्रतिपादितत्वात्; यदुक्तं विदेहे—"शिरोगतो यदा वायुः श्रोत्रयोः प्रतिपद्यते। तदा तु विविधान् शब्दान् समीरयति कर्णयोः॥ भृङ्गारक्रौञ्चनादं वा मण्डूककाकयोस्तथा। तन्त्रीमृदङ्गशब्दं वा सामतूर्य्यस्वनं तथा॥ गीताध्ययनवंशानां निर्घोषं क्ष्वेडमेव वा। अपामिव पतन्तीनां शकटस्येव गच्छतः॥ श्वसतामिव सर्पाणां सदृशः श्रूयते स्वनः॥" इति। ननु कर्णनादकर्णक्ष्वेडयोर्व्वातकृतरूपत्वात् को भेदः? उच्यते,—कर्णनादे केवलानिलजे नानाशब्दान् शृणोति, कर्णक्ष्वेडे तु वेणुशब्दमेवेति नियमात् पित्तादिसंसृष्टवातजन्यत्वाच्चेत्यदोषः। प्रतीनाह इति—यदा द्रवगूथो मुखघ्राणविवरेषु प्रतिपद्यते, तेन चार्द्धावभेदको भवति, स कर्णप्रतीनाहसंज्ञको रोगः कथितः; तथा हि—"स

---

* "शष्कुली चात्रोपलक्षणम्" इत्यादि यदुक्तं, तन्न हृद्यं, शष्कुलीशब्देन शष्कुलीगतत्वात् कर्णस्रावे लब्धे अन्येषामपि शष्कुलीगतरोगाणां लाभसम्भवात्। मन्ये शष्कुलीशब्देन वाग्भटोक्तविदारिका लभ्यते; तथा च—"सन्निपातात् विदारिका। सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः॥ कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति। सङ्कोचयति रूढ़ा च सा ध्रुवं कर्णशष्कुलीम्॥" (वा० उ० १७अ०) इति।

सप्तकर्णपालीगतरोगाणां विवरणम्।—

कर्णपालीसमुद्भूता रोगाः सप्त इहोदिताः।
उत्पातः पालिशोषश्च विदारो दुःखवर्द्धनः॥
परिपाटश्च लेही च पिप्पली चेति संस्मृता॥ १४६॥

---

कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते। तदा स कर्णप्रतिनाह-संज्ञको भवेद्विकारः शिरसोऽर्द्धभेदकृत्॥" (रो० वि० कर्ण०) इति। अयमेव विदेहे दोषोत्कर्षादिभेदेन पठितः; यदुक्तं—"कफाद्वा मारुताद्वाऽपि सन्निपातेन वा पुनः" इति॥ १४४। १४५॥

कर्णपालीति।—कर्णावयवत्वात् कर्णपाल्याः तद्विकृतरोगाः। कर्णपालीसमुद्भूता इति—कर्णव्यधस्थानोद्भूता इत्यर्थः। ते उत्पातप्रभृतयः; तद्यथा—"गुर्वाभरण-संयोगात्ताडनात् घर्षणादपि। शोथः पाल्यां भवेच्छ्यावो दाहपाकरुजान्वितः॥ रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः॥" (रो० वि० कर्ण०) इति। पालिशोषश्चेति—कर्णपालीशोषणात् शोषः विकृतानिलत्वात्। * विदारीति—विदारीव विदारीरोगः पाल्यां भवति, स प्रसिद्ध एव। दुःखवर्द्धनत्वात् दुःखवर्द्धन इति; तथा हि—"संवर्द्धमाने दुर्विद्धे कण्डूदाहरुजान्वितः। शोथो भवति पाकश्च विदोषो दुःखवर्द्धनः॥" (रो० वि० कर्ण०) इति। परिपोटश्चेति—परिपोटवत् † परिपोटः; यदुक्तं—"सौकुमार्य्याच्चिरोत्सृष्टे सहसाऽतिप्रवर्द्धिते। कर्णे शोथो भवेत् पाल्यां सरुजः परिपोटवान्॥ कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः॥" (रो० वि० कर्ण०) इति। लेही चेति—मांसलेहनाल्लेही रोगः, निर्मांसकारीत्यभिप्रायः; अत एव तन्त्रान्तरे परिलेहीशब्दवाच्यः; यदुक्तं—"कफासृक्कृमयः क्षुद्राः सर्षपाभा विसर्पिणः। कुर्वन्ति पिडकाः पाल्यां कण्डू-दाहरुजान्विताः॥ कफासृक्कृमिसम्भूतः स विसर्पन्नितस्ततः। लिहेत् सशष्कुलीं पालीं परिलेहीति स स्मृतः॥" (रो० वि० कर्ण० इति। पिप्पली चेति—पाल्यां शोथः पिप्पलीशब्दवाच्यः। तन्त्रान्तरे ‡ अयमेवोन्मन्थकः; तद्यथा—"कर्णं

* विदारी वक्ष्यमाणा पिप्पली च वाग्भटे कर्णस्रोतोगतरोगत्वेनोक्ते।

† परिपोटः मनाक् त्वगवदारणम्।

‡ वाग्भटोक्तपिप्पल्या सह उन्मन्थकस्य किमपि सादृश्यं नास्ति; पिप्पली

पञ्चकर्णमूलगतरोगाणां विवरणम् ।—

कर्णमूलामयाः पञ्च वातात् पित्तात् कफादपि ।
सन्निपाताच्च रक्ताच्च—"		॥ १४७ ॥

अष्टादशनासारोगाणां विवरणम् ।—

"—तथा नासाभवा गदाः ।
अष्टादश समाख्याताः प्रतिश्यायास्तु तेष्वपि ॥ १४८ ॥
वातात् पित्तात् कफाद्रक्तात् सन्निपातेन पञ्चधा ।

---

बलाद्धर्षयतः पाल्या वायुः प्रकुप्यति । कफं सङ्गृह्य कुरुते शोथं स्तम्भवेदनम् ॥ उन्मन्थकः सकण्डूको विकारः कफवातजः ॥" (रो० वि० कर्ण०) इति ॥१४६॥

कर्णमूलामयानाह, कर्णमूलामयाः पञ्चेत्यादि ।—कर्णमूलरोगः सन्निपातज्वरे उपद्रवरूपत्वेन दर्शितः, स च पिडकाकृतिः ; तद्यथा—"सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः । शोथः सञ्जायते तेन कश्चिदेव विमुच्यते ॥" ( च० चि० ज्वर० ) इति । वातादीनामुत्कर्षादिभेदेन पञ्च भेदा ज्ञेयाः । कर्णमूलसम्बन्धादेव कर्णरोगगणनाया पठितो न दोषः ॥१४७॥

तथा नासाभवा गदा इत्यादि ।—तथेति—इन्द्रियाधिष्ठितरोगगणनासम्बन्धात् नासाभवा रोगा अष्टादश समाख्याताः । तेष्वादौ पञ्चधा प्रतिश्यायमाह, तदुक्तं चरके—"घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा । मारुताध्मातशिरसो मारुतं श्यायते प्रति ॥" ( च० चि० राजयक्ष्म० ) इति । पञ्चधेति—पञ्चप्रकारः, स तु वातादिदोषभेदेन भवति । तेषां केषाञ्चित् ज्ञापनार्थं लक्षणान्याह ; यदुक्तम्—"आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी । गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोरपि ॥ स्वरप्रस्निरत्यर्थं वक्त्रवैरस्यमेव च । भवेत् स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥" ( सु० उ० २४ अ० ) इति । पित्तजमाह—"उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके । कृशोऽतिपाण्डुः सन्तप्तो भवेत्तृष्णाभिपीडितः ॥ सधूममग्निं सहसा वमतीव स मानवः ॥" ( सु० उ० २४ अ० ) इति । कफजमाह—"घ्राणात् कफकृते शीतः कफः पाण्डुः स्रवेद्बहुः । शुक्लावभासः शुक्लाक्षो भवेद्गुरुशिरा नरः ॥ कण्ठताल्वोष्ठशिरसां कण्डूभिरभिपीडितः ॥" ( रो० वि० नासा० ) इति ।

---

स्रोतोगतः रोगः, लक्षणमपि तस्य अर्थ्यविषम ; तथा च—"एको नोऽनेको वा गर्भे मांसाङ्कुरः स्थिरः । पिप्पली पिप्पलीमानः ॥" ( वा० उ० १०अ० ) इति ।

**अपीनसः पूतिनासो नासार्शो भ्रंशथुः स्रवः ॥ १४८ ॥**

रक्तजमाह—'रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते। ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः॥ दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः॥" (सु० उ० २४ अ०) इति। अत्र पित्तप्रतिश्यायलिङ्गान्यपि बोद्धव्यानि, तुल्यत्वात् पित्तरक्तयोः; यदुक्तं—"पित्तप्रतिश्यायकृतैर्लिङ्गैश्चापि समन्वितः" इति। सन्निपातजमाह—"भूत्वा भूत्वा प्रतिश्यायो यस्याकस्मान्निवर्त्तते। सम्पक्वो वाऽप्यपक्वो वा स सर्वप्रभवः स्मृतः॥" (मा० नि० नासा०) इति। अत्र यद्यपि दोषत्रयलिङ्गानि नोक्तानि तथाऽपि सर्वप्रभवत्वात् ज्ञातव्यानि। असाध्यत्वार्थं दुष्टतां गतः सन्निति वदन्ति; तस्मादेव दुष्टप्रतिश्यायलक्षणं पृथक् लिखितम्; तद्यथा—"प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति। पुनरानह्यते वाऽपि पुनर्विव्रियते तथा॥ निःश्वासो वाऽतिदुर्गन्धो नरो गन्धं न वेत्ति च। एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम्॥" (सु० उ० २४ अ०) इति। अयञ्च पञ्चप्रतिश्यायानामेवावस्थान्तरतया न षष्ठो गणनीयः, यतः सर्वे प्रतिश्याया अप्रतिक्रियमाणाः कालान्तरेण दुष्टतां यान्तीति वचनात्; तथा हि—"सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः। दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति हि॥" (मा० नि० नासा०) इति। अपीनस इति—अपीनसो नासारोगविशेषः प्रतिश्यायसमानलिङ्ग इति केचित्; यदुक्तम्—"आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चापि नासा। न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन॥" (च० चि० त्रिमर्मीय०) "तच्चानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम्" (सु० उ० २२ अ०) इति। विदेहस्तु पित्तश्लेष्मजं पठति, तद्यथा—"मस्तुलुङ्गोच्चितः श्लेष्मा यदा पित्ताद्विदह्यते। तदाऽसृक् पिच्छिलं नासा बहुलिङ्गानुगं स्रवेत्॥ सकण्डूदाहपाकश्च तन्तु विद्यादपीनसम्॥" इति। यत्र पूतिवायुर्वहति स पूतिनाससंज्ञो रोगः कथितः; तथा हि—"दोषैर्विदग्धैर्गलतालुमूले संमूर्च्छितो यस्य समीरणस्तु। निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम्॥" (सु० उ० २२ अ०) इति। दोषैरिति—पित्तकफरक्तैः, रक्तस्यापि दोषतुल्यरूपत्वाद्दोषत्वं बहुवचननिर्देशाच्च; तथा विदेहेऽप्युक्तं—"कफपित्तमसृङ्मिश्रं सञ्चितं मूर्ध्नि देहिनाम्। विदग्धमूष्मणा गाढं कुर्यात् कृत्वाऽविशङ्कनाम्॥ ततः प्रस्यन्दते घ्राणात् सरक्तं पूति पीतकम्। पूतिनस्यन्तु तं विद्यात् घ्राणकण्डूज्वरप्रदम्॥" इति। नासार्श इति—नासिकादिजातानामर्शसामधिमांसत्वं, सुश्रुतेन तु मांसाङ्कुरत्वसाधर्म्यात् अर्शस्त्वाभि-

नासानाहः पूतिरक्तमर्बुदं दुष्टपीनसम्।

साध्यत्वाच्च तेष्वर्शःप्रयोगः कृतः; यदुक्तं—"दोषास्त्वगामांसमेदांसि सन्दूष्य विविधाकृतीन्। मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः॥" (वा० नि० ७ अ०) इति। अपानादिशब्देन नासिकाश्रवणचक्षुर्मेढ्रनाभिप्रभृतयो गृह्यन्ते। एषां लक्षणानि सुश्रुते पठितानि; अत एव सुश्रुतेन नासारोगा एकत्रिंशत् सङ्ख्याताः; तद्यथा—"अर्बुदं सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्विधम्। चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदः॥" (रो० वि० नासा०) इत्यादि। एतेषां विवरणं तत्रैव ज्ञातव्यम्। भ्रंशथुरिति—यत्र सघनो विदग्धः कफ एव लिङ्गं तत् भ्रंशथुनाम रोगः कथितः, तथा हि—"प्रभ्रश्यते नासिकया तु यस्य सान्द्रो विदग्धो लवणः कफस्तु। प्राक् सञ्चितो मूर्द्धनि सूर्य्यतप्तस्तं भ्रंशथुं रोगमुदाहरन्ति॥" (रो० वि० नासा०) इति। क्षव इति—क्षवाम्बुका, स तु दोषागन्तुजभेदेन द्विविधो भवति; तद्यथा—"घ्राणाश्रिते मर्म्मणि सम्प्रदुष्टो यस्यानिलो नासिकया निरेति। कफानुयातो बहुशः सशब्दं तं रोगमाहुः क्षवथुं विधिज्ञाः॥" (सु० उ० २२ अ०) इति। आगन्तुजमाह—"तीक्ष्णोपयोगादभिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा। सूत्रादिभिर्वा तरुणास्थिमर्म्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति॥" (सु० उ० २२ अ०) इति दोषजागन्तुज एकएव गणनीयः। नासानाह इति—आनह्यते इत्यानाहः नासाप्रतीनाह इत्यर्थः; यदुक्तम्—"उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत्तम्" (च० चि० त्रिमर्मीय०) इति। विदेहेऽप्युक्तं, यथा—"कफावृतो यदा वायुर्यस्य घ्राणे च तिष्ठति। वृणोतीव तदा घ्राणं स प्रतीनाह उच्यते॥" इति। पूतिरक्तमिति—पूयरक्तमिति पाठान्तरम्। दोषागन्तुजभेदात प्रतिपादितम्; यदुक्तं—"दोषैर्विदग्धैरथवाऽपि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः। नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम्॥" (सु० उ० २२ अ०) इति। अर्बुदमिति—नासार्बुदं प्रसिद्धम्। सुश्रुते तु एकत्रिंशत्सङ्ख्यापूरणाय सप्तधाऽर्बुदस्य सङ्ग्रहः, तत्र वातपित्तकफरक्तमांसमेदोभवत्वेन षड्विधमर्बुदं शालाक्यप्रसिद्धं, विदेहेन सन्निपातजमधिकमुक्तम्, एवं सप्तविधमर्बुदं नासारोगेषु सुश्रुतेनोक्तम्। अत्र तु नाममात्रेणैव कृतार्थत्वात्। दुष्टपीनसमिति—पीनसं नासारोगे प्रसिद्धं, दुष्टत्वमत्र विकृतदोषारब्धत्वात्; अत एव पक्वामभेदेन द्विविधमित्याचष्टे; तद्यथा—"शिरोगुरुत्वमरुचिर्नासास्रावस्तनुः स्वरः। क्षामः ष्ठीवत्यथाभीक्ष्णमामपीनसलक्षणम्॥" (रो० वि० नासा०) इति। पक्वलक्षणमाह—"आमलिङ्गान्वितः

नासाशोषो घ्राणपाकः पूयस्रावश्च दीप्तकम्॥ १५० ॥

दशशिरोरोगाणां विवरणम्।—

तथा दश शिरोरोगा वातेनार्द्धावभेदकः।

श्लेष्मा घनः खेषु निमज्जति। स्ववर्णविड्गाढश्च परिपक्वस्य लक्षणम्॥" ( रो० वि० नासा० ) इति। नासाशोष इति—नासायां शोषोऽत्र परिशोषः; यदुक्तं—"घ्राणाश्रिते स्रोतसि मारुतेन गाढं प्रतप्ते परिशोषिते च। कृच्छ्राच्छ्वसेदूर्द्ध्वमधश्च जन्तुर्यस्मिन् स नासापरिशोष उक्तः॥" ( रो० वि० नासा० )। अत्र प्रतप्ते इत्यनेन च रक्तपित्तेऽपि गम्यते विदेहोक्तत्वात्; यतः,—"वातपित्तं यदा घ्राणे कफरक्ते विशोषयेत्। तदा कृच्छ्राच्छ्वसेज्जन्तुर्नासा शुष्का विदीर्य्यते॥ सवल्कीर्णेव चूर्णेन नासाशोषन्तु तं विदुः॥" इति। घ्राणपाक इति—घ्राणपाको नासापाकः, स च व्रणैरुपलक्षित इत्यभिप्रायः; यदुक्तं—"घ्राणाश्रितं पित्तमरूंषि कुर्य्यात यस्मिन् विकारे बलवांश्च पाकः। तं नासिकापाकमिति व्यवस्येद्विक्लेदकोथावथवाऽपि यत्र॥" ( सु० उ० २२ अ० ) इति। पूयस्राव इति—पूयस्रावो * नासास्रावः; तद्यथा—"घ्राणात् घनः पीतसितस्तनुर्वा दोषः स्रवेत् स्रावमुदाहरेत् तम्" ( च० चि० त्रिमर्मीय० ) इति। विदेहेऽपि—"स्रोतःशृङ्गाटके श्लेष्मा चितः क्लेदित ऊष्मणा। विशीर्णत स्यन्दते यस्मात् नासास्रावन्तु तं विदुः॥" इति। दीप्तकमिति—अत्र प्रज्वलितेव नासा भवति; तथा चोक्तं—"घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः। नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति॥" ( सु० उ० २२ अ० ) इति। विदेहेऽपि यथा—"धूमायते यदा नासा बलात् क्रथ्यति दह्यते। निःसरेत् तप्त उच्छ्वासो व्याधिं तं दीप्तमादिशेत्॥" इति॥ १४८—१५० ॥

तथा दश शिरोरोगा इत्यादि।—तथेति—ऊर्द्ध्वजत्रुगतरोगप्रस्तावात् दश शिरोरोगाः कथिताः। शिरोरोगशब्देन शिरोगतशूलरूपा रुजोऽभिधीयन्ते, अत एव

---

* पूयस्रावो नासास्राव इत्यर्थस्तु चिन्त्यः, नासास्रावे केवलं श्लेष्मणो जलस्य वा स्रावः भवति, न तु पूयस्य; तथा च श्रीकण्ठदत्तः,—"दोष इति कफः"। सुश्रुतेऽपि—"अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह नासा। रात्रौ विशेषेण हि तं विकारं नासापरिस्रावमिति व्यवस्येत्॥" इति। एवं वाग्भटेऽपि—"स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः। अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते॥" इति।

शिरस्तापश्च वातेन पित्तात् पीड़ा तृतीयका ॥ १५१ ॥
चतुर्थी कफजा पीड़ा रक्तजा सन्निपातजा ।

शिरोरोगा इत्युच्यन्ते । तेष्वर्द्धावभेदकमाह—अर्द्धावभेदकोऽर्द्धशिरोव्यथारूप इत्यर्थः ; तद्यथा—"केवलः सकफो वाऽर्द्धं गृहीत्वा शिरसोऽनिलः । मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेऽतिवेदनाम् ॥ शस्त्रारणिनिभां कुर्य्यात् तीव्रां सोऽर्द्धावभेदकः । नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥" ( च० सि० त्रिमर्मीय० ) इति । ननु सुश्रुते त्वयं त्रिदोषजः पठितः ; यथा—* "यस्योत्तमाङ्गं रुजतेऽर्द्धमात्रं सतोदभेदभ्रमशूलैः । पक्षाद्दशाहादथवाऽप्यकस्मात्तस्यार्द्धभेदं त्रितयाद् व्यवस्येत् ॥" ( सु० उ० २५ अ०) इति; तत् कथं वातेनैव दर्शितः ? उच्यते,—वातप्रकोपादेव पित्तकफौ तस्यानुबन्धौ बोद्धव्यौ ; यतः,—"एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इत्यादि, विकृतिविषमसमवायारब्धत्वान्निर्देश इत्यदोषः ; तथा ह्युक्तं—"सर्व एव शिरोरोगाः सन्निपातसमुत्थिताः । औल्वण्याद्दोषलिङ्गैस्ते कीर्त्तितास्त्विह दश ॥" (शाला० त०) इति । शिरस्तापश्चेति—अयञ्च वातेन भवति ; शिरस्तापः शिरोरुजा । तन्त्रान्तरे वातजोऽयं शिरोरोग इत्यर्थः ; यदुक्तं—"यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् । बन्धोपतापैश्च भवेद्विशेषः शिरोऽभितापः स समीरणेन ॥" ( सु० उ० २५ अ० ) इति । पित्तात् पीड़ेति—शिरःपीड़ा पित्तप्रकोपादपि भवति, अयं तृतीयो भेदः ; तद्यथा—"यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूप्यति चाक्षिनासम् । शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्तकोपात् ॥" ( रो० वि० शिरोरोग० ) इति । चतुर्थी कफजा पीड़ेति—शिरसि कफजा पीड़ा भवति, स चतुर्थो भेद इत्यभिप्रायः ; तद्यथा—"शिरो भवेद् यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च । शूनाक्षिकूटं वदनञ्च यस्य शिरोऽभितापः स कफप्रकोपात् ॥" ( रो० वि० शिरोरोग० ) इति । रक्तजेति—अत्र रक्तजा पीड़ा कथिता ; "रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च" ( सु० उ० २५ अ० ) इति । सन्निपातजेति—त्रिदोषजनिता इत्यर्थः ; तद्यथा—"शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति" ( सु० उ० २५ अ० )

* मुद्रितसुश्रुतेषु "यस्योत्तमाङ्गम्" इत्यादिप्रथमार्द्धस्थले "यस्योत्तमाङ्गार्द्धमतीव जन्तोः सम्भेदतोदभ्रमशूलजुष्टम्" इति पाठो दृश्यते ।

सूर्य्यावर्त्तोच्छिरःपाकात् क्रिमिभिः शङ्खकेन च ॥१५२॥

इति। सूर्य्यावर्त्तादिति—सूर्य्यावर्त्तादित्यनेन पीडा कथिता; या च रुक् सूर्य्यप्रवृत्तौ भवति सूर्य्यापगमे विनिवर्त्तते, स सूर्य्यावर्त्तशब्दवाच्यो रोगः; तथा हि—"सूर्य्योदयं या प्रति मन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढम्। विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च॥ सर्वात्मकं कष्टतमं विकारं सूर्य्यापवर्त्तं तमुदाहरन्ति॥" (रो० वि० शिरोरोग०) इति। * शिरःपाकादिति—शिरःपाकादेवासृग्वसादीनां सङ्क्षयेण शिरसि पीडा भवतीत्यभिप्रायः, अत एव सुश्रुते क्षयजो विकार इति पठितः; यतः,—† "असृग्वसाश्लेष्मसमीरणानां शिरोगतानामिह सङ्क्षयेण। क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम्॥ संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति॥" (रो० वि० शिरोरोग०) इति। अयं विदेहेऽपि पठ्यते—"स्रंसते तुद्यते शून्यं शिरो विभ्रान्तमेव तत्। मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मके॥" इति। क्रिमिभिरिति—शिरसि क्रिमिजा पीडा भवति इति, यदुक्तं—"निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्तः। घ्राणाच्च गच्छेत् ‡ रुधिरं सपूयं शिरोऽभितापः क्रिमिभिः स घोरः॥" (सु० उ० २५ अ०) इति। तथैवाह चरकः,—"क्रमीणां दर्शनेन च" (च० सू० कियन्तःशिरसीय०) इति। शङ्खकेनेति—शङ्खदेशेषु दुष्टाः दोषाः शोथत्वेन रुजां कुर्वन्तीत्यनेन शङ्खकरोगो वाच्यः; तद्यथा—"रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः। तीव्ररुग्दाहरागं वा शोथं कुर्वन्ति दारुणम्॥ स शिरो विषवद्वेगी निरुध्याशु गलं तथा। त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम्॥ त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय समाचरेत्॥" (रो० वि० शिरोरोग०) इति। एवं ¶ सुश्रुतोक्ता दश शिरोरोगाः प्रतिपादिताः। माधवकरेण तु स्वसङ्ग्रहेऽनन्तवातोऽधिकः पठितः, तन्त्रान्तरदर्शनात्; तद्यथा—"दोषास्तु

---

* "शिरःपाकात्" इत्यत्र "शिरःकम्पात्" इति पाठान्तरं चरकवाग्भटसंवादि।

† मुद्रितसुश्रुतग्रन्थेषु "असृग्वसाश्लेष्मसमीरणानाम्" इत्यत्र "वसावलासक्षतसम्भवानाम्" इति पाठवैषम्यं दृश्यते।

‡ "रुधिरं सपूयम्" इत्यत्र सुश्रुते "सलिलं सरक्तं" तथा रुग्विनिश्चये "सलिलं सपूयम्" इति पाठान्तरम्।

¶ मुद्रितसुश्रुते एकादश शिरोरोगाः अनन्तवातश्च इत्युक्तिर्दृश्यते।

नवकपालरोगाणां विवरणम्।—

तथा कपालरोगाः स्युर्नव तेषूपशीर्षकम्।
अरुंषिका विद्रधिश्च दारुणं पिड़काऽर्बुदम्॥
इन्द्रलुप्तञ्च खलतिः पलितञ्चेति ते नव॥ १५३॥

---

दुष्टास्त्रय एव मन्या सम्पीड्य घाटासु रुजां सुतीव्राम्। कुर्वन्ति योऽक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतश्च॥ गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान्। अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम्॥" (सु० उ० २५ अ०) इति। सर्वत्र सर्वज्ञेषु प्रतिपादितत्वात् अत्रापि न गणितः॥ १५१।१५२॥

तथा कपालरोगाः स्युर्नव तेषूपशीर्षकमित्यादि।—शीर्षकसमीपे शीर्षकवत् यः शोथः स उपशीर्षकशब्दवाच्यः, नीरुक्शोफत्वादुपशीर्षकः, यदुक्तं—"कपाले पवने दुष्टे गर्भस्थस्यापि जायते। सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम्॥" (वा० उ० २३ अ०) इति। अरुंषिकेति—अरुंषीति व्रणानि कथितानि, तान्यपि शिरसि भवन्ति; तद्यथा—"अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि। कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम्॥" (सु० नि० १३ अ०) इति। विद्रधिश्चेति—विद्रधिः प्रसिद्धः, स तु मूर्द्धन्यपि भवति बहिर्गतमर्माश्रितत्वात्। अस्य लक्षणं विद्रधिनिदाने ज्ञातव्यम्। दारुणमिति—दारुणं केशभूमौ भवति, लोकेऽपि "फ्याम" शब्दवाच्यो रोगविशेषः; तदुक्तं—"दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते। कफवातप्रकोपेण विद्याद्दारुणकन्तु तम्॥" (सु० नि० १३ अ०) इति। यद्यपि कफवातप्रकोपेणेत्युक्तं, तथाऽपि अत्र पित्तरक्तानुबन्धो द्रष्टव्यः; यदुक्तं विदेहे—"यदत्र पटलाभासं सरजस्कं शिरस्त्वचि। पारुष्यं जायते जन्तोस्तस्य रूप विशेषतः॥ तोदैः समन्वितं वातात् सकण्डु गौरवं कफात्। सपिपासं सदाहार्त्तिरागं पित्तास्रजं तथा॥" इति। पिडकेति—शिरसि याः पिडका भवन्ति ताः पिडकाः रोगाः कथिताः, अयमेव क्षुद्ररोगेषु इरिवेल्लिकाशब्दवाच्यः, तथा हि—"पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम्। सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम्॥" (भो० वि० क्षुद्र०) इति। अत्र तु शिरःस्थितत्वात् लिखिता न दोषः। अर्बुदमिति—अर्बुदवदर्बुदं व्रणविशेषः, "गात्रप्रदेशे क्वचिदेव" (सु० नि० ११ अ०) इत्यनियमाच्छिरस्यपि भवति। तल्लक्षणं तत्रैव बोद्धव्यम्। इन्द्रलुप्तमिति—इन्द्रलुप्तो "वाटिपुरा" शब्दवाच्यो रोगविशेषः, अस्यैव पर्य्यायकथनं खालित्यं रुज्या चेति; तथा श्रुतं—"रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्। प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥

चतुर्नवतिनेत्ररोगाणां विवरणम्।—

**तथा नेत्रभवाः ख्याताश्चतुर्नवतिरामयाः।**

रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं खालित्यं * रुज्येति च विभाव्यते॥" (सु० नि० १३ अ०) इति। अत्र तु इन्द्रलुप्तखालित्ययोः पृथग्ग्रहणं कार्त्तिकाचार्य्यवचनात्; तन्मते तु इन्द्रलुप्तं श्मश्रुणि भवति, खालित्यं शिरस्येव, अत एव विदेहवचनादिन्द्रलुप्तं स्त्रीणां न भवति; यदुक्तम्—"अव्यञ्जनसुकुमाराङ्गो रक्तो दुष्टं स्रवन्ति च। अव्यायामरता यस्मात् † नेन्द्रलुप्तं ततः स्त्रियाः॥" इति। एवमिन्द्रलुप्तं खलतिश्च पृथक् च निरूपितम्। पलितमिति—केशानां शुक्लभावेन पलितमित्युच्यते; तद्यथा—"क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तञ्च केशान् पचति पलितं तेन जायते॥" (सु० नि० १३ अ०) इति। तत् पलितं द्विविधं भवति, अकालजनितं कालजनितञ्च, अन्यथोक्तत्वात्; यतः क्रोधादिकृतेन शरीरोष्मणा शिरोगतेन वैकृतं, पित्तेन पुनः प्राकृतं पलितमिति, अन्यथा पित्तोष्मणोरभेदात् पुनरुक्तिदोषः स्यात्; एतेन वैकृतमकालजं, वयःकृतन्तु पित्तेनेत्यर्थः। केचिदेतस्याकालजलक्षणं मन्यन्ते। अन्ये त्रिभिरेव दोषैः स्यादिति कथयन्ति; तत्र शोकश्रमाभ्यां जनितवातेन शरीरोष्मणो विसर्पाच्छिरोगतत्वं, तेनानिलोऽपि लभ्यते, पित्तञ्च साक्षादुपात्तं, चकारेण श्लेष्माऽपि केशशुक्लताकरो गृह्यते; एतेन दोषत्रयसहितः शरीरोष्मा पलितहेतुरिति वाक्यार्थः; यदुक्तं चरके—"तेजोऽनिलाद्यैः सह केशभूमिं दग्ध्वा तु कुर्य्यात् खलितं नरस्य। किञ्चित्तु दग्ध्वा पलितानि कुर्य्याद्धरित्प्रभत्वञ्च शिरोरुहाणाम्॥" (च० चि० त्रिमर्मीय०) इति॥ १५२॥

तथेति।—तथेत्यनेनेन्द्रियसाधर्म्यात् नासाश्रवणादीनामनन्तरं नेत्ररोगगणनारम्भ इत्यभिप्रायः। सा चतुर्नवतिसङ्ख्या केनामयैः प्रतिपादिता; तद्यथा—"नव रोगा नेत्रसन्धौ चतुर्विंशति वर्त्मजाः। कृष्णभागगताः पञ्च शुक्लभागे त्रयोदश॥ षट् काचे षट् च तिमिरे षष्टौ दृष्टिगता मताः। लिङ्गनाशस्तथा सप्त चत्वारश्चाभिमन्यजाः। आभिष्यन्दाश्च चत्वारस्तथाऽष्टौ सर्वजाः स्मृताः॥" इत्यथाचार्य्येण सङ्गृहीताः। सुश्रुते तु स्थानविशेषादेव षट्सप्ततिः कथिताः; यतः,—"नव सन्ध्याश्रयास्तेषु वर्त्मजा-

* रोमविनिश्चये "रुज्या" वाग्भटे च "रुज्या" इति पाठः।

† "तस्मान्न खलितिः स्त्रियाः" इति मधुकोषे पाठः।

तत्र चतुर्विंशतिनेत्रवर्त्मगतरोगाणां विवरणम्।—

**तेषु वर्त्मगदाः प्रोक्ताश्चतुर्विंशतिसंज्ञकाः॥ १५४॥**

त्रिंशति:। शुक्लभागे दशैकश्च चत्वार: कृष्णभागजा:॥ सर्वाश्रया: सप्तदश दृष्टिजा द्वादशैव तु। * द्वौ च बाह्यावथावन्यावनिमित्तौ निमित्तजौ॥ षट्सप्ततिर्नेत्ररोगा: सङ्ख्येयं प्रकीर्त्तिता:॥" (सु० उ० १अ०) इति। दोषभेदेनापि षट्सप्ततिरेव; यदाह सुश्रुत:—† "तैस्त्रिभिस्त्रिंशदुक्तास्ते कफेनाप्यधिकास्त्रय:। रक्तजा षोड़श ज्ञेया: सर्वजा: पञ्चविंशति:॥ बाह्यौ पुनर्द्वौ च तथा रोगा: षट्सप्तति: स्मृता:॥" इति। अत्र शार्ङ्गधराचार्य्येण यच्चतुर्नवतिसङ्ख्याग्रहणं कृतं ‡ तन्नेत्ररोगान्तर्नेत्ररोगनिदानतया (?) प्रतिपादितत्वात्। यथा सर्वनेत्रामयानां हेतुभूतोऽभिष्यन्द इति; तदुक्तं—"वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विध:। प्रायेण जायते घोर: सर्वनेत्रामयाकर:॥" (रा० वि० नेत्रसर्वगत०) इति। सुश्रुतेऽपि यथा— "प्रायेण सर्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूला:" (सु० उ० ६अ०) इति। अधिमन्थस्याप्यभिष्यन्दजन्यत्वम्; यदुक्तं—"वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम्। तावन्तस्त्वधिमन्था: स्युर्नयने तीव्रवेदना:॥" (सु० उ० ६अ०) इति। तथैव दृष्टिगतरोगाणामपि तिमिरकाचलिङ्गनाशाश्च हेतुभूता: परम्परया व्यवस्थिता:; तद्यथा —"तिमिरं रागतां याति राग: काचत्वमेति च। काचात् सञ्जायते नीली तदाऽन्धो जायते नर:॥" इत्यादिना। तेनात्र निदानभूतानां रोगाणामपि सङ्ग्रह: कृत इत्यदोष:। एतेषां लक्षणानि वक्ष्यमाणेषु नेत्रगदेषु दर्शयिष्याम:। अथ चतुर्नवतिनेत्ररोगाणां विवरणमाह, तेषु वर्त्मगदा इत्यादि।—तेषु पूर्वोक्तचतुर्नवतिसङ्ख्यकगदेषु वर्त्मगदा: ¶ पक्ष्ममूलगतरोगा:, ते चतुर्विंशतिभेदा:

* मुद्रितसुश्रुतेषु—"द्वौ च—"इत्यादिपाठस्थले "बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ। भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितै:॥" इति पाठो दृश्यते।

† मुद्रितसुश्रुतेषु—"वाताद्दश तथा पित्तात् कफाच्चैव त्रयोदश। रक्तात् षोड़श विज्ञेया: सर्वजा: पञ्चविंशति:॥ तथा बाह्यौ पुनर्द्वौ च रोगा: षट्सप्तति: स्मृता:॥" इति पाठ:।

‡ तन्नेत्ररोगान्तर्गतानां नेत्ररोगान्तराणां निदानार्थकराणामपि पृथक् पृथक् ग्रहणादिति पाठे कथञ्चिदर्थसङ्गति: जायते।

¶ पक्ष्ममूलं वर्त्म इति तु न सम्यक्। "नयनगोलकावरकं निमेषोन्मेषाश्रयं पटलद्वयं वर्त्म उच्यते" इति श्रीकण्ठ:।

कृच्छ्रोन्मीलः पक्ष्मशातः कफोत्क्लिष्टश्च लोहितः।
मकुङ्निमेषः कथितो रक्तोत्क्लिष्टः कुकूणकः॥ १५५॥

कृच्छ्रोन्मीलप्रभृतयः। तद्यथा कृच्छ्रोन्मील इति—यत्र कृच्छ्रेण महता कष्टेन उन्मीलनमुद्घाटनं भवति, अत एव तन्त्रान्तरे कुञ्चनं नामेति कथयन्ति; यथा—"वाताद्या वर्त्मसङ्कोचं जनयन्ति मला यदा। तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः॥" (रो० वि० नेत्रवर्त्म०) इति। यत्र पक्ष्मणां शातनं भवति स पक्ष्मशात इति कथितः। तेनान्यत्र पक्ष्मशातः प्रसिद्धः; यदुक्तं—"वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत्। कण्डूं दाहञ्च कुरुते पक्ष्मशातं तमादिशेत्॥" (रो० वि० नेत्रवर्त्म०) इति। कफोत्क्लिष्ट इति—कफस्योत्क्लिष्टत्वेन प्रक्लिन्नवर्त्मत्वम् उपान्ते, तेन प्रक्लिन्नवर्त्मेति नाम्ना प्रसिद्धम्; तद्यथा—"अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य हि। प्रक्लिन्नवर्त्म तत् विद्यात् क्लिन्नमत्यर्थमन्ततः॥" (रो० वि० नेत्रवर्त्म०) इति। एतदेव सुश्रुतेन पिल्लाख्यं पठितम्; यथा—"भृशं प्रक्लिद्यते वर्त्म कण्डूमन्मन्दवेदनम्। विद्यात् प्रक्लिन्नवर्त्मेति तत् पिल्लं सन्निपातजम्॥" इति। लोहित इति—लोहिताकाराङ्कुरत्वेन यथाऽर्शस्तथाऽयमपि, अत एवान्यत्र * शुष्कार्शः कथितम्; तद्यथा—"दीर्घोऽङ्कुरः खरः स्तब्धो दारुणोऽभ्यन्तरोद्भवः। व्याधिरेषोऽभिविख्यातः शुष्कार्शो नाम नामतः॥" (रो० वि० नेत्रवर्त्म०) इति। निमेष इति—निमेषसंज्ञया प्रसिद्धः; यतः,—"निमेषिणीः शिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयत्यति वर्त्मानि निमेष इति तं विदुः॥" (रो० वि० नेत्रवर्त्म०) इति। अयमपि विदेहे असाध्यः कथितः; यदुक्तं—"निमेषिणीः शिरा वायुः प्रविश्य व्यवतिष्ठते। अत्यर्थं चालयेद्वर्त्म निमेषः स न सिध्यति॥" रक्तोत्क्लिष्ट इति—रक्तेनोत्क्लिष्टत्वात्, रक्तार्शोऽन्यत्र प्रतिपादितम्; यथा—"यः स्थितो वर्त्ममध्ये तु लोहितो मृदुरङ्कुरः। तद्रक्तजं शोणिताशोंऽङ्कुरं भिन्नं प्रवर्द्धते॥" (रो० वि० नेत्रवर्त्म०) इति। एतदसाध्यत्वेन विदेहेऽपि दर्शितम्; यथा—"वायुः शोणितमादाय शिराणां प्रमुखे स्थितः। जनयत्यङ्कुरं तासां वर्त्मान्ते स्फिक्सरोहणम्॥ तच्छोणितार्शोऽसाध्यं स्यादक्षसाव्यथ जीवनम्॥" इति। कुकूणकोऽन्यत्र बालरोगे पठितः, बालानामेव सम्भवत्वात्;

* लोहिताकाराङ्कुरत्वेन शोणितार्शःसंज्ञकमेव भवितुं युक्तं, न तु शुष्कार्शः; यतः,—"यः स्थितो वर्त्ममध्ये तु लोहितो मृदुरङ्कुरः। तद्रक्तजं शोणितार्शोऽङ्कुरं भिन्नं प्रवर्द्धते॥" इत्युक्तत्वात्।

पक्ष्मार्शः पक्ष्मरोधश्च पित्तोत्क्लिष्टश्च पोथकी।
श्लिष्टवर्त्मा च बहलः पक्ष्मोत्सङ्गस्तथाऽर्बुदम् ॥ १५६ ॥

अविगतभागेनाव गणितो न दोषः; तद्यथा—"कुकूणकः क्षीरदोषाच्छिशूनामक्षिवर्त्मनि। जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहुः॥ शिशुः कुर्याल्ललाटाक्षि-कूटनासावघर्षणम्। शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः॥" (रो० वि० बाला०) इति। पक्ष्मार्श इति—यत्र कर्कटीबीजसदृशाः पिडका वर्त्मनोऽन्तर्बाह्यः भवन्ति तत् पक्ष्मार्शः कथितम्; तथा ह्—"एर्वारुबीजप्रतिमाः पिडका मन्दवेदनाः। श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते॥" (रो० वि० नेत्रवर्त्म०) इति। सन्निपातजमिदम्; तथा च विदेहः,—"नीरुजा कठिना वर्त्म-पक्ष्मान्तर्बाह्यतोऽपि वा। पिडका सन्निपातेन तदर्शोवर्त्म कीर्त्यते॥" इति। पक्ष्मरोध इति—पक्ष्मरोधो वर्त्मबन्धः कथितः, यत्र शोथयोगात् यथावन्नयनं पिदधाति वर्त्म एष सन्निपातजः; तथा हि—"कण्डूमताऽल्पतोदेन वर्त्मशोथेन यो नरः। न समं छादयेदक्षि भवेद्वन्धः स वर्त्मनः॥" (सु० उ० ३ अ०) इति। पित्तोत्क्लिष्ट इति—उत्क्लिष्टं पित्तं यत्र सः * पक्ष्मप्रकोप इति नाम्ना प्रसिद्धः; यदुक्तं—"प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि। घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च॥ असिते च सिते भागे मूलकोषात् पतन्ति हि। पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः॥" (रो० वि० नेत्रवर्त्म०) इति। अयमपि सन्निपातजो याप्य एव। पोथकीति—यत्र सर्षपसदृशाः पिडका भवन्ति स पोथकीशब्दवाच्यः; यथा—"स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः। रुजावत्यश्च पिडकाः पोथक्य इति कीर्तिताः॥" (रो० वि० नेत्रवर्त्म०) इति। श्लिष्टवर्त्मेति—वर्त्मनः श्लिष्टत्वेन, † अक्लिन्नवर्त्म

* वाग्भटोक्तपित्तोत्क्लिष्टलक्षणेन सह पक्ष्मप्रकोपस्य किमपि सादृश्यं नास्ति; तथा च—"सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम्। पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तत्॥" (वा० उ० ८ अ०)। एवञ्च अनयोरैक्यं कदाऽपि न युज्यते इति। पक्ष्मकोपो वातजः पित्तोत्क्लिष्टश्च पित्तजन्यमेव इत्यपि द्रष्टव्यम्।

† अक्लिन्नवर्त्मना सह वाग्भटोक्तश्लिष्टवर्त्मनः वर्त्मश्लेषं विना नान्यत् सादृश्यं परिदृश्यते; तद्यथा—"श्लिष्टाख्यवर्त्मनी श्लिष्टे कण्डूश्वयथुरागिणी" (वा० उ० ८ अ०) इति। "एतत् (अक्लिन्नवर्त्म) वाग्भटे पिल्लाख्यं समाख्यते" इति मधुकोषः।

कुम्भीका सिकतावर्त्म लगणोऽञ्जननामिका।

इति नामान्तरं, पक्ष्मणां संलग्नत्वात्; तथा हि—"यस्य धौतान्यधौतानि सम्बध्यन्ते पुनः पुनः। वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत्॥" (रो० वि० नेत्रवर्त्म०) इति। एके क्लिष्टस्थाने क्लिष्टवर्त्मेति पठन्ति, तत्र क्लिष्टत्वं वेदनाऽल्पयोगादवगन्तव्यम्; यतः,—"मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च। अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः॥" (सु० उ० ३ अ०) इति। बहल इति—यत्र त्वक्सवर्णसदृश्यः पिडका भवन्ति तत् बहलवर्त्मेति संज्ञया कथितम्; तथा हि—"वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः। सवर्णाभिः स्थिराभिश्च विद्यात् बहलवर्त्म तत्॥" (रो० वि० नेत्रवर्त्म०) इति। पक्ष्मोत्सङ्ग इति—वर्त्मन एवाभ्यन्तरे * उपरि सोत्सेधा पिडका जायते, तेनोत्सङ्गपिडका अन्यत्र कथिता; यथा—"अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मनश्च या। सोत्सङ्गोत्सङ्गपिडका सर्वजा स्थूलकण्डुरा॥" (रो० वि० नेत्रवर्त्म०) इति। इयमपि विदेहगदाधराभ्यां वर्त्मनि एव जाता दर्शिता; यदाहतुः,—"वर्त्मोत्सङ्गेऽधरे जन्तोः सन्निपातात् प्रजायते। अभ्यन्तरमुखी स्थूला बाह्यतश्चापि दृश्यते॥ पिडका पिडकाभिश्च चिताऽन्याभिः समन्ततः। उत्सङ्गपिडका नाम कठिना मन्दवेदना॥ सा प्रभिन्ना स्रवेत् स्रावं कुक्कुटाण्डरसोपमम्॥" इति। अर्बुदमिति—वर्त्मार्बुदं, तच्च ग्रन्थिरूपेण स्थितम्; तद्यथा—"वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्। आचक्षीतार्बुदमिति सरक्तमविलम्बितम्॥" (रो० वि० नेत्रवर्त्म०) इति। कुम्भीकेति—कुम्भाण्डलता, तद्बीजतुल्या कुम्भीका वाच्या। अन्ये—कुम्भीका कच्छदेशोद्भवा दाडिमाकारफला, तद्बीजतुल्यपिडका भिद्यमाना सती स्वयमेव पूर्णोदरा भवति, यदुक्तं—"वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च। कुम्भीकाबीजसदृशाः कुम्भीकाः सन्निपातजाः॥" (रो० वि० नेत्रवर्त्म०) इति। सिकतावर्त्मेति—सिकता शर्करा, तत्सदृशाभिः पिडकाभिश्चितं यद्वर्त्म भवति तत् सिकतावर्त्मेति कथितम्; तद्यथा—"पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता। पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा॥" (सु० उ० ३ अ०) इति। लगण इति

---

* सुश्रुते अधोवर्त्मनि पिडका जायते इत्युक्तं, तथा च—"पिडकाऽभ्यन्तरमुखा बाह्याधोवर्त्मसंश्रया। विज्ञेयोत्सङ्गिनी नाम तद्रूपपिडकान्विता॥" (सु० उ० ३ अ०) इति। मधुकोषकारेणापि—"ऊर्ध्वाधोवर्त्मद्वयमध्ये अधोवर्त्मनि या" इति व्याख्यातम्।

कर्दमः श्याववर्त्मा च विसवर्त्मा तथाऽलजी ॥
उत्क्लिष्टवर्त्मेति गदाः प्रोक्ता वर्त्मसमुद्भवाः ॥ १५७ ॥

—यत्र वर्त्ममूले कोलप्रमाणो ग्रन्थिः स लगण इति रोगविशेषः कथितः; तथा च—"अपाकी कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः। सकण्डुः पिच्छिलः कोल-प्रमाणो लगणस्तु सः॥" (सु० उ० ३ अ०) इति। अञ्जननामिकेति—वर्त्मजा कोमला या पिड़का साऽञ्जननामिकेति प्रसिद्धा; यदुक्तं—"दाहतोदवती ताम्रा पिड़का वर्त्मसम्भवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका॥" (सु० उ० ३ अ०) इति। कर्दम इति—प्रागुक्तक्लिष्टलक्षणमेव यदा पित्तमिलितं सत् शोणितं विदहेत् तदा क्लिन्नत्वमापन्नं वर्त्म वर्त्मकर्दम इति कथितम्; तथा हि—"क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा। ततः क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमः॥" (सु० उ० ३ अ०) इति। श्याववर्त्मेति—श्यावत्वमत्र वाताधिकत्वेन बोद्धव्यम्; अत एव वेदनान्वितमित्युक्तम्; तथा हि—"यत् वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्। तदाहुः श्याववर्त्मेति वर्त्मरोगविशारदाः॥" (रा० वि० नेत्रवर्त्म०) इति। अग्निदग्धमिव श्यावत्वमित्येके; तथा च निमिः,—"दुष्टश्लेष्मा मरुत् पित्तं वर्त्मनोश्चीयते यदा। अग्निदग्धनिभं श्यावं श्याववर्त्मेति तद्विदुः॥" इति। विसवर्त्मेति—विसं मृणालं, तच्छिद्राकारच्छिद्रान्वितः शोथो वर्त्ममूले भवति तत् विसवर्त्मेति नाम कथितम्; तदुक्तं—"त्रयो दोषाः बहिः शोथं कुर्य्युश्छिद्राणि वर्त्मनोः। प्रस्रवन्त्यन्तरुदकं विसवद्विसवर्त्म तत्॥" (रा० वि० नेत्रवर्त्म०) इति। अलजीति—यद्यप्यलजी वक्ष्यमाणसन्धिगतरोगेषु दर्शिता तथाऽप्यत्र प्रसङ्गात् प्रसिद्धं मतत्वात् * पक्ष्मसन्धावपि भवतीत्यदोषः; यदुक्तं—"वर्त्तुलाकारपिड़का सूक्ष्मा ताम्रा च वर्त्मनि। सरुजा शोणितोत्क्लिष्टा दारुणा त्वलजी स्मृता॥" इति। उत्क्लिष्टवर्त्मेति—उत्क्लिष्टो वातस्तेन व्याप्तं यद्वर्त्म, अत एव तन्त्रान्तरे † वातहतवर्त्म कथितम्; यथा—"विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य निमील्यते।

* वाग्भटे वर्त्मगतरोगविज्ञानीयेऽध्याये कनीनिकोपरि वर्त्मनो बाह्यतः एकविधा अलजी उक्ता, अपरा सन्धिगतरोगविज्ञानीये कनीनिकान्तः कृष्णशुक्लसन्धौ, न तु पक्ष्मसन्धौ कुत्रापि; तथा च—"कनीनिके बहिर्वर्त्म कठिनो ग्रन्थिरुन्नतः। ताम्रः पक्वोऽस्रपूयास्रदलज्याध्मायते मुहुः॥" (वा० उ० ८अ०)। "कनीनक्षान्तरलजी शोफो रुक्तोददाहवान्" (वा० उ० १० अ०) इति।

† वाग्भटोक्तोत्क्लिष्टवर्त्मना सह सौश्रुतवातहतवर्त्मनः किमपि साद्दश्यं

नव नवनेत्रसन्धिगतरोगाणां विवरणम्।—

**नेत्रसन्धिसमुद्भूता नव रोगा: प्रकीर्त्तिता:।**
**जलस्राव: कफस्रावो रक्तस्रावश्च पर्वणी ॥ १५८ ॥**

---

एतद्वातहतं वर्त्म जानीयादक्षिचिन्तक: ॥" (रो० वि० नेत्रवर्त्म०) इति। एवं वर्त्म-रोगाश्चतुर्विंशति: प्रोक्ता: ॥ १५४—१५७ ॥

इदानीं नेत्ररोगेष्वेव सन्धिगतान् नव भेदान् आह, नेत्रेति।—पूर्वोक्तेषु चतुर्नवति-नेत्ररोगेषु नव रोगा ये सन्धिगतास्तेषां विवरणं लिख्यते, यथा, जलस्राव इति—जलस्रावोऽत्र पित्तास्रावोऽद्रव्य:, जलाभस्रावदर्शनात्; तद्यथा—"हरिद्राभं नीलमुष्णं जलाभं पित्तस्राव: संस्रवेत् सन्धिमध्यात्" (रो० वि० नेत्रसन्धि०) इति। यत-स्तन्त्रान्तरेऽपि चत्वार एव स्रावा उक्ता:; यदुक्तं—"गत्वा सन्धीनश्रुमार्गेण दोषा: कुर्य्यु: स्रावान् लक्षणै: स्वैरुपेतान्। तं हि स्रावं नेत्रनाडीमथैके तस्या लिङ्गं कीर्त्तयिष्ये चतुर्द्धा ॥" (रो० वि० नेत्रसन्धि०) इति; तेनात्र जलस्राव इति कथित:। पूय-स्रावश्च सन्निपातज: स्राव: कथित:। ननु वातज: स्राव: कुतो नोक्त:? सत्यम्; केवल-वातेन स्रावाभावात्, यतो विदेहेऽपि चत्वार एव प्रतिपादिता:; तद्यथा—"सन्निपातात् कफात् रक्तात् पित्तात् स्रावोऽक्षिसन्धिषु" इति। कफस्राव इति—कफेन स्रावो घनो भवति नीरुजश्च; यदुक्तं—"श्वेतं सान्द्रं पिच्छिलं य: स्रवेत्तु श्लेष्मस्रावी नीरुज: स प्रदिष्ट:" (सु० उ० २ अ०) इति। रक्तस्राव इति—"रक्तस्राव: शोणितोत्थ:" इति वचनात् अत्र सरक्तपूयं स्रवति; यत:,—"रक्तस्राव: शोणितोत्थो विकार: सवेदुष्टं तत्र रक्तं * सपूयम्" इति। पर्वणीति—शुक्लकृष्णसन्धावेव पर्वणी भवति; यदुक्तं—"ताम्रा तन्वी दाहशूलोपपन्ना ज्ञेया रक्तात् पर्वणी वृत्तशोफा। जाता सन्धौ कृष्णशुक्लेऽलजी स्यात् तस्मिन्नेव ख्यापिता पूर्वलिङ्गै: ॥" (सु० उ० २ अ०) इति। वक्ष्यमाणाऽलजी चापि

नास्ति; तथा च—"यत् वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मात् म्लानतामियात्। रक्तदोष-त्रयोत्क्लेशात् वदन्त्युत्क्लिष्टवर्त्म तत् ॥" (वा० उ० ८ अ०) इति।

* सुश्रुतेन वाग्भटेन वा पूयस्रावो नोक्त:, तथा च—"रक्तस्राव: शोणितोत्थ: सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्" (सु० उ० २ अ०) इति। "रक्तात् रक्तस्रवे ताम्रं बहुशश्चास्रु संस्रवेत्" (वा० उ० १० अ०)। माधवेनापि—"रक्तस्राव: शोणितोत्थो विकार: सवेदुष्टं तत्र रक्तं प्रभूतम्" इति पठितम्।

पूयस्रावः क्रिमिग्रन्थिरुपनाहस्तथाऽलजी।
पूयालस इति प्रोक्ता रोगा नयनसन्धिजाः॥ १५९॥

तत्रैव कफशुक्लसन्धौ पूर्वलिङ्गैरलजी तन्त्रीप्रभृतिभिः ख्यापिता कथिता। भेडमतयोः,—तन्त्री पर्वणीका, स्थूला चालजीति वदति; तथा च विदेहः,—"शुक्लकृष्णान्तःसन्धौ तु चोत्थितेऽस्रकफानिलाः। पर्वणी पिडका तेषु जायते तन्तुगोपमा॥ ताम्रा सदाहचोषोषापीतकास्रसमाकुला। कफपित्ते तु सम्मूर्च्छ्य सह रक्तेन मारुतः॥ शुक्लकृष्णान्तःसन्धौ तु जनयेद्गोस्तनाकृतिम्। पिडकामलजीं तान्तु विद्धि तोदास्रुसङ्कुलाम्॥" इति। पूयस्राव इति—यत्र सन्निपातेन पाकवान् शोथः संस्रवेत स पूयस्रावः कथितः; तथा हि—"पाकः सन्धौ संस्रवेत यस्तु पूयं पूयस्रावी नैकरूपः प्रदिष्टः" (सु० उ० २ अ०) इति। क्रिमिग्रन्थिरिति—नानारूपाः क्रमयो ग्रन्थिं वर्त्मपक्ष्मसन्धावेव कुर्वन्ति, तेन क्रिमिग्रन्थिरिति प्रतीतः; यतः,—"क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युः क्रमयः सन्धिजाताः। नानारूपा वर्त्मशुक्लान्तसन्धौ चरन्त्यन्तर्लोचनं दूषयन्तः॥" (मा० नि० नेत्रसन्धि०) इति। विदेहे तु पूयादिदर्शनात् सान्निपातजोऽयं विकारः; तदुक्तं—*"ततस्ते पूयसंसृष्टाः पतन्ति क्रमयस्तथा। लक्षणैर्विविधैर्युक्ताः सन्निपातसमुत्थिताः॥ क्रिमिग्रन्थिं तु तं विद्याद्वेदिनां नेत्रदूषणम्॥" इति। उपनाह इति—तथा च—"ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाहः" (सु० उ० २ अ०) इति। विदेहे तु वातश्लेष्मजन्यत्वेऽपि श्लेष्मोद्रेकात् श्लेष्मोपनाह इति व्यपदेशः; यदुक्तं—"वायुः श्लेष्माणमादाय दृष्टिसन्धौ व्यवस्थितः। अरुणं कठिनं ग्रन्थिं जनयेदल्पवेदनम्॥ श्लेष्मोपनाहं तं विद्यात् स्रावान् वक्ष्याम्यतःपरम्॥" इति। अलजीति—पर्वणिकाऽधिकारे दर्शिता, सा तत्रैव ज्ञातव्येति। पूयालस इति—"पक्वः शोथः सन्धिजातः सतोदः पूयस्रावी सोऽत्र पूयालसाख्यः" इति। सन्धिरत्र नासानु नेत्रान्तःकनीनसन्धिरित्युच्यते; तथा च निमिः,—"शोथक्लेदसमाविष्टं तोदभेदसमाकुलम्। पूयालसन्तु तं विद्यात् सन्धौ कानीनिके नृणाम्॥" इति। इति नयनसन्धिगतरोगा उक्ताः॥ १५८।१५९॥

* "ततस्ते" इत्यस्य प्राक् "वर्त्मशुक्लस्य सन्धौ तु ग्रन्थिः पित्तकफात्मकः। ऊष्मणा पच्यते गाढं तत्र मूर्च्छन्ति जन्तवः॥ सुसूक्ष्मजातचरणा वर्त्मपक्ष्मसमाश्रयाः॥" इति श्लोकावयवो मधुकोषे दृश्यते।

तत्र त्रयोदशनेत्रशुक्लगतरोगाणां विवरणम्।—

तथा शुक्लगता रोगा बुधैः प्रोक्तास्त्रयोदश।
शिरोत्पातः शिराहर्षः शिराजालश्च शुक्तिकः॥ १६० ॥
शुक्लार्मं चाधिमांसार्मं प्रस्तार्य्यर्मं च पिष्टकः।
शिरायाश्चपिप्पिटश्चैव कफग्रथितकोऽर्जुनः॥

इदानीं शुक्लभागगतरोगान् बुधैः प्रोक्तानाह, तथा शुक्लगता इत्यादि।—चतुर्नवतिनेत्ररोगसङ्ख्याविवरणविषयात् शुक्लगतरोगा अत्र त्रयोदश कथिताः। शिरोत्पातशिराहर्षौ द्वावत्र रोगौ कथितौ, तावेव माधवसङ्ग्रहे तु सर्वाक्षिरोगान्तर्गतौ पठितौ, तस्मात् तत्रैकादश शुक्लजा इत्यर्थः। अत्राचार्य्येण तु शुक्लभागे शिरागतदोषविकृतभावादुक्ताविमौ दोषौ, यतः शिराणामुत्पातः उपद्रवः, स च दोषविशेषात् भवति इत्यभिप्रायः। शिरोत्पातवत् शिराहर्षोऽपि; यदुक्तम्—"अवेदना वाऽपि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः। मुहुर्विरज्यन्ति च याः स तादृक् व्याधिः शिरोत्पात इति प्रदिष्टः॥" (सु० उ० ६अ०) इति। शिराहर्षः प्रसिद्ध एव; यतः,—"मोहात्शिरोत्पात उपेक्षितस्तु जायेत रोगस्तु शिराप्रहर्षः। ताम्राभमस्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुञ्च॥" (सु० उ० ६अ०) इति। शिराजाल इति—यत्रानुलोमविलोमस्थितानां शिराणां निचयविरचितत्वेन जालस्येवाकृतिर्दृश्यते स शिराजालः कथितः; तथा हि—"जालाभः कठिनशिरो महान् सरक्तः सन्तानः स्मृत इह जालसंज्ञितस्तु" (सु० उ० ४अ०) इति। शुक्तिक इति—यत्र जलशुक्तिनिभा बिन्दवो भवन्ति तेन शुक्तिक इति नेत्ररोगविशेषः; तथा हि—"श्यावाः स्युः पिशितनिभाश्च बिन्दवो ये शुक्त्याभाः सितनियताः स शुक्तिसंज्ञः" (रो० वि० नेत्रशुक्ल०) इति। शुक्लार्मेति—सम्यक् श्वेतभावत्वात् शुक्लार्मेति; तद्यथा—"समं सितं मृदु शुक्लार्म शुक्ले तद्वर्द्धते चिरात्" (रो० वि० नेत्रशुक्ल०) इति। अधिमांसार्मेति—यत्र यकृन्निभमर्म भवति; यतः,—"पृथु मृद्वधिमांसार्म बहलञ्च यकृन्निभम्" (रो० वि० नेत्रशुक्ल०) इति। प्रस्तार्य्यर्मेति—प्रस्तारि प्रसरणशीलं यन्मार्म भवति; यदुक्तं—"प्रस्तार्य्यर्म तनु स्तीर्णं श्यावं रक्तनिभं सिते" (रो० वि० नेत्रशुक्ल०) इति। पिष्टक इति—पिष्टवत् पिष्टकत्वेन धूल्यादिव्याप्तादर्शतुल्यमित्यर्थः; तद्यथा—"श्लेष्ममारुतकोपेन * यच्छुक्ले मांसमुन्नतम्। पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम्॥" इति। शिरायाश्चपिप्पिटमिति—शुक्लभागस्थिताः पिडका यदा शिराहता

* "शुक्ले पिष्टं समुन्नतम्" इति पाठः माधवसङ्ग्रहे।

स्नायुर्मं शोणितार्मं स्यादिति शुक्लगता गदाः ॥ १६१ ॥

तत पञ्चनेवकृष्णभागगतरोगाणां विवरणम्।—

तथा कृष्णसमुद्भूताः पञ्च रोगाः प्रकीर्त्तिताः।

भवन्ति तदा शिराचिप्पिटं कथितम्, एतदेवान्यत्र शिराजाः पिडकाः इति प्रतिपादितम्; यतः,—"शुक्लस्थाः सितपिडकाः शिरावृता याश्च विद्यादसितसमीपजाः शिराजाः" (सु० उ० ४ अ०) इति। एके "शिरायाश्चिप्पिटश्चैव" इत्यस्य स्थाने "शिरायाः पिडकाश्चैवम्" इति पठन्ति, तत्रापि स एवार्थः। कफग्रथितक इति —यत्र नयनासिते वारिविन्दुसदृशमनागुच्छूनता भवति; यदुक्तं—"कांस्याभोऽमृदुरथ वारिविन्दुकल्पो विज्ञेयो नयनसिते बलाससंज्ञः" (री० वि० नेत्रशुक्ल०) इति। बलाससंज्ञ इत्यत्र पदैकदेशग्रहणत्वाद्बलासग्रथितम् इत्यभिधानम्; तथा च विदेहः,—*"मारुतोत्पीडितः श्लेष्मा शुक्लभागे व्यवस्थितः। जलविन्दुरिवोच्छूनोऽमृदुः शोफः समुद्भवेत् ॥ बलासग्रथितं नाम भीषजं तत्समण्डलम् ॥" इति। अर्जुन इति—यत्र शुक्लभागे रक्तविन्दुरिवोच्छूना मृदुर्विन्दुको भवति सोऽर्जुनसंज्ञः; तद्यथा —"एको यः शशरुधिरोपमश्च विन्दुः शुक्लस्थो भवति तमर्जुनं वदन्ति" (सु० उ० ४ अ०) इति। स्नायुर्मेति—इदञ्च प्रस्तार्यर्मोद्भवं भवति; यतः,—"स्थिरं प्रस्तारि मांसाढ्यं शुष्कं स्नायुर्म पञ्चमम्" (री० वि० नेत्रशुक्ल०) इति। विदेहोऽप्येवमेव; यथा—"प्रस्तारिणोऽर्मणः स्रावं निरुणद्धि यदाऽनिलः। विना स्रावं विशुष्कं तत् स्नायुर्मेति प्रकीर्त्तितम् ॥" इति। † अधिमांस इति—मांसस्योपचयादत्राधिमांससंज्ञः। तन्त्रान्तरे त्वयमेव रक्तजत्वात् रक्तार्मेति सञ्ज्ञयाऽभिहितः, एकपटलस्थानगतत्वान्मांसरक्तयोः; तथा हि—"पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते" (री० वि० नेत्रशुक्ल०) इति। इति पूर्वोक्तप्रकारेण शुक्लगतरोगास्त्रयोदशसङ्ख्या उक्ता इत्यर्थः ॥ १६०।१६१ ॥

तथेति।—नेत्ररोगगणनाप्रस्तावे कृष्णभागगतरोगाः पञ्चसङ्ख्याका अधुना

---

* "मारुतोत्पीडितः श्लेष्मा शुक्लभागे व्यवस्थितः। जलविन्दुरिवोच्छूनो ह्यमृदुः कफसम्भवः ॥ बलासग्रथितं नाम तं शोथं तत्समादिशेत् ॥" इति मधुकोषधृतविदेहपाठः।

† "अधिमांस" इत्यत्र मूलोक्तः "शोणितार्म" इति पाठः सङ्गतः तन्त्रान्तरदर्शनात् अधिमांसार्मणः प्राक्पठितत्वाच्च।

शुद्धशुक्लं शिराशुक्लं क्षतशुक्लं तथाऽजका ॥
शिरासङ्गश्च सर्वेऽपि प्रोक्ता कृष्णगता गदाः ॥ १६२ ॥

प्रतिपाद्यन्ते, तत्रादौ शुद्धशुक्लमिति—शुक्लमत्र पुष्पशब्दवाच्य, "फुली" इति लोके। शुद्धत्वमत्र साध्यतमत्वादव्रणत्वाच्च, अतस्तन्त्रान्तरेऽव्रणशुक्लमित्युच्यते; तद्यथा—"स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासम्। वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥" (गो० वि० नेत्रकृष्ण०) इति। एतदेव कृच्छ्रसाध्यम् असाध्यञ्च भवति; तद्यथा—"गम्भीरजातं बहलञ्च शुक्लं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम्। विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्ममदृष्टिकृच्च। द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्जनीयम ॥" (सु० उ० ५ अ०) इति। अन्यादृशमप्यसाध्यं प्रसङ्गतो लिख्यते; यथा—"उष्णाश्रुपातः पिडका च कृष्णे यस्मिन् भवेन्मुद्गनिभञ्च शुक्लम्। तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत् तित्तिरिपक्षतुल्यम ॥" (सु० उ० ५ अ०) इति। शिराशुक्लन्तु माधवेनासाध्यशुक्लावस्थायां पठितं, यतस्तत्र चत्वार एव कृष्णगतरोगाः सङ्गृहीताः, अस्मेन चिकित्सोपयोगवशात् पृथग्गणितं न दोषः। क्षतशुक्लमिति—क्षतं प्रहारः, तथैव शुक्लं यत्र दृश्यते, येन सूच्यग्रेणेव छिन्नाभं भवतीत्यभिप्रायः, तस्मात् तन्त्रान्तरे सव्रणशुक्लमिति संज्ञा; तथा हि—"निमग्नरूपन्तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै। स्रावं स्रवेदुष्णमतीव यच्च तत् सव्रणं शुक्लमुदाहरन्ति ॥" (गो० वि० नेत्रकृष्ण०) इति। विदेहेऽप्युक्तं—"रक्तराजीनिभं कृष्णे छिन्नाभं यच्च लक्ष्यते। सूच्यग्रेणेव तच्छुक्लमुष्णाश्रुस्रावि सव्रणम् ॥" इति। अस्यासाध्यत्वावस्थावर्णनापि एतादृशलक्षणान्वितं साध्यमेव; यदुक्तं—"दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेच्च। अवेदनं वा न च युग्मशुक्लं तत् सिद्धिमायाति कदाचिदेव ॥" (गो० वि० नेत्रकृष्ण०) इति। अजकेति—अजापुरीषसदृशं यद्भवति; तथा हि—"अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्रः। विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत ॥" (गो० वि० नेत्रकृष्ण०) इति। अत्र तृतीयत्वग्गतत्वान्मेदसः प्रचयो बोद्धव्यः; यदुक्तं विदेहे—"कृष्णेऽक्ष्णोर्यद्भवेच्छुक्लं छागलीविट्समप्रभम्। सान्द्रपिच्छिलरक्तास्रं त्रिलग्नमजकेति सा ॥" इति। शिरासङ्गश्चेति—नेत्रगतशिराणां सङ्गोऽप्रवृत्तिर्यत्र * तेनाक्षिपाकात्ययो भवति, तस्मादन्यत्राक्षिपाकात्यय इति नाम्ना प्रसिद्धः;

* अक्षिपाकात्ययेन सह वाग्भटीयशिरासङ्गस्य सादृश्यं किमपि न दृश्यते, तथा च—"दाहहर्षवन्त्यः शिराहताः। कृष्णासन्नाः शिरासञ्ज्ञाः पिटिकाः सर्षपोपमाः ॥"

तत्र सप्तविंशतिनेत्रदृष्टिगतरोगाणां विवरणम् ।—

**काचन्तु षड्विधं ज्ञेयं वातात् पित्तात् कफादपि ।**
**सन्निपाताच्च रक्ताच्च षष्ठं संसर्गसम्भवम् ॥ १६३ ॥**
**तिमिराणि षडेव स्युर्वातपित्तकफैस्त्रिधा ।**

तथा हि—"श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलन्तु । तमक्षिपाकात्ययमक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः ॥" ( रो० वि० नेत्रकृष्ण० ) इति । अक्षिपाकात्ययः पूर्वतो वक्ष्यमाणसर्वगतरोगे गणितः, तस्मात् शिरासङ्गोऽत्र असाध्यकृष्णगतरोगविषये द्रष्टव्य इति समीचीनः पन्थाः । एवं पञ्च कृष्णगता रोगाः प्रोक्ताः ॥ १६२ ॥

अथ षड्विधं काचमाह, काचन्त्विति ।—काचन्तु लिङ्गनाशस्य भेद एवेत्येके ; यतः,—"स एव लिङ्गनाशस्तु नीलिका-काचसंज्ञितः" ( सु० उ० ७ अ० ) इति । नेत्राणां पटलभेदादपि तृतीयपटलगतं काचमित्युच्यते ; यतः,—"तृतीये पटले काचं चतुर्थे नीलिकाह्वयम्" इत्यादि । एके तिमिरादीनां निदानपरम्परयाऽवस्था दर्शिता ; तथा हि—"तिमिरं रागतां याति रागः काचत्वमेव च । काचात् सञ्जायते नीलो तदाऽन्धो जायते नरः ॥" इति । अत एवाह माधवः,—* "साध्यमप्राप्तरागं स्यात् तिमिरं हि क्रियावतः । याप्यं सम्प्राप्य रागं स्याद्वर्ज्यं पटलतां गतम् ॥" इति । पटलानां कथनं दृष्टिगतरोगे दर्शयिष्यामः । षड्विधत्वमस्य दोषविशेषाद्भवति, यदाह विदेहः,—"यथास्वं रज्यते दृष्टिर्दोषैस्त्रिपटलाश्रितैः । चतुर्थपटलप्राप्तैर्मण्डलं रज्यते तु तैः ॥" इति । एकजातीयतया त्रिचतुःपटलगतानां रोगाणां तिमिरकाचनीलिकासंज्ञितानां दोषभेदाः षट्सङ्ख्या एव बोद्धव्याः, तेषां स्वरूपं वक्ष्यमाणतिमिरे दर्शयिष्यामः । रागोऽपि तन्त्रान्तरे षड्विधः प्रतिपादितः दोषविशेषभेदात् ; प्रसङ्गतोऽपि तानाह ; तथा हि—"रागोऽरुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात् । कफात् सितः शोणितजः सरक्तः समस्तदोषप्रभवो विचित्रः ॥" ( रो० वि० नेत्रदृष्टि० ) इति । अत्रापि तिमिरसम्बन्धि परिम्लायि षष्ठं ज्ञातव्यम् । तिमिराणीति ।—तिमिरन्तु दृष्टिनाशस्य मूलमिति

---

( वा० उ० १० अ० ), किञ्च शिरासङ्गो वाग्भटेन नेत्रशुक्लगते पठितः, सौश्रुतः अक्षिपाकात्ययस्तु कृष्णमण्डलगत इत्यपि सुधीभिर्द्रष्टव्यम् ।

* श्लोकोऽयं माधवग्रन्थे कुत्रापि न दृश्यते ।

संसर्गेण च रक्तेन षष्ठं स्यात् सन्निपाततः॥ १६४॥

प्रसिद्धम; यदुक्तं—"मूलं दृष्टिविनाशस्य तिमिरं समुदाहृतम्। क्रियाभिस्त्वरितं तस्मात् तस्य कुर्य्याच्चिकित्सितम॥" इत्यादि। तस्मात्तदेव तिमिर पटलेषु दोषवर्णभेदेन रागकाचनीलिकादिसंज्ञं भवति, तत् पूर्वं दर्शितमेव। तदेतच्च नानारूपं भवति नानाकृतिरूपदर्शनात्; "एकदेशे तु यो दोषो दृष्ट्यां तिष्ठति पीड़तः। यत्संस्थानः स भवति तादृशं तेन पश्यति॥" इति। एकादिव-चतुर्थपटलगतलिङ्गानि माधवसङ्ग्रहे ज्ञातव्यानि, ग्रन्थगौरवभयान्नाव लिखितानि। साङ्गधरस्तु रूपभेदो लिख्यते; यथा—"तत्र वातेन रूपाणि भ्रमन्तीव च पश्यति। आविलान्यरुणाभानि व्याविद्धानीव मानवः॥" (सु० उ० ७ अ०) इति। पित्तेन रूपमाह—"पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान्। नृत्यतश्चैव शिखिनः सर्वं नीलञ्च पश्यति॥" (रो० वि० नेत्रदृष्टि०) इति। कफेन रूपमाह—"कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च। पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रमेवाभ्र-सम्प्लवम्॥ सलिलप्लावितानीव परिजाड्यानि मानवः॥" (रो० वि० नेत्रदृष्टि०) इति। केचिदन्यथा कफलक्षणानि पठन्ति; यदुक्तं—"गौरचामरगौराणि श्वेताभ्र-प्रभितान्यपि। यत्र पश्येदसूक्ष्माणि कफाद्भवाभ्रसम्प्लवम्॥" इति। संसर्गरूपमाह, संसर्गोऽत्र पित्तरक्तयोः कथितः; तेन तन्त्रान्तरे परिम्लायिसंज्ञं तिमिरं संसर्ग-शब्देनाह; तथा चोक्तं—"पित्तं कुर्य्यात् परिम्लायि मूर्च्छितं रक्ततेजसा। पीता दिशस्तु खद्योतान् भास्करश्चापि पश्यति॥ विकीर्य्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च॥" (रो० वि० नेत्रदृष्टि०) इति। परिम्लायितिमिरे लक्षणान्तरमप्याह—*"अरुणं मण्डलं दृष्ट्यां स्थूलकाचारुणप्रभम्। परिम्लायिनि रोगे स्यात् म्लायि नीलञ्च मण्डलम्॥" (रो० वि० नेत्रदृष्टि०) इति। मिलितरक्तपित्ताभ्यामित्यर्थः, यदुक्तं—"विदधाति परिम्लायि पित्तं रक्तेन सङ्कुलम्। तेन पीता दिशः पश्येदुद्यन्त-मिव भास्करम्॥" इत्यादि। रक्तेन रूपमाह—"पश्येद्रक्तानि रक्तेन विविधानि तमांसि च। हरितान्यथ कृष्णानि पीतान्यपि च मानवः॥" इति। सान्निपातेन

* अरुणमित्यादि लक्षणं वातिकस्य रागस्य न तु परिम्लायिनः, तथा च मधुकोषः, —"उद्दिष्टक्रमेण वातिकपैत्तिकरागस्यैव विशिष्टलक्षणमाह, अरुणं मण्डलमित्यादि। परिम्लायि न इत्यादिना परिम्लायिनो विशिष्टलिङ्गम्। अत्र गदाधरस्तु 'रक्तजं मण्डलं दृष्ट्या स्थूलकाचानलप्रभम्' इति पठित्वा एतदपि परिम्लायिलक्षणमाह—" इत्यादि।

लिङ्गनाशः सप्तधा स्यात् वातात् पित्तात् कफेन च।
त्रिदोषैरुपसर्गेण संसर्गेणासृजा तथा ॥ १६५ ॥

रूपमाह—"सन्निपातेन चित्राणि विप्लुतानीव पश्यति। बहुधा च द्विधा वाऽपि सर्वाण्येव समन्ततः ॥ हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च मानवः ॥"(सु० उ० ७ अ०) इति। लिङ्गेति।—लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गशब्देन दृष्टिरुच्यते, तस्य नाशो लिङ्गनाशः; यदुक्तं—*"रूपाणां लिङ्गनाशाल्लिङ्गं तन्नाशो लिङ्गनाशकः" इत्यादि। नाशस्तु तिमिरेणैव दृष्टेः सर्वतोऽवरोधात् प्रतिपादितः; तथा हि—"तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः। रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतः परम् ॥ अस्मिन्नपि तमोभूते नातिरूढे महागदे। चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः। निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ॥" (सु० उ० ७अ०) इति। वातादिदोषभेदाः षट् ये तिमिरे दर्शितास्ते एवात्रापि ज्ञातव्या इत्येके, एकपटलगतदोषसाधर्म्यात्। अन्ये तु वक्ष्यमाणमण्डलगतलक्षणानि मन्यन्ते, तान्यस्यैवाग्रे लिखितानि। सप्तमो भेदस्तु संसर्गः कथ्यते, स तु बाह्यगताख्यो निमित्तानिमित्तागन्तुकभेदाभ्यां द्विधा भवति; तद्यथा—"बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च" (सु० उ० ७ अ०) इत्यादि। तत्र निमित्ततो द्विधा, एकः शिरोऽभितापात् भवति, अपरो लगुडादीनामभिघातनिमित्तः; यतः,—"निमित्ततस्तत्र शिरोऽभितापात् ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च" (सु० उ० ७अ०) इत्यादिवचनात् शिरोऽभि सन्तप्यते येन सः शिरोऽभितापः, स तु विषकुसुमादिगन्धवाहिपवनस्पर्शनादिः, तेन मस्तकोपघातात्तत्रगतरक्तप्रकोपः दृष्टिशक्तेरपि व्याघातः। अभिघातनिमित्तमाह—"विदीर्य्यते सीदति हीयते वा नृणामभीघातहता च दृष्टिः" (सु० उ० ७अ०) इति। निमित्तजो यथा—"सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्करस्य। हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसञ्ज्ञः ॥ तत्राक्षि विस्पष्टमिवावभाति वैदूर्य्यवर्णा विमला च दृष्टिः ॥" (सु० उ० ७अ०) इति। ननु विमलेत्यनेन दोषजनिततिमिररागकाचादिरहिता दृष्टिर्भवति, तत् कथं भौतिकेन्द्रियस्यादुष्टस्यापि शक्तिनाशः? उच्यते—देवादयो भौतिकेन्द्रियमदूषयन्त एव शक्तिमुपघ्नन्ति, यदुक्तं चरके—"देवादयोऽपि हि महानुभावाः न दूषयन्तः पुरुषस्य देहम्। विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्य्यकान्तौ ॥" (च० चि० उन्माद०) इति। लिङ्गनाशेऽपि कालादिना

* रूपाणां ज्ञानजननात् रूपाणां ग्रहणादिति वा पाठः सङ्गतः, लिङ्गनाशात् लिङ्गम् इत्यस्य निरर्थकत्वात्।

**अष्टधा दृष्टिरोगाः स्युस्तेषु पित्तविदग्धकम्।**
**अम्लपित्तविदग्धञ्च तथैवोष्णविदग्धकम्॥ १६६॥**

वातादिदोषस्यैव क्षयात् कदाचिद्दर्शनं भवतीत्याहुरेके ; यतः,—"दोषक्षयात् कदाचित् स्यात् स्वयं तत्र च दर्शनम्" ( सु० उ० ७अ० ) इति। अन्ये कर्मसंस्कारित ( ? )-वातादिदोषक्षयादित्याहुः। तेषामेव मण्डलगतरागः केषाञ्चिन् ज्ञापनार्थं लिख्यते ; यथा—"अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा। पित्तान् मण्डलमानीलं कांस्याभं पीतमेव च॥ श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम्। चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः॥ सङ्कुचत्यातपेऽत्यर्थं छायायां प्रसरत्यपि। मृज्यमाने च नयने मण्डलं तद्विसर्पति॥" ( सु० उ० ७अ० ) इति। रक्तजमाह—"प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम्। दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे॥" ( सु० उ० ७अ० ) इत्यादि। वैद्यविषयनिमित्तं कथ्यते ; "वैद्य एव कफात्मकः" इत्यादिवचनात्। अष्टधेति—दृष्टिमण्डलगताः रोगाः कथिताः। दृष्टिप्रमाणन्तु सुश्रुतेनोक्तम् ; तद्यथा—"मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम्" ( सु० उ० ७अ० ) इति। मसूरार्द्ध-दलमात्रामित्यभिप्रायः ; निमिरप्याह—"पञ्चभूतात्मिका दृष्टिर्मसूरार्द्धदलोन्मितिः" इति। तस्यां चत्वारि पटलानि सन्ति, रसरक्ताश्रयं बाह्यं, द्वितीयं मांससंश्रयं, तृतीयं मेदःसंश्रयं, चतुर्थं कालकास्थिसंस्थितम् इति ; तदुक्तं सुश्रुते—"तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम्। मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम्॥" ( सु० उ० १अ० ) इत्यादि। तेष्वादौ पित्तविदग्धमाह—दुष्टेन पित्तेन विदग्धदृष्टिर्भवति ; यदुक्तं—"पित्तेन दुष्टेन यदा तु दृष्टिः पीता भवेत् यस्य नरस्य किञ्चित्। पीतानि रूपाणि च मन्यते यः स मानवः पित्तविदग्धदृष्टिः॥" इति। अम्लपित्तविदग्धमिति—अम्लपित्ते वमनविषयत्वात् दृष्टेरभिघातः, वमनन्तु कफं विना न सम्भवति, तस्मात् *तस्यान्तरोक्ता श्लेष्मविदग्धदृष्टिरियम्, तदुक्तं—"तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि च मन्यते सः" ( सु० उ० ७अ० ) इति। अत्रापि ताद्धर्म्याम्लकत्वात् श्लेष्मणि कफाम्लसंज्ञेति

* वाग्भटोक्तिनामेन अम्लपित्तविदग्धेन सह श्लेष्मविदग्धदृष्टेः लक्षणसाम्यं किमपि नास्ति, तत्र सरक्तविदोषजन्यं चिकित्साऽपि तस्य न वमनसाध्या ; तथा च—"भृश-मम्लाशनाद्दोषैः सास्रैर्या दृष्टिराचिता। सक्लेदकण्डूकलुषा विदग्धाम्लेन सा स्मृता॥" ( वा० उ० १२अ० )। "धूमराध्म्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा। स्निग्धं विरेचयेत् शीतैः शीतैर्दिह्याच्च सर्वतः॥" ( वा० उ० १३अ० ) इति।

नकुलान्ध्यं धूमरान्ध्यं रात्र्यान्ध्यं ह्रस्वदृष्टिकः।
गम्भीरदृष्टिरित्येते रोगा दृष्टिगता मताः॥ १६७॥

व्याख्यानयन्ति (?)। उष्णविदग्धकमिति—* उष्णं घर्मादिकं, तेन विदग्धदृष्टिर्भवति, अत एव तन्त्रान्तरे दिवान्ध्यः कथितः; "प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येन्निशि वीक्षते च। रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत॥" (सु० उ० ७अ०) इति। नकुलान्ध्यमिति—नकुलस्य दृष्टिः यथा प्रतिभासते वर्णेन तथा चक्षेऽर्थः; तथा हि—"विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्। चित्राणि रूपाणि दिवा स पश्येत स वै विकारो नकुलान्ध्यसंज्ञः॥" (सु० उ० ७अ०) इति। दिवा स पश्येदित्युक्तत्वात् रात्रौ न पश्यतीत्यवगन्तव्यम्। धूमरान्ध्यो धूमदर्शी कथितः, यतो धूमाकुलान् सर्वभावान् पश्यति; यदुक्तं—"शोक-ज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः। धूमांस्तथा पश्यति सर्वभावान् स धूमदर्शीति नरः प्रदिष्टः॥" (रो० वि० नेत्रदृष्टि०) इति। दिवा धूमान् पश्यति, न तु रात्रौ, पित्तस्य क्षीणत्वात् इति व्याख्यानयन्ति। † रात्र्यान्ध्यमिति—रात्र्यान्ध्यं प्रसिद्धम्; तद्यथा—"त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य। दिवा स सूर्य्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात्॥" (सु० उ० ७अ०) इति। ह्रस्वदृष्टिक इति—ह्रस्वरूपदर्शनात् ह्रस्वदृष्टिकः; यतः,—"यो ह्रस्वजाड्यो दिवसेषु कृच्छ्रात् ह्रस्वानि रूपाणि च तेन पश्येत्" (रो० वि० नेत्रदृष्टि०) इति। अत्र पीतो रागो दृष्टिमध्यगतः; यदुक्तं—"दृष्टिमध्यस्थिते दोषे महद्ध्रस्वञ्च पश्यति। रात्रौ पित्ताल्पभावत्वात् तानि रूपाणि पश्यति॥" इति। गम्भीरदृष्टिरिति—यद्दृष्टिरभ्यन्तरतः सङ्कुच्य विरूपा भवति; तद्यथा—"दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरतश्च याति। रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः॥" (सु० उ० ७अ०) इति। एते दृष्टिगता रोगा दर्शिताः॥ १६३—१६७॥

* उष्णविदग्धस्य लक्षणं वाग्भटे यथा दृश्यते, तेन उष्णविदग्धदृष्टिर्निशान्ध्य एव भवति, न तु दिवान्ध्यः; तथा च—"उष्णतप्तस्य सहसा शीतवारिनिमज्जनात्। त्रिदोष-रक्तसम्पृक्तो यात्यूर्द्धं तेतोऽक्षिणी॥ दाहोषे मलिनं शुक्लमह्न्याविलदर्शनम्। रात्र्या-न्ध्यञ्च जायेत विदग्धोष्णेन सा स्मृता॥" (वा० उ० १२अ०) इति। दिवाऽन्ध्यः पित्त-विदग्धदृष्टेरेव अवस्थान्तरमात्रम्, एतच्च प्रमाणादिकं विस्तारभयादत्र न प्रदर्शितं, नेत्रदृष्टिगतरोगाधिकारे पित्तविदग्धदृष्टिव्याख्याने मधुकोषो द्रष्टव्यः।

† अस्यैव रात्र्यान्ध्यस्य अवस्थाविशेषः श्लेष्मविदग्धदृष्टिरिति मधुकोषनिबन्धसङ्ग्रहौ।

अथ षोडशनेत्रसर्वगतरोगाणां विवरणम् ।—

**अभिष्यन्दाश्च चत्वारो रक्ताद्दोषैस्त्रिभिस्त्रिधा ।**
**चत्वारश्चाधिमन्थाः स्युर्वातपित्तकफास्रतः ॥ १९८ ॥**

अभिष्यन्दा इति।—सर्वनयनरोगहेतुत्वात् सर्वनयनगतोऽभिष्यन्द इति; यतः सुश्रुते सर्वनयनगताः सप्तदश गदिताः ; तद्यथा—चत्वारोऽभिष्यन्दाश्चत्वारोऽधिमन्थाः नेत्रपाकादयो नव इति। अत्र चिकित्साविशेषदोषविशेषभेदाच्च पृथक् लिखितो न दोषः। ससंरम्भपाकान्वितोऽभिष्यन्दरोगः, स चतुःप्रकारो भवति दोषभेदेन ; तेषु वाताभिष्यन्दमाह, वाताभिष्यन्दे नेत्रे ईदृशानि लक्षणानि भवन्ति ; तद्यथा— "निस्तोदनस्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोऽभितापाः। विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति॥" (सु० उ० ६अ०) इति। पित्तजमाह, तद्यथा —"दाहप्रपाकौ शिशिराभिनन्दा धूमायनं वाष्पसमुच्छ्रयश्च। उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति॥" (सु० उ० ६अ०) इति। कफजमाह,—"उष्णाभिनन्दा गुरुताऽक्षिशोथः कण्डूपदेहावतिशीतता च। स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति॥" (रो० वि० नेत्रसर्व०) इति। रक्ताभिष्यन्दमाह—"ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति॥" (सु० उ० ६ अ०) इति। अप्रतिक्रियमाणत्वात् वृद्धैरभिष्यन्दैरेव चत्वारोऽधिमन्था जायन्ते; तथा हि— "वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम्। तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः॥" (सु० उ० ६ अ०) इति। शिरसोऽर्द्धवेदनाजनकत्वाच्चाभिष्यन्दतो भिन्नः सङ्गृहीतः ; यदुक्तम्—"उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा। शिरसोऽर्द्धञ्च तं विद्यादधिमन्थं स्वलक्षणैः॥" (सु० उ० ६ अ०) इति। न केवलं तीव्रवेदनादिकारित्वात् भिन्न एव, अपि तु दृष्टिनाशकत्वादिति ; तथा ह्युक्तं—"हन्याद्दृष्टिं श्लैष्मिकः सप्तरात्रादधिमन्थो रक्तजः पञ्चरात्रात्। षड्रात्राद्वा वातिको वै निहन्यान्मिथ्याचारात् पैत्तिकः सद्य एव॥" (रो० वि० नेत्रसर्व०) इति। कालावधिरेव व्याधिस्वभावादञ्जनप्रलेपनादिविधानार्थमञ्जनादिनिषेधार्थञ्च। तन्त्रान्तरेऽपि सामनिराममनेकरोगविषयत्वाद्धेयोपादेयत्वं प्रतिपादितम् ; तद्यथा—"स्वेदः प्रलेपस्तिक्ताश्च धूमो दिनचतुष्टयम्। लङ्घनञ्चाक्षिरोगाणामामानां पाचनानि षट्॥ अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम्। नेत्ररोगेषु सामेषु स्नानञ्च परिवर्जयेत्॥" इति। सामनिरामलक्षणं प्रसङ्गतो लिख्यते ; यथा—"उदीर्णवेदनं नेत्रं रागशोथसमन्वितम्। घर्षनिस्तोदशूलाश्रु-

सर्वाक्षिरोगाश्चाष्टौ स्युस्तेषु वातविपर्य्ययः।
अल्पशोफोऽन्यतोवातस्तथा पाकात्ययः स्मृतः॥ १६८॥

युक्तमामान्वितं विदुः॥"(रो० वि० नेत्रसर्वं०) इति। निरामलक्षणमाह—"मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता। प्रसन्नवर्णता चाक्ष्णोः सम्पक्कं दोषमादिशेत्॥" (रो० वि० नेत्रसर्व०) इति। वातपित्तकफरक्तलक्षणान्यवाभिष्यन्दोक्तानि च बोद्धव्यानि। सर्वाक्षिव्यापकत्वात् सर्वाक्षिग्रहणं, न चैकदेशस्थत्वात्। अक्षिप्रमाणन्तु सुश्रुतेनोक्तम्; यथा—"विद्याद्द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम्। द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदम्॥ सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम्॥" (सु० उ० १ अ०) इत्यादि। अष्टाविति—अष्टभेदाः। तेष्वादौ वातविपर्य्ययमाह, पर्य्यायेण क्रमेण कदाचिद्भ्रुवोः कदाचिल्लोचनयोर्वायुर्लोचनरुजां यत्र करोति स वातविपर्य्ययः; यदुक्तं—* "वारं वारञ्च पर्य्येति भ्रुवौ नेत्रे च मारुतः। रुजश्च विविधास्तीव्राः ज्ञेयो वातविपर्य्ययः॥" (रो० वि० नेत्रसर्व०) इति। अल्पशोफ इति—अल्पशोफो नेत्रपाकभेदः, स च शोथरहित इत्यर्थः; यतो नेत्रपाको द्विधा भवति, एकः शोथजः अपरस्त्वशोथज इति; तथा चोक्तं—"कण्डूपदेहाश्रुयुतः पक्कोडुम्बरसन्निभः। संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः॥ शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे॥" (सु० उ० ६ अ०) इति। अन्यतोवात इति—यथा—"यस्यावटुकर्णशिरोहनुस्थो मन्यागतो वाऽप्यनिलोऽन्यतो वा। कुर्य्याद्रुजं वै भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति॥" (सु० उ० ६ अ०) इति। अन्यतो वेत्यनेनोक्तप्रदेशादितरत्र पृष्ठे, अन्यत्र वातस्य कारणस्यावस्थानम्, अन्यत्र लोचने भ्रुवि च रुजां करोतीति अन्यतोवातः। विदेहेऽप्युक्तं—"मन्यामाश्रित्य वायुश्चलितः पृष्ठतोऽपि वा। करोति भेदं निस्तोदं शङ्खे चाक्ष्णोर्भ्रुवोस्तथा॥ तमाहुरन्यतोवातं रोगं दृष्टिविदो जनाः॥" इति। पाकात्यय इति—यद्यपि † सुश्रुतेऽक्षिपाकात्ययः

* वाग्भटे वातविपर्य्ययो दृश्यते, परन्तु सुश्रुतायुक्त-वातपर्य्यायेण सह तस्य सर्वथा लक्षणसाम्यं नास्ति, तथा च—"तद्वत्स्वयं भवेञ्जिह्मामूलं वातविपर्य्यये" (वा उ०१५ अ०) वाग्भटोक्तेनानेन लक्षणेन सह "वारं वारञ्च—" इत्यादि लक्षणस्य भ्रुनेत्रयोः रुजाव्यतिरिक्तं साम्यं नास्ति। वाग्भटोक्तस्य तद्वत इत्यस्य अन्यतोवात इव इत्यर्थः। सुश्रुते वातपर्य्यायः इति नाम। "ज्ञेयो वातविपर्य्ययः" इत्यत्र "स ज्ञेयो वातपर्य्ययः" इति माधवधृतपाठः।

† अयमक्षिपाकात्ययो वाग्भटेनापि सर्वाक्षिरोगविज्ञाने पठितः; अन्ये, सुश्रुतोक्तकृष्णमण्डलगताक्षिपाकात्ययः अयञ्च सर्वगताक्षिपाकात्ययः नैकविधः, उभयोर्लक्षणवैषम्यात्; तथा च—"पाकोऽन्यैर्लक्षणैस्तथा। अक्षिपाकात्यये शोफः संरम्भः कलुषा-

तथा शुष्काक्षिपाकश्च शोफोऽध्युषित एव च।
हताधिमन्थ इत्येते रोगाः सर्वाक्षिसम्भवाः॥ १७०॥

कृष्णभागगतरोगे पठितमप्यव्रण सर्वासितमण्डलव्यापकत्वेन तीव्ररुजाकरत्वेन च शार्ङ्गधरेण सर्वाक्षिगतरोगे पठितो न दोषः; तद्यथा—"संछाद्यते श्वेतनिभेन सर्वं दोषेण यस्यासितमण्डलन्तु। तमक्षिपाकात्ययमक्षिकोप-समुत्थितं तीव्ररुजं वदन्ति॥" (सु० उ० ५ अ०) इति। शुष्काक्षिपाक इति—शुष्केणाक्षिपाकेनोपहतमक्षि यत्र भवति; तथा हि—"यत् कूणितं दारुणरूक्षवर्त्म सन्दह्यते चाविलदर्शनं यत्। सुदारुणं यत् प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि॥" (रो० वि० नेत्ररोग०) इति। अयं रोगः सरक्तवातजन्यः; यदाह करालः—"कूणितं खरवर्त्माक्षि रूक्षोन्मीला-विलेक्षणम्। सदाहं सास्रतो वाताच्छुष्कपाकान्वितं वदेत्॥" इति। शोफ इति—शोफशब्दः पाकभेदः, सशोथजनेत्रपाक इत्यर्थः, यतः सुश्रुतेऽपि द्विविधोऽक्षिपाकः; तद्यथा—"स्यन्दास्तु चत्वार इहोपदिष्टास्तावन्त एवेह तथाऽधिमन्थाः। शोफान्वितोऽशोफयुतश्च पाकावित्येवमेते दश सम्प्रदिष्टाः॥" (सु० उ० ६ अ०) इत्यादि। अस्य लक्षणं कथितात्वशोथे दर्शितम्। अध्युषित इति—अम्लभोजनोत्पत्तिकत्वादम्लाध्युषित इति प्रसिद्धम्; यदुक्तं—"श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते। सदाहशोथं सास्रावमम्लाध्युषितमम्लतः॥" (रो० वि० नेत्ररोग०) इति। हताधिमन्थ इति—सकलनयनशोषकत्वाद्धताधिमन्थः; यतः,—"उपेक्षणादक्षि यदाधिमन्थो वातात्मकः सादयति प्रसह्य। रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः॥" (रो० वि० नेत्ररोग०) इति। अयं रोगो दृष्टिनिर्गमलक्षणो विहित इति केचित्; तद्यथा—"अन्तर्गतः शिरां प्राप्य यदा तिष्ठति मारुतः। स तदा नयनं प्राप्य शीघ्रं दृष्टिं निरस्यति॥ तस्यां निरस्यमानायां निर्मथ्नन्निव मारुतः। नयनं निर्मथ्याशु शूलतो हताधिमन्थने:॥" इत्ययं दृष्टिनिर्गमलक्षणः। नैवं, सकलाक्षिशोषो ऽस्य इत्युक्तत्वात् सर्वाक्षिभावे सर्वसम्मतत्वात् प्रतीतेः; यदुक्तमन्यत्रापि—"अथवा शोषयेदक्षि लोमशेनौबलादयम्। तत् पद्ममिव संशुष्क-कवसीदति लोचनम्॥ हताधिमन्थं तं विद्यादसाध्यं वातकोपतः॥" इति। एवं चतुर्नवतिनेत्ररोगा एकादशस्थानविशेषेण व्याख्याताः॥ १६८—१७०॥

श्रुता॥ अफोपादिग्धमसितं सितं प्रक्लेदरागवत्। दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः॥" (वा० उ० १५ अ०) इति। टीकाकारेणानेन यत् समाधानमुक्तं तत्र हृदं ... वैषम्यं स्फुटत्वादिति।

पञ्चविधक्लैब्यानां विवरणम्।—

**पुंस्त्वदोषास्तु पञ्चैव प्रोक्तास्तत्रेर्ष्यकः स्मृतः।**
**आसेक्यश्चैव कुम्भीकः सुगन्धी षण्डसंज्ञितः॥१७१॥**

पुंस्त्वेति।—पुंस्त्वदोषो नपुंसकशब्दवाच्यः, स च पञ्चप्रकारो भवति। तत्रेर्ष्यक-माह—अन्यव्यवायं दृष्ट्वा व्यवाये प्रवर्त्तते यः स ईर्ष्यकः; यदुक्तं—"दृष्ट्वा व्यवाय-मन्येषां व्यवाये यः प्रवर्त्तते। ईर्ष्यकः स तु विज्ञेयः—॥" (सु० शा० २अ०) इति। दृग्योनिरपीर्ष्यकापरपर्य्यायः। अत्रापि तन्त्रान्तरे पठितो हेतुर्यथा—"ईर्ष्याभिभूता-वपि मन्दहर्षावीर्ष्यारतेरेव वदन्ति हेतुम्" (च० शा० अतुल्यगोत्रीय०) इति। आसेक्य इति—यः स्वभार्य्याया योन्यादिकं स्पृष्ट्वा सङ्कल्पपूर्वकं प्रवर्त्तते स आसेक्यः। सुश्रुते तु, शुक्रं प्राश्य ध्वजदार्ढ्यं लभते यः स आसेक्यः कथितः; तदुक्तं—"पित्रोरत्यल्पवीर्य्यत्वा-दासेक्यः पुरुषो भवेत्। स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्॥" (सु० शा० २अ०) इति। अत एवासेक्यनामाऽयं षण्डो मुखयोन्यपरपर्य्यायः कथितः। कुम्भीक इति—यः पुरुषः स्वकीयपायौ अन्यपुरुषपार्श्वात् व्यवायं कारयित्वा पश्चात् स्त्रीषु विषये पुमानिव प्रवर्त्तते स कुम्भीकः; सुश्रुते—"स्वे गुदेऽब्रह्मचर्य्याद् यः स्त्रीषु पुंवत् प्रवर्त्तते। कुम्भीकः स तु विज्ञेयः—॥" (सु० शा० २अ०) इति। गुद-योनिरयं कुम्भीकापरपर्य्यायनाम्ना कथितः। अस्योत्पत्तिहेतुश्च तन्त्रान्तरे वर्णितः; यथा—"मातुर्व्यवायप्रतिघेन वक्री स्याद्बीजदौर्बल्यतया पितुश्च" (च० शा० अतुल्य-गोत्रीय०) इत्यादि। गयदासस्तु कुम्भीकोत्पत्तिहेतौ काश्यपोक्तं श्लोकमाह; यथा—"परजस्कां यदा नारीं श्लेष्मरेता व्रजेद्रतौ। अन्यसक्ता भवेत् प्रीतिर्जायते कुम्भकस्तदा॥" इति। सुगन्धीति—यो योन्यादिगन्धमाघ्राय ध्वजबलं लभते स सुगन्धीति नाम षण्डः कथितः; यदुक्तं—"यः पूतियोनौ जायेत स सौगन्धिक-संज्ञितः। स योनिशेफसोर्गन्धमाघ्राय लभते बलम्॥" (सु० शा० २अ०) इति। अयं सौगन्धिकोऽपि नासायोन्यपरपर्य्यायः। षण्डसंज्ञित इति—यः पुमान् स्त्र्याकृतिः स्त्रीचेष्टितश्च स्त्रीवदधोभूतः स्वमेढ्रोर्द्ध्वप्रदेशे अपरपुरुषात् वीर्य्यच्युतिं कारयति स षण्डः, उत्पत्तिविषयत्वात् (?); यदुक्तं—"यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते। ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः॥" (सु० शा० २अ०) इति। अयं षण्डस्त्वरेताः कथितः, ईर्ष्यकादयश्चत्वारः सरेतस इत्युक्तत्वात्; तथा हि—"आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः॥" (सु० शा० २अ०) इति॥ १७१॥

Uttarpara Jaikrishna Public Library

अष्टविधशुक्रदोषाणां विवरणम्।—

शुक्रदोषास्तथाऽष्टौ स्युर्वातात् पित्तात् कफेन च।
कुणपश्वासपित्ताभ्यां पूयाभं श्लेष्मपित्ततः॥ १७२॥
क्षीणञ्च वातपित्ताभ्यां ग्रन्थिलं श्लेष्मवाततः।
मलाभं सन्निपातेन शुक्रदोषा इतीरिताः॥ १७३॥

अष्टविधार्त्तवदोषाणां विवरणम्।—

अथ स्त्रीरोगनामानि प्रोच्यन्ते पूर्वशास्त्रतः।

---

शुक्रदोषा इति।—दोषैर्दुष्टं शुक्रं शुक्रदोष इत्युच्यते, तद्युक्ताः पुरुषाः गर्भोत्पादने न क्षमा इति * प्रयोजनं सुश्रुतवचनात्, यतः,—"वातपित्तश्लेष्मकुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषरेतसः प्रजोत्पादने न समर्था भवन्ति" (सु० शा० २अ०) इति। तत्र शुक्रं यदरुणकृष्णवर्णं भवति तोदनभेदनादिविशेषान्वितञ्च भवति तत् वातदुष्टम्। पित्तदुष्टन्तु पीतनीलादिवर्णान्वितम् ओषचोषवेदनाविशेषयुक्तञ्च। श्लेष्मदुष्टञ्च श्वेतवर्णं कण्ड्वादिवेदनान्वितञ्च। कुणपश्वासपित्ताभ्यामिति—कुणपः शवः, तस्येव गन्धो यस्य शुक्रस्य भवति, सोऽपि रक्तेन पित्तेन भवति, अनल्पञ्च भवति; चकारात् शोणितवर्णं पित्तवेदनञ्च। सुश्रुते त्वयं रक्तजः; यतः,—"कुणपगन्ध्यनल्पञ्च रक्तेन" (सु० शा० २अ०) इति। अत्र रक्तेनेति व्यपदेशो घृततैलदग्धवत्, यतो रक्तस्यापि दोषा एव दूषयितारः; तेनात्रास्रपित्ताभ्यामिति ग्रहणं न दोषः। पूयाभं श्लेष्मपित्तत इति—पित्तश्लेष्मभ्यां यत् दूषितं तत् पूयसदृशं शुक्रं भवति, वर्णवेदनाश्चात्र मिलितश्लेष्मपित्तयोरेव बोद्धव्याः। क्षीणञ्च वातपित्ताभ्यामिति—कारणैः स्वमानादल्पीभूतम्; लक्षणञ्च यथा—"दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं श्रमः। क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम्॥" (च० सू० कियन्तःशिरसीय०) इति। ग्रन्थिलं श्लेष्मवातत इति—ग्रन्थिसदृशं ग्रन्थिलं, तत् श्लेष्मवातजनितं भवति। अत्रापि द्विदोषवर्णवेदना बोद्धव्या। मलाभं सन्निपातेनेति—मलं मूत्रपुरीषं, तदाभं तद्गन्धि च यत् शुक्रं भवति तत् सन्निपातदूषितम्; सुश्रुतेऽपि—"मूत्रपुरीषगन्धि सन्निपातेन" (सु० शा० २अ०) इति। इति पूर्वोक्तप्रकारेण शुक्रदोषा ईरिताः कथिताः॥ १७२।१७३॥

अथ स्त्रीरोगेत्यादि।—स्त्रीषु भवा रोगाः स्त्रीरोगाः, न तेषां पुरुषेषु सम्भवत्वात्।

* "प्रयोजनम्" इति पाठे पर्यासङ्गतेः "ज्ञेयम्" इति पाठकरणं सङ्गतार्थकम्।

अष्टौ चार्त्तवदोषाः स्युर्वातपित्तकफैस्त्रिधा ॥
पूयाभं कुणपं ग्रन्थिं क्षीणं मलसमं तथा ॥ १७४ ॥

चतुर्विधरक्तप्रदराणां विवरणम् ।—

तथा च रक्तप्रदरं चतुर्विधमुदाहृतम् ।
वातपित्तकफैस्त्रेधा चतुर्थं सन्निपाततः ॥ १७५ ॥

विंशतिर्योनिव्यापदां विवरणम् ।—

विंशतिर्योनिरोगाः स्युर्वातात् पित्तात् कफादपि ।

---

पूर्वंशास्त्रत इति मुनिवचनात् । तेष्वादावार्त्तवदोषानाह, अष्टौ चार्त्तवदोषाः स्युरित्यादि ।—दोषैर्दुष्टमार्त्तवञ्च बीजवद्भवतीति प्रयोजनश्चकार ; यदुक्तं सुश्रुते—"आर्त्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति" ( सु० शा० २ अ० ) इति । एतेषां दोषवर्णवेदनादिभिर्विज्ञानोपायः कथिताष्टशुक्रदोषे ज्ञातव्यः ॥ १७४ ॥

तथा च रक्तप्रदरमित्यादि ।—तथेत्यनेनार्त्तवमेव कारणमसृग्दरस्येति भावः सूचितः ; यदुक्तं—"तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि । असृग्दरं विजानीयादतोऽन्यद्रक्तलक्षणात् ॥" ( सु० शा० २ अ० ) इति । सामान्यलक्षणमपि यथा—"असृग्दरो भवेत् सर्वः साङ्गमर्दः सवेदनः" ( सु० शा० २ अ० ) इति । आर्त्तवातिप्रवृत्तत्वेनासृग्दरः, तस्मात्तस्यातिस्रुतस्य लक्षणानि यथा—"तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा । दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥" ( सु० शा० २ अ० ) इति । तच्च सङ्ख्यातश्चतुःप्रकारा भवन्ति, वातपित्तकफैरित्यादि ।—तत्र वातिकमाह —"रूक्षारुणं फेनिलमल्पमल्पं वातार्त्तं वातात् पिशितोदकाभम्" ( रो० वि० असृग्दर० ) इति । पित्तजमाह—"सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्" ( रो० वि० असृग्दर० ) इति । कफजमाह—"आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु" ( रो० वि० असृग्दर० ) इति । त्रिदोषजमाह —"सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषात्" ( रो० वि० असृग्दर० ) इत्यादि ॥ १७५ ॥

विंशतिरिति ।—योनौ भवा रोगा योनिरोगाः कथिताः, ते दुष्टार्त्तवबीजदोषादिना जनिताः ; तथा हि—"विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसङ्ग्रहे । मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च ॥ जायन्ते बीजदोषाच्च दैवाच्च शृणु

सन्निपाताच्च रक्ताच्च लोहितक्षयतस्तथा ॥ १०६ ॥

ता: पृथक् ॥" ( च० चि० योनिव्यापत्० ) इति। तत्र विशेषलक्षणान्याह्रादौ वातजामाह, वातजाया: पृथगभिधानं वातजायां विशेषेण वातवेदनाप्रादुर्भावार्थं, यत: तन्त्रान्तरे उदावर्त्तावन्ध्याविप्लुतापरिप्लुतासु वातानुबन्धित्वम्; यदुक्तं—"चतसृष्वपि चाद्यासु भवन्त्यनिलवेदना:" ( सु० उ० ३८ अ० ) इति। एवं पित्तानुबन्धिन्या रक्तक्षया वामिनी प्रस्रंसिनी पुत्रघ्नी चेति चतस्र: पित्तजया सह पञ्च पैत्तिक्य:; यदुक्तं—"चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्" ( सु० उ० ३८अ० ) इति। एवं श्लेष्मानुबन्धिन्योऽत्यानन्दा कर्णिनी चरणाऽतिचरणाश्चतस्र: श्लेष्मजया सह पञ्च विज्ञेया:; यत:,—"चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत्" ( सु० उ० ३८ अ० ) इति। एवं सन्निपातजा: पञ्च विज्ञेया:, षण्ढी अण्डली विवृता सूचीवक्त्रा इति चतस्र: सान्निपातजया सह पञ्च; यत:, —"चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत्। पञ्चासाध्या भवन्तीह योनय: सर्वदोषजा: ॥" ( सु० उ० ३८ अ० ) इति। एवं सुश्रुतोक्तत्वाच्च दोषानुबन्धित्वं दर्शितम्। अत्र व्यक्तगणनासङ्कुलत्वेन पृथक्स्वरूपमधुना विधीयते, तद्यथा—वातादिति—वातजा योनिर्भवति; तथा हि—"वातजा कर्कशा स्तब्धा शूलनिस्तोदपीडिता" (च० चि० योनिव्यापत्० ) इति। पित्तादिति—पित्तजा योनि:; यथा—"अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता" ( च० चि० योनिव्यापत्० ) इत्युपलक्षणं, तेन नीलपीतसितार्त्तवा च भवतीत्यवगन्तव्यम्; तथा च तन्त्रान्तरे—"व्यापन्नकटुम्लक्षाराद्यै: पित्तजा भवेत्। दाहपाकज्वरोष्णार्त्ता नीलपीतासितार्त्तवा ॥" ( च० चि० योनिव्यापत्० ) इति। कफादिति—श्लेष्मला योनि:; तदुक्तं —"श्लेष्मला पिच्छिला योनि: कण्डूयुताऽतिशीतला" ( सु० उ० ३८ अ० ) इति। अतिशीतलेत्युपलक्षणं, तेन अवेदनादिकमपि बोद्धव्यम्; यदुक्तं तन्त्रान्तरे— "कफोऽभिष्यन्दिभिर्वृद्धो योनिं चेत् दूषयेत् स्त्रिया:। स कुर्य्यात् पिच्छिलां शीतां कण्डूयुक्तां * सवेदनाम् ॥" ( च० चि० योनिव्यापत्० ) इति। सन्निपातादिति—मिलितदोषत्रयदूषिता योनिर्भवति; तथा हि—"सर्वलिङ्गसमुत्थानं यत्र सा सन्निपातजा" इति। रक्ताच्चेति—रक्तदूषिता। यद्यपि रक्तपित्तानुबन्धिनी युगपत् पठिता, तथाऽप्यत्र रक्तस्यातिस्रवणाद्रक्तजेति व्यपदेश:; तस्मादिह रक्तजा

* "सवेदनाम्" इत्यत्र "अवेदनाम्" इति पाठ: चरकवाग्भटसम्मत:।

शुष्का च वामिनी चैव षण्ढिताऽन्तर्मुखी तथा।

* स्रंसिनी कथितेत्यभिप्रायः; तद्यथा—"प्रस्रंसिनी स्रंसते तु क्षोभिता दुष्प्रजायिनी" (च० चि० योनिव्यापत्०) इति। लोहितक्षयतो लोहितक्षया कथिता; तथा हि—"सदाहं क्षीयते रक्तं यस्याः सा लोहितक्षया" (च० चि० योनिव्यापत्०) इति। शुष्का चेति—शुष्का नष्टार्त्तवा कथिता, शुष्कं वन्ध्यमार्त्तवं यस्या भवति सा; अत एव तन्त्रान्तरे वन्ध्यायोनिः; "वन्ध्या नष्टार्त्तवा ज्ञेया" इत्यादिवचनात्। वामिनी चेति—या रजसा युतं सवातं बीजमुद्गिरेत् सा वामिनी; यथा—"सवातमुद्गिरेत् बीजं वामिनी रजसाऽन्वितम्" (सु० उ० ३८ अ०) इति। षण्ढितेति—अरजस्का भवति; तथा हि—"अनार्त्तवाऽस्तनी षण्ढी खरस्पर्शा च मैथुने" (सु० उ० ३८ अ०) इति। अन्तर्मुखीति—बृहन्मेहनपुरुषेण गृहीतायामतरुण्यास्त्वण्डली भवेत्, सा अन्तर्मुखी, अण्डवन्निःसृता योनिरित्येके, सा † अण्डलीशब्दवाच्या; यतः,—"अतिकायगृहीताया-

* रक्तजा स्रंसिनीति टीकाकारोक्तिः चिन्त्या, प्रस्रंसिन्या लक्षणेन सह सर्वथा सादृश्याभावात्, यतः प्रस्रंसिनी पित्तजा, तत्र रक्तस्रावस्य उल्लेखोऽपि न दृश्यते; मन्ये, चरकवाग्भटोक्तरक्तयोनिरेव अनेन सङ्गृहीता रक्तजनितयोनिव्यापदर्थे प्रयुक्ता, सुश्रुते रक्तजव्यापद उल्लेखाभावात्। तथा च—"रक्तपित्तकरैर्नार्या रक्तं पित्तेन दूषितम्। अति प्रवर्त्तते योन्या लब्धे बीजेऽपि साऽसृजा (साऽप्रजा)॥" (च० चि० योनिव्यापत्०) "रक्तयोन्याख्यासृगतिस्रुतेः" (वा० उ० ३३ अ०) इति। किञ्च चरकवाग्भटोक्तरक्तयोनिरेव रक्तजा इति स्वीकृते "रक्तपित्तानुबन्धिनी" इति टीकाकारोक्तिरपि सङ्गच्छते। अपरञ्च विंशतिव्यापत्सु रक्तजा शुष्का उपप्लुता प्राक्चरणा अन्तर्मुखी इति पञ्च सुश्रुते न सन्ति, चरकवाग्भटयोरपि अण्डली वन्ध्या प्रस्रंसिनी विप्लुता अत्यानन्दाख्याः पञ्च न दृश्यन्ते; किञ्च चरके या अतिचरणा वाग्भटे सैव विप्लुता, सौश्रुतविप्लुतालक्षणेन चरकवाग्भटयोः किमपि साम्यं नास्ति, सौश्रुतात्यानन्दया सह चरकवाग्भटोक्ताचरणाविप्लुतयोः लक्षणसाम्यं दृश्यते; एवञ्च मन्ये ग्रन्थकृता शार्ङ्गधरेण चरकवाग्भटयोः कतिचित् कतिचिच्च सुश्रुतोक्ता योनिव्यापत् स्वसङ्ग्रहे सन्निवेशिता, लक्षणसाम्यं क्वचिदस्ति क्वचिच्च वा नास्ति, रोगानन्त्यात् सर्वमेव प्रमाणं स्मृतिर्व्यवहरतीति। टीकाकारेणानेन शुष्कया सह वन्ध्यायाः, उपप्लुतया उदावर्त्ताया यदैक्यं प्रदर्शितं, तन्न मनोहरं लक्षणवैषम्यात् इति सुधीभिरत्र तत्र तत्र मृग्यमिति। उदावर्त्तोपप्लुतयोः पृथक् पृथक् ग्रहणं पृथक् पृथक् लक्षणञ्च चरकवाग्भटयोः परिदृश्यते इति।

† अन्तर्मुखी अण्डली इत्युक्तिश्चरकविरुद्धा; तथा च—"व्यवायमतितृप्ताया

सूचीमुखी विप्लुता च जातघ्नी च परिप्लुता ॥ १७७ ॥
उपप्लुता प्राक्चरणा महायोनिश्च कर्णिनी।
अत्यानन्दाऽतिचरणा योनिरोगा इतीरिता: ॥ १७८ ॥

चतुर्विधकन्दरोगाणां विवरणम्।—

चतुर्विधं योनिकन्दं वातपित्तकफैस्त्रिधा।

---

त्वकण्यास्त्वङ्गी भवेत्" (रो० वि० योनिव्यापत०) इति। सूचीमुखीति—व्यातमयं सूचीवत् सङ्कीर्णमुखी—"सूचीवक्त्राऽतिसंवृता" (सु० उ० ३८ अ०) इत्यादिवचनात्। विप्लुता चेति—"विप्लुता नित्यवेदनाम्" (सु० उ० ३८ अ०) इत्यादिना वातजनिततोदादिवेदनायुक्तेत्यर्थ:। जातघ्नी चेति—तथा हि—"स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसङ्क्षयात्" (सु० उ० ३८ अ०) इति। यद्यपि सर्वापत्यविनाशिनी तथाऽप्यत्र पुत्रस्य प्राधान्यात पुत्रघ्नीति व्यपदेश:। परिप्लुतेति सञ्ज्ञा; यदुक्तं—"परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम" (सु० उ० ३८ अ०) इति। उपप्लुतेति—वायोरुद्र्वमुपप्लुतत्वात्। तन्त्रान्तरे उदावर्त्तेति सञ्ज्ञा; यदुक्तं—"सा फेनिलमुदावर्त्ता रज: कृच्छ्रेण मुञ्चति" (सु० उ० ३८ अ०) इति। * महायोनिरिति—अतिविवृतमुखत्वान्महायोनि: कथिता; यत:,—"विवृताऽति महायोनि:" (सु० उ० ३८ अ०) इत्यादि। कर्णिनीति—मांसकन्दाकारो ग्रन्थि: कर्णिनी कथिता, यत:,—"कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते"(सु० उ० ३८ अ०) इति। अत्यानन्देति—"अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति" सु० उ० ३८ अ०) इति। अतिचरणेति—"बहुशश्चातिचरणा तयोर्बीजं न विन्दति" (रो० वि० योनिव्यापत०) इति। तयोश्चरणाऽतिचरणयो:। एवं योनिदोषा: ईरिता: कथिता: ॥ १७६—१७८॥

चतुर्विधमिति।—योनिर्भ्रंशितत्वादिंशतिसमयोनिभेदात् योनिकन्दोऽपीत्येक. पृथक् दोषभेदेन नामसङ्करत्वात् पृथगत्र पठित:। योनौ लकुचाकारं कन्दमुत्पद्यते तत्

---

अजन्यास्तत्र पीडित:। वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थित: ॥ वक्रयत्याननं योन्या साऽस्थिमांसानिलार्त्तिभि:। भृशार्त्तिर्मैथुनासक्ता योनिरन्तर्मुखी मता ॥" (च० चि० योनिव्यापत०) इति।

* टीकाकृता प्राक्चरणा नोक्ता, तल्लक्षणं यथा—"मैथुनादतिबालाया: पृष्ठकट्यूरुवङ्क्षणम्। रुजयन् दूषयेत् योनिं वायु: प्राक्चरणा हि सा ॥" (च० चि० योनिव्यापत०) इति। सुश्रुते प्राक्चरणाया उल्लेखो नास्ति।

चतुर्थः सन्निपातेन—" ॥१७९॥

अष्टविधगर्भरोगाणां विवरणम्।—

"—तथाऽष्टौ गर्भजा गदाः।
उपविष्टकगर्भः स्यात् तथा नागोदरः स्मृतः ॥१८०॥
मक्कल्लो मूढगर्भश्च विष्कम्भो गूढगर्भकः।

योनिकन्दमिति। लकुचस्य * वारङ्गफलम्; तद्यथा—"पूयशोणितसङ्काशं लकुचाकृतिसन्निभम्। जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः॥" (रो० वि० कन्द०) इति। अस्य वातादिविकृतिलक्षणमाह, वातजं यथा—"रूक्षं विवर्णं स्फुटितं वातिकं तद्विनिर्दिशेत्" (रो० वि० कन्द०) इति। पैत्तिकमाह—"दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तम्" (रो० वि० कन्द०) इति। श्लैष्मिकमाह—"नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम्" (रो० वि० कन्द०) इति। नीलपुष्पवर्णता च कफजेऽपि रोगप्रभावात्। अन्ये चैव पित्तलिङ्गसम्बद्धमाहुरिति। सान्निपातिकं यथा—"सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत्" (रो० वि० कन्द०) इति ॥१७९॥

तथेति।—"शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्च्छितं गर्भ इत्युच्यते" (सु० शा० ५ अ०) तत्सम्बन्धा विकारा गर्भजा गदा वाच्याः, तेऽष्टप्रकारा भवन्ति। उपविष्टकगर्भः स्यादित्यादि।—रक्तपरिस्रुतिनिमित्तोपविष्टकसंज्ञया गर्भविकृतिः कथिता। तदुक्तं चरके—'यस्याः पुनरुष्णतीक्ष्णोपयोगाद्गर्भिण्या महति जातसारे गर्भे पुष्पदर्शनं स्यात्, अन्यो वा योनिस्रावः, तस्या गर्भो वृद्धिं न प्राप्नोति, निःस्रुतत्वात्; स कालमवतिष्ठतेऽतिमात्रं, तमस्पन्दनञ्च भवति तमुपविष्टक इत्याचक्षते केचित्"(च० शा० जातिसूत्रीय०) इति। नागोदर इति—नागवत् इव स्थितिर्यस्य गर्भस्य भवतीत्यर्थे। सुश्रुते तन्नागोदरलक्षणं यथा—"शुक्रशोणितं वायुनाऽभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं, तत कदाचित् यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते। तमेव कदाचित् प्रविलीयमानं नागोदरमित्याहुः" (सु० शा० १० अ०)। मक्कल्ल इति—मक्कल्लो † मारुतजशूलविशेषः, स द्विविधो भवति, एको गर्भावस्थायाम्, अपरः

* लकुचं वारङ्गफलम् इति तु न सम्यक्, लकुचं डहुयाफलम्; "लकुचो लिकुचो डहुः" इत्यमरवचनात्।

† "मक्कल्लो रक्तमारुतजशूलविशेषः" इति मधुकोषः।

सूतिकावस्थायाम् इति; तद्यथा—मानसागन्तुभिरुपतापैः प्रपीडितो यो गर्भः कुक्षौ वेदनां जनयति स गर्भमक्कल्लः; यत्र प्रकुपितो वायुः सूताया रुधिरमत्यन्तं संरुध्य हृच्छिरोबस्तिशूलं करोति स प्रसूतिमक्कल्ल इति। तन्त्रान्तरे * योनिसंवरणोऽयं रोगविशेषः कथितः; यदुक्तं—"बालत्वान्नपानानि ग्राम्यधर्मं प्रजागरम्। अत्यर्थं सेवमानाया गर्भिण्या योनिमार्गगः॥ मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम्। कुरुते रुद्धमार्गत्वात् पुनरन्तर्गतोऽनिलः॥ निरुध्य-न्नाशयद्वारं पीडयन् गर्भसंस्थितिम्। निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते॥ † रुजा संरुध्य हृदयं नाशयत्याशु गर्भिणीम्। योनिसंवरणं विद्यात् व्याधिमेनं सुदारुणम्॥ अन्तकप्रतिमं घोरं नारभेत चिकित्सितम्॥" इति। मूढगर्भश्चेति —मूढो व्यासक्तगतिः पवनो मूढगर्भं करोति, योनिजठरादिषु शूलं करोतीत्यभि-प्रायः; तथा हि—"मूढः करोति पवनः खलु मूढगर्भं शूलञ्च योनिजठरादिषु मूत्रसङ्गम्" (रो० वि० मूढगर्भ०) इत्यादि। विगुणानिलयोगादृष्टधा(?)सङ्गश्च-त्वमाहुरेके, तस्मादत्र एक एव पठितः; तद्यथा—"भुग्नोऽनिलेन विगुणेन ततः स गर्भः सङ्ख्यामतीत्य बहुधा समुपैति योनिम्" (रो० वि० मूढगर्भ०) इत्यादि। केषाञ्चिन्मते तत्र व्यवहारयोग्या अष्टौ प्रकाराः कथिताः; तद्यथा—"द्वारं निरुध्य शिरसा जठरेण कश्चित् कश्चिच्छरीरपरिवर्त्तितकुब्जदेहः। एकेन कश्चिदपरस्तु भुजद्वयेन तिर्य्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः॥ पार्श्वापवृत्तगतिरेति तथैव कश्चिदित्यष्टधा गतिरियं ह्यपरा चतुर्द्धा॥" (रो० वि० मूढगर्भ०) इति। सङ्कीलकादिभेदेन चतुःप्रकारान् पुनराहुरेके; तद्यथा—"सङ्कीलकः प्रतिखुरः परिघोऽथ बीजसंघर्षबाहुचरणैः शिरसा च योनिम्। सङ्गी च यो भवति कीलकवत् स कीलो दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी॥ गच्छेद्भुजद्वयशिरः स च बीजकाख्यो योनौ स्थितः स परिघः परिघेण तुल्यः॥" (रो० वि० मूढगर्भ०) इति। तन्त्रान्तरेऽपि कीलकादीनां लक्षणं यथा—"ऊर्द्धबाहुशिरःपादैः रुन्ध्यात्

* मक्कल्ल-योनिसंवरणयोरनैक्यं सुश्रुतेन माधवेन च प्रतिपादितं पृथगुल्लेखात्; तथा च—"विपरीतेन्द्रियार्थाचिपकयोनिभ्रंशसंवरणमक्कल्लकासश्वासनिपीडितान्" (सु० १०० द अ०) इति। "योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च" (रो० वि० मूढगर्भ०) इति।

† "रुजा संरुध्य हृदयम्" इत्यत्र "बद्धां संरुद्धहृदयाम्" इति "बद्धा सन्नहृ-हृदयाम्" इति च क्वचित् पाठः।

जरायुदोषो गर्भस्य पातश्चाष्टमकः स्मृतः॥१८१॥

योनिमुखन्तु यः। प्रतिकीलोपमस्तिष्ठेत्स कील इति संज्ञितः॥ अथवात् पार्श्वतो वाऽपि तथैवाकुञ्चितोऽपि वा। यो निःसृत्य मुखं योनेस्तिष्ठेत् प्रतिखुरस्तु सः॥ योनिद्वारात् निर्गच्छेत यश्चैकः सशिरोभुजः। तमाहुर्बीजकं नाम मूढगर्भचिकित्सकाः॥ योनिमावृत्य यस्तिष्ठेत् परिघो गोपुरं यथा। तथाऽऽन्तर्गर्भमायान्तं विद्यात् परिघसंज्ञितम्॥" (भोज०) इति। विष्कम्भ इति—विष्कम्भ इव विष्कम्भः, मार्गावरोधात् तिष्ठति इत्यभिप्रायः। स तु वाताभिपन्नगर्भस्य शोषणान्मातुः कुक्षिं न पूरयति, मन्दं स्पन्दते च, अत एव वृद्धकाश्यपेन * शुष्कलक्षणं विहितम्; यथा—"गर्भनाड्यास्त्ववहनादल्पत्वाद्वा बलस्य च। चिरेणाप्यायते गर्भस्तथैवाकालभोजनात्॥ अकुक्षिपूरणो गर्भः शुष्कश्च मन्द एव च॥" इति। गूढगर्भ इति—लीनगर्भः कथितः; तथा च सुश्रुतः,—"वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः, सोऽतिकालमवतिष्ठमानो व्यापद्यते" (सु० शा० १० अ०) इति। जरायुदोष इति—विकृतजरायुणा छादनं जरायुदोषः, जरायुर्गर्भस्यावेष्टनरूपश्चर्मविशेषः; "जरायुणा मुखे छन्ने" (सु० शा० २ अ०) इत्यादिदर्शनात्। अथाङ्गर्भशय्यायां स्थितो यो बालस्तस्योपरि † वेष्टितोल्वविकारत्वाज्जरायुदोष इत्यभिप्रायः। गर्भशय्या

* विष्कम्भाख्यो मूढगर्भः वृद्धकाश्यपोक्तः शुष्काख्य इति टीकाकारोक्तिश्चिन्त्या, वाग्भटे शुष्कविष्कम्भयोः पृथक् पृथक् लक्षणदर्शनात् शुष्केण सह विष्कम्भस्य सादृश्याभावाच्च। विष्कम्भशब्दः अर्गलापरपर्य्यायः, अर्गलवत् यः मार्गं रुणद्धि, स मूढगर्भः विष्कम्भाख्यः। वाग्भटोक्तोऽयं सौश्रुताष्टविधमूढगर्भेषु "कश्चिदाभुग्नसक्थो हस्तपादशिरोभिः; कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रतिपद्यते अपरेण पायुम्" एताभ्यां तुल्यलक्षण इति मन्ये। विष्कम्भलक्षणं यथा वाग्भटे—"हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते। पादेन योनिमेकेन भुग्नोऽन्येन गुदञ्च यः॥ विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः॥" (वा० शा० २ अ०) शुष्कस्तु वाग्भटे नागोदरनाम्ना उपशुष्कनाम्ना वा अभिहितः गर्भव्यापद्विशेषः, न तु मूढगर्भः; तथा च—"शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात्। वाते क्रुद्धे कृशः शुष्येत् गर्भो नागोदरन्तु तत्॥ उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात्॥" (वा० शा० २ अ०)। अत्र अरुणदत्तः,—"तं तथाभूतं गर्भं नागोदरसंज्ञकं केचिच्चिन्मते चोपशुष्कसंज्ञं विद्यात्" इति।

† वेष्टनोल्वविकारो जरायुदोषः इति पाठकल्पनं सङ्गतार्थकमिति मन्ये।

पञ्चस्तनरोगाणां विवरणम्।—

पञ्चैव स्तनरोगाः स्युर्वातात् पित्तात् कफादपि।
सन्निपातात् क्षताच्चैव—" ॥१८२॥

पञ्चस्तन्यरोगाणां विवरणम्।—

"—तथा स्तन्योद्भवा गदाः।

च प्रसक्ता यथा—"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता॥ यथा रोहितमत्स्यस्य मुखं भवति रूपतः। तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः॥" (सु० शा० ५ अ०) इति। पात इति—गर्भस्य पातोऽष्टमो भेदः; स द्विविधः, एकः स्रावरूपः, अपरः पातरूपः; तथा हि—"आ चतुर्थात्ततो मासात् प्रस्रवेत् गर्भविद्रवः। ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः॥" (सु० नि० ८ अ०) इति। अनतिघनावयवत्वेन विशेषेण द्रवरूपतया गर्भविद्रवः कथ्यते; यदुक्तं भोजे—"आ तृतीयात्ततो मासात् गर्भः स्रवति शोणितम्। ऊर्द्ध्वं संधानभूतस्तु गर्भः पतति योषिताम्॥" इति। विगुणपवने तु सप्तमादिमासेष्वपि पात इति केचित्; यतः,—"गर्भोऽभिघातविषमाशनपीडनाद्यैः पक्वं द्रुमादिव फलं पतति क्षणेन" (रो० वि० मूढगर्भ०) इति ॥१८०।१८१॥

पञ्चैवेति।—स्तनयोर्भवा रोगाः स्तनरोगाः, ते च शोथादिरूपा इत्यर्थः; यदुक्तं —"सक्षीरौ वाऽप्यक्षीरौ वा दोषः प्राप्य स्तनौ स्त्रियाः। प्रदूष्य मांसरुधिरं स्तनरोगाय कल्पते॥" (रो० वि० स्तन०) इति। अत एव तेषां वातपित्तकफसन्निपातागन्तुजानां लक्षणानि रक्तजन्यविद्रधिं विना बाह्यविद्रधिवत् ज्ञातव्यानि; तथा चोक्तं—"पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना। लक्षणानि समानानि बाह्यविद्रधिलक्षणैः॥" (रो० वि० स्तन०) इति ॥ १८२ ॥

तथा स्तन्योद्भवा गदा इति।—तथेत्यनेन यथा स्तनरोगा दोषभेदेन पञ्चसङ्ख्याका उक्ताः, तथैव दोषभेदेन क्षीरभेदा इति तात्पर्य्यार्थः। स्तन्यं क्षीरम्; तत्स्वरूपञ्च सुश्रुतेनोक्तं—"रसप्रसादो मधुरः पक्वाहारनिमित्तजः। कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते॥" (सु० शा० १० अ०) इति। वातादीनां भेदाः केषाञ्चित् बोधार्थं लिख्यन्ते; यथा—"कषायं सलिलप्लावि स्तन्यं मारुतकोपतः। कट्वम्ललवणं पीत-राजीमत् पित्तसंयुतम्॥ कफदुष्टं घनं तोये निमज्जति सुपिच्छिलम्। द्विलिङ्गं द्वन्द्वजं विद्यात् त्रिलिङ्गं सान्निपातिकम्॥" (रो० वि० स्तन्य०) इति। एवं दोषदूषितात् स्तन्यात् गदा रोगा उत्पद्यन्ते; यदुक्तं—"गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः

बालरोगेषु कथिताः—" ॥ १८३ ॥

विविधस्त्रीदोषाणां विवरणम्।—

"—स्त्रीदोषाश्च त्रयः स्मृताः।

अदक्षपुरुषोत्पन्नः सपत्नीविहितस्तथा ॥

दैवाज्जातस्तृतीयस्तु—" ॥१८४॥

सूतिकारोगाणां विवरणम्।—

"—तथा ये सूतिकागदाः।

ज्वरादयश्चिकित्स्यास्ते यथादोषं यथाबलम् ॥ १८५ ॥

द्वाविंशतिबालरोगाणां विवरणम्।—

द्वाविंशतिर्बालरोगास्तेषु क्षीरालसास्त्रयः।

प्रदूषितम्। क्षीरं धात्र्याः कुमारस्य नानारोगाश्च कल्पते ॥" (रो० वि० बाल्य०) इति। अत एव ते रोगाः क्षीरालसादयो बालरोगेषु प्रदर्शिताः ॥ १८३ ॥

स्त्रीदोषाश्च त्रयः स्मृता इत्यादि।—स्त्रीणां दुःखजनकाः स्त्रीदोषाः, "तद्दुःखसंयोगा व्याधयः" (सु० सू० १ अ०) इत्युपदर्शनात्। ते त्रयः। अदक्षपुरुष इति—निजाहाराद्यर्जनेऽप्यसमर्थः, तेनोत्पन्नं दुःखमिति भावः। सपत्नीविहित इति—स्त्रीणां सपत्नीभावोऽतीवदुःखकरो विहितः विपक्षभूतत्वात्; "पृथक्शय्या च नारीणामशस्त्रवध उच्यते" इति वचनात्। दैवाज्जात इति—दुःखकर इति शेषः। दैवं भागधेयं तज्जातः भाग्यविपर्य्ययेण वैधव्यादिजनित इत्यभिप्रायः ॥ १८४ ॥

तथा ये सूतिकागदा इत्यादि।—प्रसूतिविषये भवा ये रोगास्ते सूतिकागदाः कथिताः; तद्यथा—"ज्वरातिसारशोथाश्च शूलानाहबलक्षयाः। तन्द्राऽरुचिप्रसेकाद्याः कफवातामयोद्भवाः ॥ कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः। ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः ॥" (रो० वि० सूतिका०) इति। एते सूतिकारोगत्वेन लक्ष्यन्ते इत्यर्थः, उपद्रवत्वात्। सूतिकाया विशेषलक्षणञ्च सुश्रुतेनोक्तं यथा—* "अङ्गमर्दो ज्वरः कासः पिपासा गुरुगात्रता। शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥" इति। एवं स्त्रीरोगाः प्रदर्शिताः ॥१८५॥

अथ बालरोगानाह, द्वाविंशतिरिति।—बालके भवा रोगा बालरोगाः; आ षोड़शात् बालः। स त्रिविधः, क्षीरपः, क्षीरान्नादः, अन्नाद इति; एतेषु भवा

* मुद्रितसुश्रुतेषु श्लोकोऽयं न दृश्यते। दृश्यते च रुग्विनिश्चये; तत्र च —"कासः" इत्यत्र "कम्पः" इति पाठः।

वातात् पित्तात् कफाच्चैव दन्तोद्भेदश्चतुर्थकः ॥ १८६ ॥
दन्तघातो दन्तशब्दोऽकालदन्तोऽहिपूतनम्।

रोगा बालरोगशब्दवाच्याः, यतः षोडशवर्षपर्य्यन्तं बालकस्य चिकित्सा दृश्यते। तेष्विति—द्वाविंशतिसङ्ख्यकेषु। त्रयः क्षीरालसा इति—* दोषदूषितस्तन्यजनिता रोगविशेषाः, अत एव वातात् पित्तात् कफादिति यच्चनम्; तद्यथा—"वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः। क्षामस्वरः कृशाङ्गः स्यात् बद्धविण्मूत्रमारुतः॥" (रो० वि० बाल०) इति। पित्तदुष्टमाह—"स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान्। तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन्॥" (रो० वि० बाल०) इति। कफदुष्टलक्षणमाह—"कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान्। निद्रान्वितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः॥" (रो० वि० बाल०) इति। एवं त्रयः क्षीरालसाः कथिताः। दन्तोद्भेद इति—दन्तानामुद्भेद उत्पत्तिः, स च सर्वेषां रोगाणां कारणम्; तद्यथा—"दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम्। विशेषाज्ज्वरविड्भेद-कासच्छर्दिशिरोरुजाम्॥" (वा० उ० २अ०) इति। अन्यत्राप्युक्तं—"पृष्ठभङ्गे बिडालानां बर्हिणाञ्च शिखोद्गमे। दन्तोद्भेदे च बालानां न हि किञ्चिन्न दूयते॥" (वा० उ० २अ०) इति। दन्तघात इति—दन्तघातो दन्तपातः कथितः, स द्विधा भवति, एकः समयोद्भवः अपर आघातजनितः, तावपि बालदुःखकराविति प्रयोजनम्। दन्तशब्द इति—दन्तघर्षणं विशेषेण स्वप्नावस्थायां भवति, † कफजन्यदन्तहर्षनिमित्तत्वात्, बाल्येऽतीव कफामया भवन्ति, तेन बालरोगे दन्तशब्दः कथितः। अकाल-

---

* वाग्भटे त्रिदोषदुष्टस्तन्यपानेनैव क्षीरालसोत्पत्तिरिति दृश्यते, तथा च—"स्तन्ये त्रिदोषमलिने दुर्गन्धामं जलोपमम्। विबद्धमच्छं विच्छिन्नं फेनिलञ्चोपवेश्यते॥ अङ्गानामन्यथावर्णं मूत्रं पीतं घनं सितम्। ज्वरारोचकतट्छर्दि-शुष्कोद्गार-विजृम्भिकाः॥ अङ्गभङ्गोऽङ्गविक्षेपः कूजनं वेपथुर्भ्रमः। घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम्॥ क्षीरालसकमित्याहुरत्ययञ्चातिदारुणम्॥" (वा० उ० २अ०)।

† सुश्रुते वातजन्यत्वेन रोगविनिश्चये च वातपित्तजन्यत्वेन दन्तहर्षः कथितः, न तु कफजन्यत्वेन; केचित्तु दन्तशब्दः वातकोपेन भवति इति वदन्ति, तथा हि—"कृशाग्निर्वा वातिकस्य चालयन्त्यनिलः शिराः। कृष्णाश्रयाः प्रसुप्तस्य दन्तैः शब्दं करोत्यतः॥" इति।

मुखपाको मुखस्रावो गुदपाकोपशीर्षकौ ॥ १८७ ॥
पार्श्वारुणस्तालुकण्टो विच्छिन्नं पारिगर्भिकः।

---

दन्त इति—बालानां दन्तोत्थानेनानिष्टत्वाद्बालानां दुःखकर इत्यर्थः। अहिपूतनमिति—अहिपूतनमन्यत्र क्षुद्ररोगेषु पठितम्, अत्र बालसम्भवत्वात् बालरोगे लिखितम्; तद्यथा—"शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्। स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥ कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते। एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥" (सु० नि० १३अ०) इति। भोजे पुनरिदं दुष्टस्तन्यपानादपि पठितम्; यदुक्तं—"दुष्टस्तन्यस्य पानेन मलस्याक्षालनेन च। कण्डूदाहरुजावद्भिः पिडकैश्च समन्विता ॥ सम्भवति यथादोषं दारुणा ह्यहिपूतना ॥" इति। मुखपाक इति—मुखस्य पाको मुखपाकः, स तु दोषविशेषाद्भवति, बालकेऽप्यतीव प्रसिद्धत्वात्। मुखस्राव इति—प्रसिद्धः, लालास्राव इत्यर्थः। गुदपाक इति—सोऽपि विकृतदोषस्वभावाद्भवतीति, बालकेऽतीव प्रतीतिः, गुदपाक इति प्रसिद्धः। उपशीर्षकमाह—कपालरोगे व्रणविशेष उपशीर्षकशब्दवाच्यः; अथवा * पद्मनामानं विसर्पमाहुरेके; यदुक्तं—"विसर्पस्तु शिशोः प्राण-नाशनो बस्तिशीर्षजः। पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥" (वी० वि० बाल०) इति। पार्श्वारुणो † महापद्मभेदः, तत्र लोहितपद्मवर्णः; पद्मवर्णता मुखतालुनि बहिर्देशेषु च इति वदन्ति केचित्। तालुकण्ट इति—कण्टकाकारत्वेन तालुकण्टकम्; तद्यथा—"तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्। तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥" (वा० उ० २अ०) इति। विच्छिन्नमिति—विच्छिन्नमन्यत्र गतं, ‡ तालुपातमिति नाम्ना प्रतीतम्। तथा हि—"तालुपातः श्लेष्मणः क्रुद्धात् पानं श्रकृद्भवम्। तृड्विकल्पाऽस्यरुजा ग्रीवादुर्वहता वमिः ॥" (वा० उ० २ अ०) इति। पारिगर्भिक इति—तथा हि—"मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि।

---

* वाग्भटे उपशीर्षकरोगः शिरोरोगे पठितः, स तु महापद्माख्यबालविसर्पात् पृथगेव; तथा च—"कपाले पवने दुष्टे गर्भस्थस्यापि जायते। सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम् ॥" (वा० उ० २३अ०) इति।

† पार्श्वारुणो महापद्मभेदः इत्यत्र किमपि साधकप्रमाणं नास्ति।

‡ तालुपात इत्यादि ग्रन्थः चक्रदत्तेन मधुकोषकारेण च तालुकण्टकस्यैव लक्षणत्वेन उक्तः इति दृश्यते, तालुपाताख्यस्तालुरोगः पृथक् नास्ति, अतश्च विच्छिन्नमन्यत्र गतमित्यादि यदुक्तं तच्चिन्त्यम्।

दौर्बल्यं गात्रशोषश्च शय्यामूत्रं कुकूणकः ॥
रोदनश्चाजगल्ली स्यादिति द्वाविंशतिः स्मृताः ॥ १८८ ॥

द्वादशबालग्रहाणां विवरणम्।—

तथा बालग्रहाः ख्याता द्वादशैव मुनीश्वरैः।

कासाग्निसादवमथु-तन्द्राकार्श्यारुचिभ्रमैः॥ युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्॥" (रो० वि० बाल०) इति। अस्यैव नामान्तरं परिभवः इति। दौर्बल्यमिति—दुर्बलत्वं, बालकस्य सततं बलहानिरित्यर्थः, हतौजा इत्यपरे। गात्रशोष इति—गात्रचामता, बालस्य दोषप्रभावात् भवति। शय्यामूत्रं प्रसिद्धं, रात्रौ स्वप्नावस्थायां शय्यागतो बालोऽसौषपूर्वकं(?) मूत्रयति दोषप्रभावात्। कुकूणक इति—बालस्य नेत्रवर्त्मगतः कुकूणकाख्यो रोगः; तद्यथा—"कुकूणकः चीरदोषात् शिशूनामचिवर्त्मनि। जायते तेन तन्नेत्रं कण्डुरञ्च स्रवेन्मुहुः॥ शिशुः कुर्य्याल्ललाटाचि-कूटनासावघर्षणम्। शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः॥" (रो० वि० बाल०) इति। अयमेव कोथुयेति लोके। रोदनमिति—रोदनन्तु सर्वेषां शिशुव्याधीनां सूचकं भवति; यत,—"शिशोस्तीव्रामतीव्राञ्च रोदनाल्लक्षयेद्रुजम्। सोतांस्यङ्गानि सन्धींश्च पश्येत यत्नान्मुहुर्मुहुः॥" इति; तीव्रां रुजाञ्च बहुरोदनात्, अतीव्रामल्परोदनाल्लक्षयेत बालानामेव दुष्टस्तन्यपानादिनेति। अजगल्लीति—प्रायेण बालानामन्येषामपि अजगल्लिका भवति; तद्यथा—"स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः। कफवातोत्थिता ज्ञेया बालानामजगल्लिकाः॥" (सु० नि० १३अ०) इति। इति द्वाविंशतिः स्मृता इति—इति कथितप्रकारेण बालरोगा द्वाविंशतिः प्रोक्ताः॥ १८६—१८८॥

तथेति।—बालं गृह्णन्ति इति बालग्रहाः; ते तु प्रायेण शोचभ्रंशादिना स्कन्दग्रहादयो बालेष्वाविशन्ति। तत्परिज्ञानार्थं सामान्यलक्षणं विशेषलक्षणञ्च व्याचष्टे; तत्र सामान्यलक्षणं यथा—"क्षणादुद्विजते बालः क्षणात् त्रस्यति रोदिति। नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च॥ ऊर्द्धं निरीक्षते दन्तान् खादेत् कूजति जृम्भते। भ्रुवौ क्षिपति दन्तौष्ठं फेनं वमति चासकृत्॥ क्षामोऽति निशि जागर्त्ति शूनाक्षो भिन्नविट्स्वरः। मांसशोणितगन्धिश्च न चाश्नाति यथा पुरा॥ सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम्॥" (रो० वि० बाल०) इति। एते ग्रहाः पूजाहेतोर्बालान् हिंसन्ति; यदुक्तं चरके—*"धात्रीमात्रोरात्मनश्चापचाराच्छौच-

* श्लोकोऽयं मुद्रितचरकेषु न दृश्यते, दृश्यते च सुश्रुते किञ्चित्परिवर्त्तित-

स्कन्दग्रहो विशाखः स्यात् श्वग्रहश्च पितृग्रहः ॥ १८८ ॥
नैगमेयग्रहस्तद्वच्छकुनिः शीतपूतना ।

---

भ्रष्टान् मङ्गलाचारहीनान् । त्रस्तान् हृष्टान् तर्जितांस्ताडितांश्च पूजाहेतोर्हिंस्युरेते कुमारान् ॥" इति । विशेषलक्षणमपि प्रतिपादितं तत्रैव ; तद्विवरणमाह, स्कन्दग्रह इति ।—स्कन्दग्रहेण गृहीतो बालो यथा भवति तल्लक्षणमाह—"एकमेवस्य गात्रस्य स्रावः स्पन्दनकम्पनम् । ऊर्द्धदृष्ट्या निरीक्षेत वक्रास्यो रक्तगन्धिकः ॥ दन्तान् खादति वित्रस्तः स्तन्यं नैवाभिनन्दति । स्कन्दग्रहगृहीतानां बालानामल्परोदनम् ॥" ( रो० वि० बाल० ) इति । * विशाख इति । श्वग्रह इति—श्वग्रहस्तु † स्कन्दापस्मार इत्येके ; तद्यथा—"नष्टसंज्ञो वमेत फेनं संज्ञावानतिरोदिति । पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम् ॥" ( रो० वि० बाल० ) इति । ‡ पितृग्रह । ¶ नैगमेय-ग्रह इति—तद्यथा—"छर्दिस्पन्दनकण्ठास्य-शोषमूर्च्छाविगन्धिता । ऊर्द्धं पश्येद्दशेत दन्तान्नैगमेयं ग्रहं वदेत् ॥" ( रो० वि० बालरोग० ) इति । शकुनिरिति—शकुनि-नामग्रहगृहीतो बालोऽपीदृशो भवति ; यथा—"स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः स्रावास्रव्रणपरिपीडितः समन्तात् । स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति

पाठेन ; तद्यथा—"धात्रीमात्रोः प्राक्प्रदिष्टापचारात् शौचभ्रष्टान् मङ्गलाचार-हीनान् । त्रस्तान् हृष्टान् तर्जितान् ताडितान् वा पूजाहेतोर्हिंस्युरेते कुमारान् ॥" ( सु० उ० २७ अ० ) इति । अयमेव सङ्गतः पाठः टीकोक्तपाठस्यार्थासङ्गतेरिति ।

* स्कन्दापस्मार एव विशाखाख्यया अरुणदत्तेन कीर्त्तितं, यथा—"सम्प्रति विशाखस्य स्कन्दापस्मारापरसंज्ञस्य लक्षणमाह" ( वा० उ० ३ अ० ) इति ।

† वाग्भटेन विशाख एव स्कन्दापस्मार इत्युक्तं, न तु श्वग्रहः इति । श्वग्रह-लक्षणं यथा तत्रैव—"कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम् । बहिरायामनं जिह्वा-दंशोऽन्तः कण्ठकूजनम् ॥ धावनं विट्सगन्धत्वं क्रोशनं श्वानवच्छुनि ॥" ( वा० उ० ३ अ० ) इति ।

‡ "पितृग्रहलक्षणं यथा—"रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः । कासातिसारवमथुजृम्भातृट्शवगन्धताः ॥ अङ्गेष्वाक्षेपविक्षेपः शोषस्तम्भविवर्णताः । मुष्टि-बन्धः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ॥" ( वा० उ० ३ अ० ) इति ।

¶ वाग्भटे नैगमेयग्रहः मेषग्रहाख्यया कीर्त्तितः । सुश्रुतेन नैगमेय एव पितृग्रह इति नामान्तरेण पठितः इति ।

मुखमण्डितिका तद्वत् पूतना चान्धपूतना ॥
रेवती चैव सङ्ख्याता तथा स्याच्छुष्करेवती ॥ १९० ॥

द्विचत्वारिंशत्पादरोगाणां निर्देशः।—

तथा चरणभेदास्तु वातरक्तादिकाश्च ये।
द्विचत्वारिंशदुक्तास्ते रोगिष्वेव मुनीश्वरैः ॥ १९१ ॥

द्विषष्टिदोषभेदानां निर्देशः।—

द्विषष्टिर्दोषभेदाः स्युः सन्निपातादिकाश्च ये।

---

शिशुः स्वतः शकुन्या ॥" (सु० उ० २७अ० ) इति। विस्रगन्धिरित्यत्र विस्रगन्धि-रित्यपरे। हिरण्याक्षेऽप्युक्तं—"कंसावटाङ्गपाकाद्यैश्चित: स्फोटैर्भयान्वितः। स्रस्ताङ्गो विस्रगन्धिः स्याच्छकुन्या पीडितः शिशुः ॥" इति। शीतपूतनेति—"वेपते कासते क्षीणो नेत्ररोगी विगन्धिता। छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥" (रो० वि० बाल० ) इति। मुखमण्डितिकेति—"प्रसन्नवर्णवदनः शिराभिरभिसंवृतः। मूत्र-गन्धिस्तु बह्वाशी मुखमण्डितिकार्दितः ॥" (रो० वि० बाल० ) इति। पूतनेति—"अतीसारो ज्वरस्तृष्णा तिर्य्यक्प्रेक्षणरोदनम्। नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः ॥" (रो० वि० बाल० ) इति। अन्धपूतनेति—"छर्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम। स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया शिशोः ॥" (रो० वि० बाल० ) इति। रेवतीति—"व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं सवेदनक्। भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥" (रो० वि० बाल० ) इति। * शुष्करेवतीति ॥ १८९।१९० ॥

तथेति।—चरणभेदाः पादरोगाः कथिताः; ते वातरक्तप्रमुखा रोगिष्वेव बोद्धव्याः। वातरक्तादिका इत्यत्रादिग्रहणेन पादसुप्ति-पादस्तम्भ-पादहर्ष पादस्फुटन-प्रभृतयः। रोगिष्विति—श्लीपदादिषु ॥ १९१ ॥

द्विषष्टिर्दोषभेदाः स्युरिति।—दोषा वातादयः, तेषां भेदा उत्कर्षादि-

* शुष्करेवत्या लक्षणं यथा—"जायते शुष्करेवत्यां क्रमात् सर्वाङ्गसङ्क्षयः। केशपातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता॥ रोदनं गृध्रगन्धित्वं दीर्घकालानुवर्त्तनम् ॥" (बा० त० ३अ० ) इति।

तेऽपि रोगेषु गणिताः पृथक्प्रोक्ता न ते क्वचित्॥ १९२॥

विकल्पनादातेनेत्युच्यन्ते (?) * तत्र वातादीनां दोषाणां क्षीणभेदाः पञ्चविंशतिः, तावन्त एव वृद्धानां दोषाणां भेदाः, एवं क्षीणवृद्धानां दर्शिताः। एकैकवृद्धिसमता-क्षयैः कृत्वा षड्भेदाः, एकवृद्धिद्वन्द्वक्षयेण त्रयो भेदाः, द्विवृद्ध्येकक्षयेण त्रयो भेदाः, एवं द्विषष्टिर्दोषभेदाः कथिताः। केचित् दोषाणां साम्यमपि एकविधभेद इत्यनेन

* "पृथक् त्रीन् विद्धि संसर्गस्त्रिधा तत्र तु तान् नव। त्रीनेव समया वृद्ध्या षड़कस्यातिशायने॥ त्रयोदश समस्तेषु षट् द्व्येकातिशयेन तु। एकं तुल्याधिकैः षट् च तारतम्यविकल्पनात्॥ पञ्चविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतः। एकैकवृद्धि-समता-क्षयैः षट् ते पुनश्च षट्॥ एकक्षयद्वन्द्ववृद्ध्या सविपर्य्ययाऽपि ते। भेदा द्विषष्टि-र्निर्दिष्टास्त्रिषष्टः स्वास्थ्यकारणम्॥" (वा० सू० १२ अ०) इति। तथा च—वातो वृद्धः पित्तं वृद्धं श्लेष्मा वृद्धः एवं पृथक् त्रयो दोषाः। वातपित्ताधिकः संसर्गः, वातकफाधिकः संसर्गः, पित्तकफाधिकः संसर्गः, एव सम द्विदोषवृद्ध्या त्रयः। वातो वृद्धः पित्तं वृद्धतरं, पित्तं वृद्धं वातो वृद्धतरः, कफो वृद्धः पित्तं वृद्धतरं, पित्तं वृद्धं कफो वृद्धतरः, कफो वृद्धः वातो वृद्धतरः, वातो वृद्धः कफो वृद्धतरः, एवमेकातिशयद्विदोषवृद्ध्या षट् संसर्गभेदाः, इति नव संसर्गभेदाः। कफो वृद्धः वातपित्तमधिकं वृद्धम्; पित्तं वृद्धं वातकफावतिवृद्धौ; वातो वृद्धः पित्तकफावतिवृद्धौ, पित्तकफौ वृद्धौ वातोऽतिवृद्धः; वातकफौ वृद्धौ पित्तमतिवृद्धम्; वातपित्ते वृद्धे कफोऽतिवृद्धः इति द्व्येकातिवृद्धौ षट् सन्निपातभेदाः। वातो वृद्धः पित्तं वृद्धतरं कफो वृद्धतमः; वातो वृद्धः कफो वृद्धतरः पित्तं वृद्धतमम्; पित्तं वृद्धं कफो वृद्धतरः वातो वृद्धतमः; पित्तं वृद्धं वातो वृद्धतरः कफो वृद्धतमः; कफो वृद्धः वातो वृद्धतरः पित्तं वृद्धतमम्; कफो वृद्धः पित्तं वृद्धतरं वातो वृद्धतमः; एवं तारतम्यविकल्पनात् षट् सन्निपातभेदाः, एकश्च समवृद्धवात-पित्तकफाः, एवं त्रयोदशसन्निपातभेदाः, ततश्च वृद्धैर्दोषैः पञ्चविंशतिभेदाः ज्ञेयाः। वातः क्षीणः पित्तं क्षीणं कफः क्षीणः इति क्षीणे पृथक्त्रयः। क्षीणवातपित्ते, क्षीणपित्तकफौ, क्षीणवातकफौ एवं समद्विदोषक्षीणत्वेन त्रयः। वातः क्षीणः पित्तं क्षीणतरं, पित्तं क्षीणं वातः क्षीणतरः, वातः क्षीणः कफः क्षीणतरः, कफः क्षीणः वातः क्षीणतरः, कफः क्षीणः पित्तं क्षीणतरं, पित्तं क्षीणं कफः क्षीणतरः, एवमेकातिशयद्विदोषक्षीणत्वेन षट् इति नव संसर्गभेदाः। वातः क्षीणः पित्तकफौ अतिक्षीणौ, पित्तं क्षीणं वातकफौ अतिक्षीणौ, कफः क्षीणः वातपित्ते अतिक्षीणे; वातपित्ते क्षीणे कफोऽतिक्षीणः, पित्तकफौ क्षीणौ वातोऽतिक्षीणः, वातकफौ क्षीणौ

पञ्चदशपञ्चकर्मजरोगाणां निर्देशः।—

हीनमिथ्याऽतियोगेन भेदैः पञ्चदशोदिताः।

---

द्विषष्टिर्दोषभेदा भवन्ति इति वदन्ति इति। * तत्र सन्निपातभेदेन ज्ञातव्यम्; तदुक्तं —"द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्। समैश्चैको विकारास्ते सन्निपातास्त्रयोदश॥" (च० सू० कियन्तःशिरसीय०) इति। तन्त्रान्तरेऽपि यथा— "द्विषष्टिधा वदन्त्येते भूयिष्ठमिति निश्चयः। त्रय एव पृथक् दोषा द्विशो नव समाधिकैः॥ त्रयोदशाधिकैकाद्वि-समम्ब्योल्बणैस्त्रिशः। पञ्चाशदेवन्तु सह भवन्ति क्षयमागते॥ क्षीणमध्याधिकक्षीण क्षीणवृद्धैस्तथाऽपरैः। द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा॥" (सु० सू० ६६ अ०)। तेऽपीति—ते द्विषष्टिर्दोषभेदा रोगेषु गणिताः, अतः क्वचित् कुत्रापि ते न पृथक् प्रोक्ताः, न ह्येतेषां द्विषष्टिभेदानां सर्वरोगान्तर्गतत्वात् पृथगुपादानमिति भावः॥ १९२॥

---

पित्तमतिक्षीणम्; एवं द्व्येकातिक्षीणे षट्सन्निपातभेदाः। कफः क्षीणः पित्तं क्षीणतरं वातः क्षीणतमः; वातः क्षीणः कफः क्षीणतरः पित्तं क्षीणतमम्; पित्तं क्षीणं कफः क्षीणतरः वातः क्षीणतमः; कफः क्षीणः वातः क्षीणतरः पित्तं क्षीणतमम्; वातः क्षीणः पित्तं क्षीणतरं कफः क्षीणतमः, पित्तं क्षीणं वातः क्षीणतरः कफः क्षीणतमः एवं तारतम्यविकल्पनात् षट्सन्निपातभेदाः; एकश्च समक्षीणवातपित्तकफा इति त्रयोदशसन्निपातभेदाः, ततश्च क्षीणैर्दोषैः पञ्चविंशतिभेदा ज्ञेयाः। वातो वृद्धः पित्तं समं कफः क्षीणः; पित्तं वृद्धं वातः समः कफः क्षीणः। कफो वृद्धः पित्तं समं वातः क्षीणः; कफो वृद्धः वातः समः पित्तं क्षीणम्, वातो वृद्धः कफः समः पित्तं क्षीणम्; पित्तं वृद्धं कफः समः वातः क्षीणः इत्येकैकवृद्धिसमताक्षयैः षट्। वातः क्षीणः पित्तकफौ वृद्धौ; पित्तं क्षीणं वातकफौ वृद्धौ; कफः क्षीणः वातपित्ते वृद्धे, इत्येकक्षयद्वन्द्ववृद्ध्या त्रयो भेदाः। वातपित्ते क्षीणे श्लेष्मा वृद्धः; वातकफौ क्षीणौ पित्तं वृद्धम्; पित्तकफौ क्षीणौ वातो वृद्ध इति द्वन्द्वक्षयैकवृद्ध्या त्रयो भेदा एवं द्विषष्टिधा दोषभेदा ज्ञातव्या इति।

* तत्र सन्निपातभेदेन ज्ञातव्यमिति टीकाकारोक्तिर्न सङ्गच्छते; विषमितमस्य साध्यकारणत्वात् सन्निपाते च नान्तर्भवितुमर्हति। "समैश्चैको" इत्यनेन सन्निपातभेदे यत् दोषसाम्यमुक्तं तत् समवृद्धत्रिदोषजन्यं समक्षीणत्रिदोषजन्यं वा अवगन्तव्यम्; उक्तं च—"विषमः स्वास्थ्यकारणम्" (वा० सू० १२अ०) इति।

पञ्चकर्मभवा रोगा रोगिष्वेव प्रकीर्त्तिता: ॥ १८३ ॥

अष्टादशस्नेहादिजव्यापदां निर्देश: ।—

स्नेहस्वेदौ तथा धूमो गण्डूषोऽञ्जनतर्पणे।
पीडा अष्टादशैतज्जास्ताश्च रोगेषु लक्षिता: ॥ १८४ ॥

चतुर्विधशीताद्युपद्रवाणां निर्देश: ।—

शीतोपद्रव एक: स्यादेकश्चोष्णोद्भवो मत:।
शल्योपद्रव एकश्च चाराच्चैक: स्मृतस्तथा ॥ १८५ ॥

हीनेति ।—पञ्चकर्मभवा रोगा इति—वमन-विरेचन-निरूहानुवासन-नस्यानीति पञ्चकर्माणि, तज्जाता रोगा रोगिष्वेव ज्ञातव्या: । रोगता च तेषां हीनमिथ्याऽतियोगत्वाद्भवति। एतेन किमुक्तम्? यदा वमनादिकं हीनमिथ्याऽतियोगेन कृतं तदा रोग: स्यात्; तदुक्तं—"हीनमिथ्याऽतियोगेन यदा भवति देहिनाम्। पञ्चकर्म तदा नूनं रोगोत्पत्त्यै च केवलम् ॥" इति। अत एव प्रत्येकं त्रिभेदेन पञ्चदशभेदा: पूर्य्यन्ते ॥ १८३ ॥

स्नेह इति ।—स्नेहादीनामपि अष्टादशपीडाभेदा: कथिता: । अत्रापि हीनमिथ्याऽतियोगेनेति सम्बन्ध:, तेनैवाष्टादशभेदा: पूर्य्यन्ते। पीडाऽत्र दोषरूपा। स्नेहोऽत्र स्नेहपानम्। स्वेद: प्रसिद्ध:। धूमो धूमपानम्। गण्डूष: कवलपर्य्याय:। अञ्जनं नेत्राञ्जनम्। तर्पणं धातुतृप्तिजनकं नेत्रान्तस्तर्पणं वा। एते तु यदा हीनमिथ्याऽतियोगद्वारेण प्रयुक्तास्तदा रोगाय भवन्तीत्यर्थ: ॥ १८४ ॥

शीतोपद्रव इति ।—अतिशीतेन जनित: उपद्रव:, अतिशीत: काल:, अतिशीतो देश:, अतिशीता क्रिया चेति। एक उष्णोद्भव इति—अत्युष्णेन जनित उपद्रव इत्यर्थ:। अत्रापि उष्णकाल:, उष्णो देश:, उष्णा क्रिया चेति। एक: शल्योपद्रव इति—सर्वशरीराबाधकरं शल्यं, तच्च द्विविधं, शारीरमागन्तुकञ्चेति, तदुक्तं—"शारीरागन्तुकञ्चैव द्विविधं शल्यमुच्यते" इति। तत्र शारीरं रोमनखादि धातवोऽन्नमलादि दोषाश्च दुष्टा:। आगन्तुकमपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दु:खमुत्पादयन्ति। अधिकारो हि लोहवेणुतरुतृणशृङ्गास्थिमयेषु। एक: क्षाराच्चेति—उपद्रव:, तथेति वचनात्। एतेन किमुक्तम्? स क्षारो यदा अन्धै: प्रयुक्तस्तदा रोगाय भवतीति तात्पर्य्यार्थ:; तदुक्तं—"विषाग्निशस्त्राशनिमृत्युकल्प: क्षारो भवत्यल्पमतिप्रयुक्त:। स धीमता सम्यगनुप्रयुक्तो रोगान् निहन्यादचिरेण घोरान् ॥" (सु० सू० ११ अ०) इति ॥ १८५ ॥

विविधविषाणां विवरणम्।—

स्थावरं जङ्गमञ्चैव कृत्रिमञ्च त्रिधा विषम्।
तेषाञ्च कालकूटाद्यैर्नवधा स्थावरं विषम्॥ १८६॥
जङ्गमं बहुधा प्रोक्तं तत्र लूता भुजङ्गमाः।
वृश्चिका मूषिकाः कीटाः प्रत्येकं ते चतुर्विधाः॥ १८७॥

विषभेदानाह, स्थावरमिति।—स्थावरजङ्गमकृत्रिमभेदेन त्रिविधविषाणि इति पिण्डार्थः। तत्र स्थावरविषं नवधा कालकूटप्रभृतिभिः स्वीकृतं तद्विधानमाह, यदुक्तं—"कालकूटो वत्सनाभः शृङ्गिकश्च प्रदीपनः। हालाहलो ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा॥ सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव॥" इति। नवधेति अत्रातिप्रसिद्धत्वात् सङ्ग्रहः, केषाञ्चिन्मते अष्टादशभेदा भवन्ति, तेषु दश जातयस्त्याज्या अष्टौ ग्राह्या इति, तथा हि—"शक्तुकं मुस्तकं शृङ्गी वालुकं सर्षपाह्वयम्। वत्सनाभं कार्य्यमन्यं श्वेतशृङ्गी तथाऽष्टमम्॥ इत्यष्टौ योजयेत् योगे कालकूटादि वर्जयेत्॥" इति। तद्यथा—"कालकूटं मेषशृङ्गी हालाहलञ्च दर्दुरम्। कर्कटं गरलं ग्रन्थि हारिद्रं रक्तशृङ्गिकम्॥ केशरं दशमञ्चेति वर्जनीयं भिषग्वरैः॥" इति। वर्जनीयत्वमेषामत्यन्तदुष्टिकरत्वात्। निषिद्धेऽपि शार्ङ्गधरेणात्र सङ्गृहीतं प्रसिद्धत्वात्। जङ्गमं बहुधा प्रोक्तमित्यादि—जङ्गमं सर्पादिसम्भवं भवेदिति सम्बन्धः। तत्र लूता "मकडी" शब्दवाच्यः, कीटविशेषो वा। भुजङ्गमाः सर्पास्ते चानेकविधाः। वृश्चिकमूषिकौ प्रसिद्धौ। कीटा अपि नानाविधा नानाऽऽकृतयश्च। तेषां स्वरूपं न लिखितमत्र विस्तरभयात्। प्रत्येकं ते चतुर्विधा इति—ते लूतादयः, चतुर्विधा इति जरायुजाण्डजस्वेदजोद्भिज्जाः प्रत्येकं, * यतः चतुर्द्धा निपतितानाम् ऊष्माणं विना कस्यचित् सिद्धिर्नास्ति इति न्यायेन सर्वे भुवः शरीरस्य च स्वेदाज्जाताः। अन्येऽपि— † "यथा पक्षिषु बलाका अजरायुजा अण्डजाश्च, सर्पजातिषु अहिपताका जरायुजाः,

* ग्रन्थोऽयं डल्लनेन "स्वेदजजरायुजाण्डजोद्भिज्जसंज्ञः" इति सौश्रुतपाठे स्वेदजस्य प्रथमनिर्देशहेतुं प्रदर्शयितुं निबन्धीकृतः "चतुर्द्धा निपतितानाम ऊष्माणं विना कस्यचित् सिद्धिर्नास्ति इति संस्वेदजस्य प्राक् निर्देशः." इति, अतो नायमत्र सङ्गच्छते। किञ्च "इति न्यायेन—" इत्यादि ग्रन्थोऽपि नात्र सङ्गच्छते, संस्वेदज इत्यस्य व्याख्यार्थं "भुवः शरीरस्य च संस्वेदादूष्मणो जाताः" इति डल्लनेन व्याख्यातम्।

† अत्रापि अस्योल्लेखो निरर्थक इव प्रतिभाति; यतः "जरायुजाण्डजस्वेद,

दंष्ट्राविषं नखविषं वालशृङ्गास्थिभिस्तथा ।
मूत्रात् पुरीषाच्छुक्राच्च दृष्टेर्निश्वासतस्तथा ॥ १९८ ॥
लालायाः स्पर्शतस्तद्वत्तथा शङ्काविषं मतम् ।
कृत्रिमं द्विविधं प्रोक्तं गरदूषीविभेदतः ॥ १९९ ॥

संस्वेदजेष्वपि काश्चित् पिपीलिका मत्कुणाः उद्भिज्जाश्च" इत्यनेन योनिसङ्करोत्पत्तित्वाच्चतुर्विधत्वम्। यद्वा—वातपित्तकफसन्निपातात्मानस्ते *सङ्कविषाश्चतुर्विधा भवन्तीत्येके। तदपि न सर्वमतं, किन्तु सर्वजातय एव भवन्तीत्यन्ये ; तदुक्तं—"वातपित्तकफात्मानो भोगिमण्डलिराजिलाः" ( रो० वि० विष० ) इत्यादि। सुश्रुते तु द्विदोषकरमेव चतुर्थम् ; तथा हि—"कोपयन्त्यनिलं जन्तोः फणिनः सर्व एव तु। पित्तं मण्डलिनश्चापि कफश्चानेकराजयः॥ अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम्॥" ( सु० क० ४ अ० ) इति। दंष्ट्राविषमित्यादि—एतेषां मध्ये केचित् दंष्ट्राविषाः, केचिन्नखविषाः, केचित् वालशृङ्गास्थिविषा इत्यादयो ज्ञातव्याः ; तथा हि—"भौमसर्पाणां दंष्ट्राविषम्। मार्जारमर्कटव्याघ्रादयो दंष्ट्रानखविषाः। विषहतास्थिमत्स्यास्थिप्रभृतयोऽस्थिविषाः। पिच्चिटकौण्डिन्यादयो मूत्रपुरीषविषाः। मूषिकाः शुक्रविषाः। दिव्याः सर्पाः दृष्टिनिःश्वासविषाः। वृश्चिकवरटीपिच्चिटकादयो † लालाविषाः। लूता लालाऽऽर्तवविण्मूत्रशुक्रमुखसन्दंशविषा इति। तथा शङ्काविषं मतमिति—तथैवोक्तप्रकारेणैव शङ्काविषमपि उपद्रवकरं भवति। कृत्रिमं द्विविधं प्रोक्तमित्यादि—कृत्रिमं विषं गरदूषिभेदात् द्विप्रकारं कथितम् ; गरं गरली (?) तत्र "दिमाइ" शब्दवाच्यम्। तन्त्रान्तरे यथा—"सौभाग्यार्थं स्त्रियः स्वेद-रजोनानाङ्गजान् मलान्। शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान्॥" ( च० चि० विष० ) इत्यादि। दूषी-

---

जोद्भिज्ज" इति सौश्रुतपाठव्याख्यायां डल्लनेन प्रागुक्तस्य स्वेदजजरायुजेत्यादिक्रमस्य परित्यागे हेतुनिर्देशार्थम् उक्तं, यथा—"जरायुजादिषु पूर्वोक्तसंस्वेदजादिक्रमत्यागो योनिसङ्करं बोधयति, तेन पक्षिषु बलाका" इत्यादि। "योनिसङ्करोत्पत्तित्वात् चतुर्विधत्वम्" इत्यस्य अर्थोऽपि न सुबोधः।

* "सङ्कविषाः" इत्यत्र "सर्पविषाः" "सर्वजातयः" इत्यत्र च "सर्पजातयः" इति पाठः सङ्गत इति मन्ये।

† लालाशब्दोऽत्र आस्यवाचकः ; सुश्रुते आस्यविषाः कश्चिच्च आराविषाः इति पाठात्। तथा वरटी मूत्रतुण्डविषा इति च सुश्रुते।

सप्त धातुविषं ज्ञेयं तथा सप्तोपधातुजम् ।
तथैवोपविषेभ्यश्च जातं सप्तविधं मतम् ॥ २०० ॥
दुष्टनीरविषञ्चैकं तथैकं दिग्धजं विषम् ।
कपिकच्छूभवा कण्डूर्दुष्टनीरभवा तथा ॥
तथा शूरणकण्डूश्च शोथो भल्लातजस्तथा ॥ २०१ ॥

विषमपि देशकालादिदूषणात् कथितम् ; तद्यथा—"दूषितं देशकालान्न-दिवास्वप्नै-रभीक्ष्णशः । यस्मात् सन्दूषयेद्धातून् तस्माद्दूषीविषं स्मृतम् ॥" (सु० क० २ अ०) इति । एके द्विविधमित्यस्य स्थाने विविधमिति पठन्ति, व्याख्यानयन्ति च—विविधं नानाप्रकारम् । एके द्विविधं कृत्रिममन्यथा व्याख्यानयन्ति, तद्यथा—"एकं सविषद्रव्यसंयोगकृतं कृत्रिमसंज्ञं विषम्, अपरं निर्विषद्रव्यसंयोगकृतं गरसंज्ञम् ; यदाह काश्यपः,—संयोगजञ्च द्विविधं तृतीयं विषमुच्यते । गरं स्यादविषं तत्र सविषं कृत्रिमं मतम् ॥" इति । अत एव चरकः * रसायने—"दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे" (च० चि० २३ अ०) इति । धातवोऽत्र सुवर्णरजताद्यः, ते यदा अशुद्धा भक्षितास्तदा विषतुल्या इति तात्पर्य्यार्थः, यथा विषादजनकत्वाद्विषम् ; तथा सप्तोपधातुजं, विषमिति शेषः ; उपधातवो हरितालाद्याः । तथैवोपविषेभ्यो जातं सप्तविधं, विषमिति शेषः ; उपविषमत्रार्कसेहुण्डप्रभृतिकम् ; यदुक्तम्—"अर्कसेहुण्डधुस्तूर-लाङ्गलीकरवीरकाः । गुञ्जाहिफेन इत्येताः सप्तोपविषजातयः ॥" (रसेन्द्रसार० १ अ०) इति । दुष्टनीराणि व्यापन्नपानीयानि, तज्जनितं विषं, विषादजनकत्वात् ; तत्तु बाह्याभ्यन्तरं भवति, बाह्यं स्नानादिना, आभ्यन्तरन्तु पानादेव ; तद्यथा—"न पिबेत् पङ्कशैवाल-तृणपर्णाविलावृतम् । सूर्य्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥ फेनिलं जन्तुमत्तोयं दन्तग्राह्यतिशैत्यतः । अनार्त्तवञ्च यद्दिव्यमार्त्तवं प्रथमञ्च यत् ॥ लूतादितन्तु-विण्मूत्र-विषसंश्लेषदूषितम् ॥" (वा० सू० ५ अ०) इति । तथैकं दिग्धजं विषमिति—विषलिप्तं शस्त्रादिकं दिग्धं कथितं, तज्जनितं विषम् ; तेन विषलिप्तशस्त्रहतो जन्तुर्दिग्धाहतः कथितः । कपिकच्छूभवा कण्डूरिति—कपिकच्छुः वानरी तस्याः फलं तज्जनिता कण्डूः खर्जूः, इयमपि कण्डूर्द्रव्यसंसर्गजाऽल्पदोषा, न तु कुष्ठोक्ता । दुष्टनीर-भवा तथेति—दुष्टनीराणि पूर्वाख्यातानि, तज्जनिता कण्डूरपि दुःखकरा भवती-त्यभिप्रायः । तथा शूरणकण्डूश्चेति—शूरणः कन्दविशेषः प्रसिद्ध एव, तेनापि सञ्जाता

* श्लोकोऽयं चरके रसायनाधिकारे न दृश्यते ।

विषोपमविविधमदरोगाणां विवरणम्।—

मदश्चतुर्विधश्चान्यः पूगभङ्गाक्षकोद्रवैः।
चतुर्विधोऽन्यो द्रव्याणां फलत्वङ्मूलपत्रजः॥ २०२॥
इति प्रसिद्धा गणिता ये किलोपद्रवा भुवि।
असङ्ख्याश्चापरे धातु-मूलजीवादि सम्भवाः॥ २०३॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां निदानस्थाने रोगगणनाध्यायः॥ ७॥

कण्डूरिति। तथा भल्लातजः शोथः इति—भल्लातो भल्लातकफलानि, तत्स्पर्शात् शोथो दुःखकरो भवति; स च दोषशोथाद्भिन्न एव॥ १९६—२०१॥

मद इति।—अन्या मदश्चतुःप्रकारो ज्ञेयः, स च पूगभङ्गाक्षकोद्रवैः कृत्वेत्यर्थः। अयमपि आसवारिष्टाद्भिन्न एव। पूगोऽल्पमदकरः। भङ्गा प्रसिद्धा। अक्षं बिभीतक-फलमज्जा मदकरत्वात्; तदुक्तं—"तन्मज्जा मदकारकः" इत्यादिवचनात्। कोद्रवाणि मदकराणि धान्यानि। अन्योऽपि मदो द्रव्याणां फलत्वङ्मूलपत्रजः सामान्यो विहितः, फलं ग्वाखसफलनिर्य्यासः, तत्फलं जातीफलादि मदजनकं गृह्यते। त्वग्मद इत्यादि चाकमर्केरिमेदादिकानाम्, इरिमेदो विट्खदिरः; स एव फलमदोऽपि गणितः। चाकमर्कोऽपि वक्ष्यमाणमूलमदसङ्गृहीतः। मूलमद इति क्षुद्रवदर्य्या-दीनां मूलं मदकरत्वात्। पत्रमद इति जातिपत्रिकाभङ्गाप्रभृतीनामिति। इति-शब्दः परिसमाप्तौ। किल निश्चयेन, ये उपद्रवा रोगरूपाः भुवि पृथिव्यां, प्रसिद्धाः सन्ति, तेऽत्र गणिताः, शार्ङ्गधरेणेति शेषः। अपरे येऽप्रसिद्धाः, असङ्ख्याश्च सन्ति, तेऽप्यनुमानतो ज्ञातव्या इत्यर्थः; ते के? धातुमूलजीवादिसम्भवा इति—धातवः पार्थिवाः, ते सुवर्णरजतमणिमुक्तामनःशिलाहरितालमृत्कपालादयः। मूल-शब्देन स्थावरा गृह्यन्ते; तेऽपि चतुर्विधाः, वनस्पतयो वृक्षा वीरुध ओषधय इति। ननु लोकस्य द्वैविध्यत्वेन पार्थिवा अपि स्थावरशब्देन वाच्याः, तत् कथमत्र पृथगुपा-दानम्? उच्यते—येषु आहारोपयोगित्वं फलमूलाद्यवयवेषु प्रधानतया, तत्रैव चतुर्विधे वनस्पत्यादिगणे स्थावरशब्दो वर्त्तते न तु पार्थिवेष्वपि, तेषामाहारेषु क्वचि-त्कादुपयोगात्। जीवादिसम्भवा इति—जीवशब्देन जङ्गमा गृह्यन्ते, तेऽपि चतुर्विधा

# शार्ङ्गधरसंहितायाम्।

## अथ मध्यखण्डः।

### चिकित्सितस्थानम्।

### प्रथमोऽध्यायः।

### स्वरसादिकल्पना।

पञ्चकषायाः।—

अथातः स्वरसः कल्कः क्वाथश्च हिमफाण्टकौ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥ १ ॥

---

भवन्ति, ते जरायुजाण्डजस्वेदजोद्भिज्जा इत्यर्थः। आदिग्रहणात् प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाप्रभृतयः। एते त्वयथार्थावधिसेवनात् दुःखकरा इत्यभिप्रायः ॥ २०२।२०३ ॥

विविधमुनिनिबन्धा ये महत्सु प्रसिद्धाः सुमतिदुरवबोधास्ते मया नैव दृष्टाः।
तदपि गुरुसकाशात् यच्छ्रुतं तत् व्यलेखि ह्याढमल्लभिषजाऽथा भावसिंहात्मजेन ॥

इति श्रीवात्स्यान्वयप्रकाशवैद्यश्रीभावसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां पूर्वखण्डे रोगगणनाऽध्यायः सप्तमः ॥ ७ ॥

## इति शार्ङ्गधरसंहितायां पूर्वखण्डः समाप्तः।

---

अथ मध्यखण्डः प्रारभ्यते, तत्रादौ कषायसंज्ञाकरणम् (?) आह, अथात इति।—अथशब्दो मङ्गलार्थः। अत इति—प्रथमखण्डानन्तरम्। एते पञ्चकषायाः ज्ञेयाः, ते यथोत्तरं लघवः स्युरिति—यो यस्मादुत्तरो यथोत्तरम्; ते के? स्वरसकल्कक्वाथहिमफाण्टसंज्ञाः। स्वरस इति—स्वरसः। कल्को दृषदि पेषितः। क्वाथः क्वथितः कषायः। हिम इति—शीतकषायः। फाण्ट इति—जलप्लावितं चूर्णम् ॥ १ ॥

स्वरसलक्षणम् ।—

आहतात्तत्क्षणाकृष्टाद्द्रव्यात् क्षुण्णात् समुद्भवः ।
वस्त्रनिष्पीड़ितो यः स रसः स्वरस उच्यते ॥ २ ॥

स्वरसानुकल्पः ।—

कुड़वं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले ।
अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥ ३ ॥

स्वरसानुकल्पः ।—

आदाय शुष्कद्रव्यं वा स्वरसानामसम्भवे ।
जलेऽष्टगुणिते साध्यं पादशिष्टञ्च गृह्यते ॥ ४ ॥

स्वरसवयाणां मात्रा ।—

स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत् ।
निशोषितञ्चाग्निसिद्धं पलमात्रं रसं पिबेत् ॥ ५ ॥

---

अथ तेषु पूर्वं स्वरसकल्पनामाह, तल्लक्षणं यथा आहतादिति ।—ईदृशात् द्रव्यात् समुद्भवो रसः स्वरस इत्युच्यते । कीदृशात् ? तमाह—आहतात् च्छतात् शकलीकृतात् । तत्क्षणाकृष्टादिति—सद्य उत्पाटितात् । क्षुण्णादिति—उदूखलादिषु मुषलादिभिः कुट्टितात् । वस्त्रनिष्पीड़ित इति—पटेन परिस्रुतः, रस इति शेषः । द्रव्यादिति—सामान्यग्रहणेनात्र त्वङ्मूलफलादीनां ग्रहणम् ॥ २ ॥

लक्षणान्तरमाह, कुड़वमित्यादि ।—चेति—पक्षान्तरेणापि स्वरसः कथितः, स यथा—कुड़वप्रमाणं चूर्णीभूतद्रव्यं द्विगुणजले क्षिप्तमहोरात्रं स्थितं भवति, तस्मात् यो रसो जात उत्पन्नः सोऽपि स्वरस उत्तमो ज्ञेयः । कुड़वग्रहणमत्र सकलमानद्योतनार्थम् । अहोरात्रग्रहणेनैव हिमकषायाद्भिन्नो ज्ञातव्यः ॥ ३ ॥

मतान्तरमपि तद्यथा, आदायेत्यादि ।—स्वरसानामसम्भवे अविद्यमाने शुष्कद्रव्यं चूर्णं यथापरिमाणमादाय गृहीत्वा अष्टगुणितपानीये साध्यं क्वाथ्यमित्यर्थः, तस्मात् यत् पादावशेषं भवति तस्यापि स्वरससंज्ञा । यथापरिमाणादिना क्वाथाद्भिन्नमेतत् ॥ ४ ॥

इदानीमनुक्तेषु पानार्थं परिमाणपूर्वकं प्रयोगमाह, स्वरसस्येति ।—स्वरसस्य आद्यस्य अर्द्धं पलं प्रयोजयेत्, पानार्थमित्यर्थः । निशोषितमग्निसिद्धञ्च स्वरसं पलमात्रं पिबेदित्यर्थः, तयोः किञ्चिल्लघुत्वात् ॥ ५ ॥

स्वरसे मध्वादीनां प्रक्षेपमात्रा ।—

मधु श्वेता गुडं क्षारान् जीरकं लवणं तथा ।
घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत् ॥६॥

स यथा—

प्रमेहे स्वरसद्वयम् ।—

अमृताया रसः क्षौद्र-युक्तः सर्वप्रमेहजित् ।
हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ॥ ७ ॥

---

तत्र प्रक्षेपमाह, मध्वित्यादि ।—मध्वादिकं कोलमात्रं यथा स्यात्तथा क्षिपेत् । कोलं पलस्य चाष्टांशम् । मध्विति सामान्यग्रहणेन तज्जातयोऽष्टौ गृह्यन्ते ; तद्यथा—"पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥" (सु० सू० ४५ अ०) इति । एवमविशेषोक्तौ सर्वत्र । श्वेता सितशर्करा । गुडं प्रसिद्धं, तदुपलक्षितत्वेनान्ये इक्षुविकारा यथादोषापेक्षया गृह्यन्ते । क्षारानिति—बहुवचनत्वेन सर्वे क्षाराः, अनुक्ते यवक्षारमेव सर्वत्र । जीरकं प्रसिद्धं, सामान्यग्रहणेन पीतकृष्णादिकम्, अविशेषे श्वेतजीरकमेव । लवणमपि सामान्येन पञ्चलवणानि गृह्यन्ते ; तद्यथा—"सिन्धुसौवर्चलापेतं विडं सामुद्रजोद्भिदम्" इति । अनुक्ते सैन्धवमेव ग्राह्यं सर्वत्र । घृतं तैलं पक्वापक्वं नानाविधम् । तत्रानुक्ते तु गव्यं घृतं तिलतैलञ्च प्रधानमिति ; तथा हि—"घृतेषु गोघृतं श्रेष्ठं तैलेषु तिलजं तथा" इति । चूर्णादीनिति—व्योषचूर्णादीन् । आदिग्रहणेन क्षीर-मूत्रारिष्टयुक्तादयो रोगापेक्षया गृह्यन्ते ; यद्वा—गुटिकावलेहादयोऽप्यादिशब्देन ग्राह्याः ॥ ६ ॥

अथ व्याधिप्रत्यनीकार्थं बहून् स्वरसान् दर्शयन्नाह, स यथेति ।—स यथा इत्यादिवाक्येन प्रयोगान् प्रकटयति ग्रन्थकारः ; अथवा—गुणयुक्तिज्ञापनार्थं शिष्यवचनमिदम् । एवं सर्वत्र "स यथा" इति ज्ञातव्यम् । स्वरसानाह, अमृताया इति ।—अमृता गुडूची तस्या रसः स्वरसः । क्षौद्रयुक्त इति—मधुप्रक्षिप्तः । सर्वप्रमेहेति—विंशतिर्मेहाः । प्रयोगान्तरमाह, हरिद्रेति ।—धात्र्या रसः स्वरसः क्वथितो वा हरिद्राचूर्णयुक्तो मधुयुक्तश्च । वा-ग्रहणेनायमपि सर्वप्रमेहजिद्भवतीति तात्पर्य्यार्थः । * वा-ग्रहणेन हरिद्रायाः कल्कमपि देयम् ;

* वा-शब्दोऽयं पूर्वयोगापेक्षया, न तु हरिद्रायाः कल्कबोधनपरः । कल्कस्तु चूर्ण-

रक्तपित्तादौ स्वरसः।—

वासकस्वरसः पेयो मधुना रक्तपित्तजित्।
ज्वरकासक्षयहरः कामलाश्लेष्मपित्तहा॥ ८॥

कामलायां स्वरसाः।—

त्रिफलाया रसः क्षौद्र-युक्तो दार्वीरसोऽथवा।
निम्बस्य वा गुडूच्या वा पीतो जयति कामलाम्॥ ९॥

विषमज्वरेषु स्वरसद्वयम्।—

पीतो मरिचचूर्णेन तुलसीपत्रजो रसः।
द्रोणपुष्पीरसो वाऽपि निहन्ति विषमज्वरान्॥ १०॥

रक्तातीसारे स्वरसः।—

जम्ब्वाम्रामलकीनाञ्च पल्लवोत्थो रसो जयेत्।

---

तथा च तन्त्रान्तरे—"निशाकल्कयुतो धात्री-रसो वा माक्षिकान्वितः। मधुना त्रिफलाचूर्णं प्रमेहाणां विनाशनम्॥" इति॥ ७॥

वासक इत्यादि।—वासकः आटरूषकः, तस्य पत्राणि इति व्यवहारात्। मधुनेति प्रक्षेपः। अयञ्चोर्द्ध्वगे रक्तपित्ते विशेषेण योज्यः। शेषः सुगमः॥ ८॥

त्रिफलाया इति।—त्रिफलादीनां चतुर्णां स्वरसाः कामलां घ्नन्तीति। तत्र त्रिफलादार्व्योः क्वथितरसः, निम्बगुडूच्योस्तु सद्योरस एव। मधुप्रक्षेपः एषु चतुर्षु योगेषु ज्ञेयः। त्रिफला विख्याता, सा च हरीतक्यादिका। यद्यपि त्रिफलाशब्देन द्राक्षाकाश्मर्यपरूषकाण्यप्युच्यन्ते; तदुक्तं—"पथ्याविभीतधात्रीभिस्त्रिफला महती स्मृता। क्षुद्रा काश्मर्य्यमृद्वीका-परूषकफलैर्भवेत्॥" इति, तथाऽपि सर्वत्र गुण-प्राधान्यादाचार्य्यैर्हरीतक्यादीन्येव त्रिफलाशब्देन गृह्यन्ते। दार्वी दारुहरिद्रा, तस्यास्त्वक् ग्राह्या, त्वगभावे काष्ठमेवेति सर्वत्र॥ ९॥

विषमज्वरहरयोगमाह, पीत इति।—द्रोणपुष्पी "गुमा" इति लोके। मरिच-चूर्णमप्यत्र प्रक्षेप्यं, तच्च तीक्ष्णत्वान्माषकद्वयमिति व्यवहारः। विषमज्वरानिति—ऐकाहिकादीन्॥ १०॥

जम्ब्वाम्रेति।—जम्ब्वादीनां पल्लवोद्भवो रसो मध्वादियुक्तोऽतीसारं जयेत्।

---

शब्दस्य उपलक्षणत्वात् तन्त्रान्तरदर्शनाच्च धात्र्यैव, चूर्णस्यापि कल्कभेदत्वात् इति।

मध्वाज्यक्षीरसंयुक्तो रक्तातीसारमुल्बणम् ॥ ११ ॥

अतीसारे स्वरसः।—

स्थूलवब्बूलिकापत्र-रसः पानात् व्यपोहति।
सर्वातिसारान् श्योनाक-कुटजत्वग्रसोऽथवा ॥ १२ ॥

हिक्काश्वासादौ स्वरसः।—

आर्द्रकस्वरसः क्षौद्र-युक्तो वृषणवातनुत्।
श्वासकासारुचीर्हन्ति प्रतिश्यायं व्यपोहति ॥ १३ ॥

पार्श्वशूलादौ स्वरसः।—

बीजपूररसः पानान्मधुक्षारयुतो जयेत्।

पल्लवपदग्रहणेन कोमलपत्राणीत्यर्थः। आज्यं घृतम्। क्षीरं दुग्धम्। एके * "मध्वाज्य-क्षीरसंयुक्तम्" इति पठन्ति, व्याख्युक्तत्वात्, तथा हि—"आज्यं शोषज्वरश्वास-रक्त-पित्तातिसारजित्" इति। उल्बणमिति—प्रवृद्धं, चिरकालानुबद्धमित्यन्ये ॥ ११ ॥

स्थूलवब्बूलिकेति।—स्थूलवब्बूलिका आरण्योद्भवा, तथा अतिरूक्षत्वादेके पर्वतीया इति वदन्ति, सा चोर्द्धशाखाऽभिरूपलक्षिता प्रसिद्धैव। [ "स्थूलवच्छूलिकापत्र-रसपानात्" इति पाठान्तरम्। स्थूलवत् स्थूलगवत् शूलिका आनूपजाऽपि इति तात्पर्य्यार्थः; शूलिकेति 'छूलिका' कथिता; उक्तञ्च नाममालायां—"बब्बूलः खरलः शूली सेलकण्टोऽधिकण्टकः" इति। शूलिकाऽल्पविटपा बब्बूरीति लोके]। प्रयोगान्तरमाह, श्योनाकेत्यादि।—श्योनाककुटजयोस्त्वगुद्भवो रसस्तत्कार्य्यकर इति। श्योनाकत्वगुद्भवः कुटजत्वगुद्भवो वेति योगद्वयमिति केचित्। अत्रापि मधुप्रक्षेपः पूर्ववदनुसर्त्तव्यः। सर्वातिसारानिति—सप्तप्रकारानित्यर्थः ॥ १२ ॥

आर्द्रकेति।—आर्द्रकं स्वनाम्ना प्रसिद्धं, तद्रसः क्षौद्रप्रक्षिप्तो वृषणवातनुद्भवति। वृषणवातोऽण्डवातः, कुरण्ड इति केचित्। प्रतिश्यायं प्रतिश्यावरूपम् (?) ॥ १३ ॥

बीजपूरेति।—बीजपूररसो बीजपूरफलस्वरसः, कीदृशः? मधुक्षारयुतः मधु क्षौद्रं, क्षारोऽत्र यवक्षारः। अयं पानात् पार्श्वादिशूलान् जयेत्, नरस्येति शेषः।

* अयमेव पाठः साधुः; चक्रदत्ते—"जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत्। सङ्गृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ॥ तं पिबेत् मधुसंयुक्तं रक्तातीसारनाशनम् ॥" इति पाठदर्शनात्।

पार्श्वहृद्बस्तिशूलानि कोष्ठवायुञ्च दारुणम् ॥ १४ ॥

पित्तशूलप्लीहादौ स्वरसौ।—

शतावर्य्याश्च मधुना पित्तशूलहरो रसः।
निशाचूर्णयुतः कन्या-रसः प्लीहापचीहरः ॥ १५ ॥

अपच्यादौ स्वरसः।—

अलम्बुषायाः स्वरसः पीतो द्विपलमात्रया।
अपचीगण्डमालानां कामलायाश्च नाशनः ॥ १६ ॥

सूर्य्यावर्त्तादौ स्वरसः।—

स च मुण्ड्याः रसः कोष्णो मरिचैरवधूलितः।
जयेत् सप्तदिनाभ्यासात् सूर्य्यावर्त्तार्द्धभेदकौ ॥ १७ ॥

शूलशब्दः पार्श्वादिभिः सम्बध्यते, तेन पार्श्वशूलं हृच्छूलं वस्तिशूलञ्चेति। वस्ति-र्मूत्राधारः। कोष्ठवायुं पक्वाशयगतम्। दारुणं पीड़ाकरम्। बीजपूर इति सामान्य-ग्रहणेन तन्मूलक्वाथरूपं स्वरसमित्याहुरेके ॥ १४ ॥

शतावर्य्याश्चेति।—शतावरी प्रसिद्धा, तस्याः सद्योरसः। अयं प्रातरेव योज्यः। मधुनेति—मधुमिलितः। कन्यारसः कौमारीस्वरसः, "घाँि" इति लोके। निशा-चूर्णयुत इति—हारिद्राचूर्णप्रक्षिप्तः। प्लीहापचितत्वाद्रोगविशेषः, प्लीहवृद्धिरिति लोके। अपची ग्रन्थिभेदः ॥ १५ ॥

अलम्बुषाया इति।—अलम्बुषा मुण्डितिका, तस्याः स्वरसः सद्यस्कः कथितः। द्विपलग्रहणमतिलघुत्वात्, प्रबलरोगार्थत्वाद्वा। अपचीगण्डमालादयोऽपि प्रबला एव ॥ १६ ॥

स इति।—*मुण्ड्या रस इति—मुण्डी केदारमुण्डी, भूकदम्ब इति प्रसिद्धः, तस्या रसः, स च कोष्णः ईषदुष्णः; अत एवात्र क्वथितरसो ज्ञेयः। मरिचस्य तीक्ष्णत्वात् स्वल्पं देयम्। सप्तदिनग्रहणेनास्य माहिमा कथ्यते। सूर्य्यावर्त्तार्द्ध-भेदकौ शिरोरोगौ पठितौ ॥ १७ ॥

* "स च मुण्ड्याः रसः" इत्यत्र "शक्रमुण्ड्याः रसः" इति गूढार्थदीपिकाधृतपाठः। शक्रकुरव, इत्कृत्य रसः कर्त्तव्य इति तत्र व्याख्या।

उन्मादे स्वरसाः।—

ब्राह्मीकुष्माण्डषड्ग्रन्था-शङ्खिनीस्वरसाः पृथक्।
मधुकुष्ठयुताः पीताः सर्वोन्मादापहारिणः॥ १८॥

कोद्रवमदे स्वरसः।—

कुष्माण्डकस्य स्वरसो गुड़ेन सह योजितः।
दुष्टकोद्रवसञ्जात-मदं पानात् व्यपोहति॥ १९॥

छिन्नव्रणे स्वरसः।—

खड्गादिच्छिन्नगात्रस्य तत्कालं पूरितो व्रणः।
गाङ्गेरुकीमूलरसैर्जायते गतवेदनः॥ २०॥

पुटपाकस्वरसविधिः।—

पुटपाकस्य कल्कस्य स्वरसो गृह्यते यतः।

---

ब्राह्मीति।—ब्राह्मीत्यादियोगचतुष्टयं सर्वोन्मादहरं भवति। ब्राह्मी स्वनामख्याता। कुष्माण्डः कुष्माण्डस्वरसः, अभावे क्वथितं कुष्माण्डफलम्। * षड्ग्रन्था शठी, तदभावे वचा ग्राह्या। शङ्खिनी नाकुली प्रसिद्धा। एतेषां सद्योरसः अभावे क्वथितो वा। † मधुकुष्ठयुत इति प्रत्येकं रससम्बन्धः। मधु चौद्रम्। कुष्ठं प्रसिद्धं, तच्चूर्णमित्यर्थः। सर्वोन्मादा इति—दोषोद्भवा भूतोद्भवाश्च॥ १८॥

कुष्माण्डकस्येति।—दुष्टकोद्रवसञ्जातं दुष्टं मदकरं, कोद्रवमन्नविशेषः। गुडाभावे शर्करादयोऽपि योज्या गुडोपलक्षितत्वात्॥ १९॥

खड्गादीति।—गाङ्गेरुकी नागबला, तस्या मूलस्वरसेन पत्ररसेन वा पूरित; यथायोग्यपरिमाणेन पूरितः, सद्योव्रणो गतवेदनो भवति। तत्कालमिति—छिन्नमात्र तद्दिने वा। स्वरसोऽत्र सद्योरसः, न तु क्वाथादिरूपः। खड्गादिच्छिन्नगात्रस्येति शस्त्रादिग्रहणात् शक्तिकुन्तादिभिश्छिन्नगात्रस्येत्यर्थः॥ २०॥

इदानीं पुटपाकस्वरूपस्य रसस्य कर्त्तव्यताविधिमाह, पुटपाकस्येति।—यतो हेतोः पूर्वं कल्करूपस्य पश्चात् पुटपाकस्य द्रव्यस्य रसो गृह्यते अतस्तस्य

---

* षड्ग्रन्था शब्देन वचैव सर्वत्र गृह्यते, न तु शटी इति।

† "मधु कुष्ठं चौद्रमात्रं यथाबलं वा" इति गू० टी०।

अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥ २१ ॥

* पुटपाकस्य मात्रेयं लेपस्याङ्गारवर्णता ।

लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाऽङ्गुष्ठमात्रकम् ॥

काश्मरीवटजम्ब्वादि-पत्रैर्वेष्टनमुत्तमम् ॥ २२ ॥

पुटपाकस्वरसस्य तत्र प्रक्षेपस्य च मात्रा ।—

पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ।

कल्कचूर्णद्रवाद्यास्तु देयाः स्वरसवत् बुधैः ॥२३॥

स यथा—

कुटजपुटपाक ।—

तत्कालाकृष्टकुटज-त्वच तण्डुलवारिणा ।

पिष्टां चतुष्पलमितां जम्बूपत्रैर्वेष्टिताम् ॥ २४ ॥

युक्तिः कर्त्तव्यविधिरत्रास्मिन् ग्रन्थे मयाऽऽचार्य्येण उच्यते, अधुनेति शेषः। तद्युक्तिर्यथा, पुटपाकस्य मात्रेति—पुटपाकार्हो द्रव्यगोलकः अग्नौ तावत् स्थितः यावत् लेपः अङ्गारसदृशो भवति, † इयं मात्रा लेपस्येत्यर्थः। लेपोऽपि मृदादिना द्व्यङ्गुलोन्मितः काश्मर्य्यादीनां पत्रैर्वेष्टनञ्च। लेपः गोधूमचूर्णादिना तदङ्गुष्ठमात्रः प्रथमं कार्य्यः, अग्रे वक्ष्यमाणत्वात्, पश्चात् मृदादीनां प्रलेप इत्यर्थः। उत्तममिति—सूत्रादिवेष्टनेन न्यूनाधिक्यरहितं वेष्टनमित्यर्थः। काश्मर्य्यादयः प्रसिद्धाः। आदिग्रहणात् विज्ञातव्यानां पत्रैर्वा वेष्टनं न निषिद्धम् ॥ २१।२२ ॥

अस्यैव पानार्थं मानमाह, पलमात्र इति।—रसः पुटपाकोद्भवः, स पलमात्रः पलोन्मितः ग्राह्यः। मधु कर्षप्रमाणं क्षिपेत। अत्रैव कल्काद्याः पूर्वस्वरसवत् देयाः, प्रक्षेपार्थेनेति भावः। द्रवोऽत्र घृतक्षीरतैलादिः; आदिशब्देन पूर्वोक्तानां यान्यवशिष्टानि तान्यत्र ज्ञातव्यानि ॥ २३ ॥

स यथेति वचनात् पुटपाकस्वरसोऽयं यथा रोगेषु विहितस्तं तथैव दर्शयन्नाह, तदिति।—कुटजो गिरिमल्लिका, तस्य त्वक् छल्ली। तण्डुलवारिणेति—तण्डुलधावनेन।

* "पुटपाकस्य मात्रेयम्—" इत्यादिस्थाने "पुटपाकस्य पाकोऽयं लेपस्यारुणवर्णता (बहिरारक्तवर्णता)। लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाऽङ्गुलमात्रकम् ॥" इति तन्त्रान्तरीयपाठो युक्तः।

† इयं मात्रा पाकस्य इत्येव पाठो युक्तः।

सूत्रेण बद्धां गोधूम-पिष्टेन परिवेष्टिताम्।
लिप्ताञ्च घनपङ्केन गोमयैर्वह्निना दहेत्॥ २५॥
अङ्गारवर्णाञ्च मृदं दृष्ट्वा वह्नेः समुद्धरेत्।
ततो रसं गृहीत्वा च शीतं क्षौद्रयुतं पिबेत्॥
जयेत् सर्वानतीसारान् दुस्तरान् सुचिरोत्थितान्॥२६॥

तण्डुलोदकविधिः।—

कण्डितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत्।
भावयित्वा जलं ग्राह्यं देयं सर्वत्र कर्मसु॥ २७॥

अरलुपुटपाकः।—

अरलुत्वक्कृतस्यैव पुटपाकोऽग्निदीपनः।
मधुमोचरसाभ्याञ्च युक्तः सर्वातिसारजित्॥ २८॥

शिशिरपुटपाकः।—

न्यग्रोधादेश्च कल्केन पूरयेच्छीरितान्तरैः।

---

गोधूमपिष्टेन लेपनं मल्लेपनञ्च, मल्लेपनन्तु द्व्यङ्गुलपरिमितम्। शीतमिति मधुविरोधात्; यतः,—"उष्णैर्विरुध्यते क्षौद्रम्" इति। शेषं सुगमम्॥ २४—२६॥

अथात्र प्रसङ्गतस्तण्डुलजलस्य विधिमाह, कण्डितं तण्डुलपलमिति।—कण्डितं स्वच्छं तत् मुषलादिभिरुदूखले कुट्टितमित्यर्थः। अष्टगुणिते जले पलाष्टकपानीये भावयित्वा प्रक्षाल्य जलं ग्राह्यं तत्तण्डुलजलमिति। एतच्चानुक्ते सर्वत्र योज्यमित्यर्थः॥ २७॥

अरलुपुटपाकमाह, अरल्विति।—* अरलुः वृक्षविशेषः प्रसिद्ध एव, तदभावे श्योनाकः, तस्य त्वक्कृतः पुटपाकरसः केवलः अग्निकरो भवति। चकारात् अत्रापि पूर्ववत् पुटपाकयुक्तिर्ज्ञातव्या। यदा अयमेव रसो मधुमोचरसाभ्यां युक्तस्तदा सर्वातिसारजिद्भवति। मोचरसः शाल्मलीनिर्यासः॥ २८॥

अथ शिशिरपुटपाकमाह, न्यग्रोधादेरिति।—अस्य विधिस्तु पूर्ववज्ज्ञातव्यः। न्यग्रोधादेरिति—न्यग्रोधादिगणस्य कल्केनेत्यर्थः, तद्यथा—"न्यग्रोधोडुम्बराश्वत्थ-

---

* अरलुरिति श्योनाकस्यैव नामान्तरं, न तु अरल्वभावे श्योनाकः केश्चित् टीकाकारैर्लिखितः, न वा निघण्ट्वादौ दृष्टः।

निरन्नमुदरं सम्यक् पुटपाकेन तत् पचेत्॥
तत्कल्कस्य रसः क्षौद्र-युक्तः सर्वातिसारनुत्॥ २९॥

दाडिमीपुटपाकः।—

पुटपाकेन विपचेत् सुपक्वं दाडिमीफलम्।
तद्रसो मधुसंयुक्तः सर्वातीसारनाशनः॥ ३०॥

बीजपूरादिपुटपाकः।

बीजपूराम्रजम्बूनां पल्लवानि जटाः पृथक्।
विपचेत् पुटपाकेन क्षौद्रयुक्तश्च तद्रसः॥
छर्दिं निवारयेत् घोरां सर्वदोषसमुद्भवाम्॥ ३१॥

---

प्लक्षमधुककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयप्रियालमधुकरोहिणीवञ्जुलकदम्ब-बदरीतिन्दुकीसल्लकीलोध्रसावरलोध्रभल्लातकपलाशा नन्दीवृक्षश्च" (सु० सू० ३८ अ०) इति न्यग्रोधादिगणः सुश्रुतात्। एतेषां व्यस्तसमस्तानां यथालाभं परिभाषोक्ताः त्वगादयो ग्राह्या इति वृद्धानां व्यवहारः। एके न्यग्रोधादिग्रहणेन पञ्चवल्कलानि मन्यन्ते; तद्यथा—"न्यग्रोधोडुम्बराश्वत्थ-प्लक्षवेतसवल्कलैः। पञ्चवल्कम्" इत्यादि। गौरतित्तिरेरिति यद्गौरग्रहणं तद्विशिष्टगुणज्ञापनार्थम्; "तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः॥" (सु० सू० ४६ अ०) इति वचनात्। निरन्नमित्यत्र अन्नग्रहणेन यकृत्प्लीहादिकमपि गृह्यते, तैरपि रहितमित्यर्थः॥ २९॥

इदानीं दाडिमीपुटपाकमाह, पुटपाकेनेति।—सुपक्वग्रहणम् अम्लत्व-च्छेदार्थम्; यतः अम्लत्वे तत्कार्य्यकरं न भवति; तथा हि—"दाडिमं दीपनं ग्राहि द्विधा स्वाद्वम्लभेदतः। तयोः स्वादु त्रिदोषघ्नमम्लं वातबलासहृत्॥" इति। तद्रसः पुटपाकरसः। मधुसंयुक्त इति—मधुप्रक्षेपयुक्तः॥ ३०॥

अथ जटापल्लवपुटपाकमाह, बीजेति।—बीजपूरादीनां मिलित्वा गुणविशेषेण योगद्वयम्, एकं पल्लवकृतम्, अपरं जटाकृतञ्च; परस्पराभावविशेषात् (?)। पृथगिति ग्रहणेन योगत्रयमेतत्। एतेन किमुक्तम्? बीजपूरादीनां व्यस्तानां पल्लव-पुटपाकः जटापुटपाको वा कर्त्तव्य इति तात्पर्य्यार्थः। घोरामिति—अनिवार्य्याम्। सर्वदोषसमुद्भवामिति—त्रिदोषजनिताम्॥ ३१॥

वासापुटपाकः ।—

पिष्टानां वृषपत्राणां पुटपाकरसो हिमः ।
मधुयुक्तो जयेद्रक्त-पित्तकासज्वरक्षतान् ॥ ३२ ॥

कण्टकारीपञ्चाङ्गपुटपाकः ।—

पचेत् क्षुद्रां सपञ्चाङ्गां पुटपाकेन तद्रसः ।
पिप्पलीचूर्णसंयुक्तः कासश्वासकफापहः ॥ ३३ ॥

बिभीतकपुटपाकः ।—

बिभीतकफलं किञ्चित् घृतेनाभ्यज्य लेपयेत् ।
गोधूमपिष्टेनाङ्गारैर्विपचेत् पुटपाकवत् ॥ ३४ ॥
ततः पक्वं समुद्धृत्य त्वचं तस्य मुखे क्षिपेत् ।
कासश्वासप्रतिश्याय-स्वरभङ्गान् जयेत्ततः ॥ ३५ ॥

शुण्ठीपुटपाकः ।—

चूर्णं किञ्चित् घृताभ्यक्तं शुण्ठ्या एरण्डजैर्दलैः ।
वेष्टितं पुटपाकेन विपचेन्मन्दवह्निना ॥ ३६ ॥
तत उद्धृत्य तच्चूर्णं ग्राह्यं प्रातः सितान्वितम् ।

---

वासापुटपाकमाह, पिष्टानामिति ।—पिष्टानां कल्कीभूतानाम् । वृषः आटरूषकः । हिम इति—शीतलः, न तु हिमसंज्ञः कषायः । क्षतमत्रोरःक्षतम् ॥ ३२ ॥

अथ कण्टकारीपुटपाकमाह, पचेदिति ।—क्षुद्रा लघुकण्टकारिका ; कीदृशी ? तामाह, सपञ्चाङ्गामिति—मूलत्वक्पत्रपुष्पफलसहितामित्यर्थः । पिप्पली चात्र स्वल्पमाना देया तीक्ष्णत्वात् ॥ ३३ ॥

बिभीतकपुटपाकमाह, बिभीतकेति ।—बिभीतको "बहेरे" इति लोके, तानि सकलानि गृहीत्वा किञ्चिद्घृतेनाभ्यज्य पूर्ववत् पुटपाकविधानेन विपचेत् । अङ्गारग्रहणं धूमव्यवच्छेदार्थम् । अयं योगो विशेषेण सायमुपयोज्यः । प्रतिश्यायो नासास्रावः । प्रकृतिभूतस्य स्वरस्यान्यथाभावः स्वरभङ्ग इत्युच्यते ॥ ३४ ॥ ३५ ॥

अधुना शुण्ठीपुटपाकमाह, चूर्णमिति ।—शुण्ठी प्रसिद्धा, तस्याश्चूर्णं वस्त्रगालितं, तच्च घृताभ्यक्तं कृत्वा एरण्डपत्रैश्च वेष्टयित्वा पुटपाकयुक्त्या विपचेत् । सितान्वित-

तेन यान्ति शमं पीड़ा आमातीसारसम्भवाः ॥ ३७ ॥

द्वितीयशुण्ठीपुटपाकः।—

शुण्ठीकल्कं विनिक्षिप्य रसैरेरण्डमूलजैः।
विपचेत् पुटपाकेन तद्रसः क्षौद्रसंयुतः ॥
आमवातसमुद्भूतां पीड़ां जयति दुस्तराम् ॥ ३८ ॥

शूरणपुटपाकः।—

शौरणं कन्दमादाय पुटपाकेन पाचयेत्।
सतैललवणस्तस्य रसश्चार्शोविकारनुत् ॥ ३९ ॥

मृगशृङ्गपुटपाकः।—

शरावसम्पुटे दग्धं शृङ्गं हरिणजं पिबेत्।
गव्येन सर्पिषा युक्तं हृच्छूलं नाशयेद्ध्रुवम् ॥ ४० ॥

इति श्रीदामोदरसूनुश्रीशार्ङ्गधराचार्य्यविरचितायां शार्ङ्गधरसंहितायां मध्यखण्डे चिकित्सितस्थाने स्वरसादिकल्पनानाम प्रथमोऽध्यायः ॥ १ ॥

मिति—सिताऽत्र चूर्णसमतुलिता। प्रातर्ग्रहणमधोभागगतरोगनिवृत्त्यर्थम। मन्दवह्निग्रहणं विद्रवत्वात् दग्धच्यवच्छेदार्थम्। मद्य-मानमप्यत्र चूर्णवत् ॥ ३६ ॥ ३७ ॥

अपरमप्याह, शुण्ठीकल्कमिति।—भावनि भूतवदुपचारः; सा शुण्ठी एरण्डमूलरसेन सह ईषत पेषिता सती कल्कमित्युच्यते। रसोऽत्र सद्यस्कः क्वथितो वा। क्षौद्रसंयुतो मधुप्रक्षेपयुक्तः। दुस्तरामित्यनिवार्य्याम् ॥ ३८ ॥

अथ शूरणपुटपाकमाह, शौरणमिति।—शूरणस्येदं कन्दमित्यर्थः, तत पुटपाकयुक्त्या विपाच्य सतैललवणान्वितस्तद्रसोऽर्शोविकारनुद्भवति। सतैललवण इति—सामान्यग्रहणेन तिलतैलं सैन्धवलवणञ्च ग्राह्यम्। एतयोर्मानं प्रक्षेपं पूर्ववत् ॥ ३९॥

इदानीं मृगशृङ्गपुटपाकमाह, शरावेति।—हरिणाज्जातं हरिणजं, शृङ्गमिति—विषाणं, तच्च खण्डितं कृत्वा ग्राह्यम्। दग्धमिति—पुटपाकयुक्त्या, अत एव मृदाऽवलिप्तं शरावसम्पुटं कार्य्यम्। गव्यग्रहणमन्यघृतव्यवच्छेदार्थं तस्यातिश्रेष्ठत्वात्। भक्षणमत्र क्षाराष्टकवज्ज्ञेयम् (?)। ध्रुवमिति—सद्यः प्रत्ययकारको योगोऽयम् ॥४०॥

इति श्रीवाक्यान्वयप्रकाशवैद्यश्रीभावसिंहात्मजेनाढ़मल्लेन विरचितायां शार्ङ्गधरदीपिकायां मध्यखण्डे चिकित्सितस्थाने स्वरसादिकल्पनाध्यायः प्रथमः ॥१॥

# द्वितीयोऽध्यायः।

## क्वाथकल्पना।—

क्वाथविधिः।—

पानीयं षोड़शगुणं क्षुस्ले द्रव्यपले क्षिपेत्।
मृत्पात्रे क्वाथयेत् ग्राह्यमष्टमांशावशेषितम्॥
तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम्॥ १॥

इदानीं क्वाथकल्पनां व्याख्यास्यामः; पूर्वं तावत् तत्स्वरूपमाह, पानीयमिति।—क्षुस्ले कुट्टिते द्रव्यपले क्वाथ्यद्रव्यपले पानीयं जलं षोडशगुणं द्रव्यभागापेक्षया, तेन षोडशपलमित्यर्थः। अष्टमांशावशेषितमिति—द्विपलावशेषमित्यर्थः। तज्जलमिति—क्वथितजलम्। कोष्णमिति—ईषदुष्णम्; उष्णत्वमस्य क्वथितत्वादेव, न तु प्रतशीतं पुनरुष्णमिति दोषकरत्वात्; तथा चोक्तं—"तैलं घृतञ्च पानीयं कषायं व्यञ्जनादिकम्। प्रतशीतं पुनस्तप्तं तत् सर्वं विषवद्भवेत्॥" इति। मृद्वग्निसाधितमिति—सम्यक् वीर्य्योत्कृष्टत्वात् मन्दपावकपाचितमिति भावः; दग्धघनपिच्छिलादिभयादित्येके वदन्ति। धीमानिति ग्रहणेन द्रव्याणां मृदुमध्यकठिनत्वादिकमवेक्ष्य तदनुमानं जलं दद्यादिति; तथा हि—"चतुर्गुणं मृदौ द्रव्ये काठिनेऽष्टगुणं जलम्। अत्यर्थकाठिने देयं बुधैः षोडशिकं जलम्॥" इति। एतच्च स्नेहपाकविषये प्रायशः प्रचरति। ननु मुस्तादिक्वाथ्यद्रव्यमष्टगुणिते जले साध्यते इति व्यवहारो दृश्यते, तत् कथमत्र षोडशगुणम्? उच्यते.—क्वाथ्यगणो मृदुमध्यकठिनद्रव्यैर्मिश्रित्वा पच्यते, तस्मात् मध्य-मानमनुसरन्ति प्राज्ञवैद्याः, न दोषः; उक्तञ्च यतः,—"मुस्तादिक्वाथ्यसङ्घाते मानानुक्तौ चिकित्सकाः। मध्यत्वोभयभागित्वादिच्छन्त्यष्टगुणं जलम्॥" इति। द्रव्य-मानमपि दोषापेक्षया, न तु नियतपलमानमित्येके भाषन्ते; कुतः? धीमानिति ग्रहणात्; तथा हि—"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे। जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च॥" इति। * एतच्च विषाधिकारे प्रोक्तं न तु सर्वत्र। नन्वपरे चतुर्थांशावशेषितं क्वाथं वदन्ति; तथा स्मृतं—"क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते। चतुर्भागावशेषन्तु पेयं पलचतुष्टयम्॥" एतदपि विषा-

* परिभाषेयं श्रीचक्रपाणिना ज्वराधिकारे सर्वरोगेष्वेव अविशेषेण लिखिता न तु विषाधिकारे इति।

क्वाथस्य पर्य्यायः।—

शृतः क्वाथः कषायश्च निर्य्यूहः स निगद्यते ॥ २ ॥

क्वाथसेवने कालो मात्रा च।—

आहाररसपाके च सञ्जाते द्विपलोन्मितम्।

वृद्धवैद्योपदेशेन पिबेत् क्वाथं सुपाचितम् ॥ ३ ॥

क्वाथे प्रक्षेप्याणां मानानिर्देशः।—

क्वाथे क्षिपेत् सितामंशैश्चतुर्थाष्टमषोड़शैः।

धिकारे न तु सर्व्वत्र। यद्वा—क्वाथस्तु पाचनादिकभेदेन सप्तविधः; तद्यथा—"पाचनो दीपनीयश्च शोधनः शमनस्तथा। तर्पणः क्लेदनः शोषी क्वाथः सप्तविधो मतः॥" (हा० ३ स्था० १ अ०) तस्मात् पाचनशोधनार्थं * चतुर्थांशः; "पाचनः शोधनीयश्च पादशेषः प्रशस्यते" इत्यादि वचनात्, अर्थाभिष्टार्थञ्च द्विपलमिति न विरोधः। यद्वा—दीप्तादीनां बलाबलविचारादुभयथापि न कश्चिद्दोषः; यतः,—"दीप्तानलं महाकायं पाययेत्त्वञ्जलिं जलम्। अन्ये त्वष्टौ परित्यज्य प्रहृतिज्ञ चिकित्सका:॥" इति ॥ १ ॥

इदानीं क्वाथस्य पर्य्यायनामान्याह, शृत इत्यादि।—शृतः, क्वाथः, कषायः, निर्य्यूह इति चत्वारः ॥२॥

अत्राचार्य्यो द्विपलमिति स्वोक्तत्वात्तमप्यपरदृष्टान्तेन दर्शयति, तमाह, आहारेति।—वृद्धवैद्योपदेशेनेति ग्रहणेन द्विपलमेव इति पारम्पर्य्यो व्यवहारः, अत एव तन्मतमालोच्य शार्ङ्गधरेणात्र लिखितः; यतः,—"क्वाथत्यागमानञ्च कल्पस्त्वष्टभागाव-शेषितम्। पारम्पर्य्योपदेशेन वृद्धवैद्याः पलद्वयम्॥" इति। सुपाचितमिति—गन्धवर्णरसान्वितम्; तदुक्तं—"द्रव्यस्य गन्धवर्णैश्च तुल्यं क्वाथ्यकरं विदुः। तद्दद्विगुणं गुडाय कषायममृतोपमम्॥" इति। आहाररसपाके इति पदमन्यव्याधि-प्रकोपव्यवच्छेदार्थम; यतः,—"औषधशेषे भुक्तं पीतञ्च तथौषधं सशेषेऽन्ने। न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च॥" इति ॥३॥

इदानीं प्रक्षेपनिमित्तं द्रव्याणां परिमाणमाह, क्वाथे इति।—सिता शर्करा, सा च † क्वथितजलस्य चतुर्थाष्टमषोड़शैरंशैः प्रक्षेप्या ज्ञेया, अत्रानुक्रमो बोद्धव्यः।

* "पाचनोऽर्द्धावशेषः स्यात् शोधनो द्वादशांशकः" इति हारीतमतम्।

† क्वथितजलस्य इत्यादि टीकाकारोक्तिः न समीचीना, "प्रक्षेपः पादिकः क्वाथ्यात्" इति शास्त्रात् क्वाथ्यस्यैव पादादिरूपः प्रक्षेपः सर्व्वत्र वैद्यैः आद्रियते, न तु क्वाथस्य, प्रक्षेपभूयस्त्वादिति।

वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥ ४ ॥
जीरकं गुग्गुलुं क्षारं लवणञ्च शिलाजतु।
हिङ्गु त्रिकटुकञ्चैव क्वाथे शाणोन्मितं क्षिपेत् ॥ ५ ॥
क्षीरं घृतं गुड़ं तैलं मूत्रं चान्यद्रवं तथा।
कल्कं चूर्णादिकं क्वाथे निक्षिपेत् कर्षसम्मितम् ॥ ६ ॥

अनावृतमुखपात्रे क्वाथकरणे दोषनिर्देशः।—

(* अपिधानमुखे पात्रे जलं दुर्जरतां व्रजेत्।
तस्मादावरणं त्यक्त्वा क्वाथादीनां विनिश्चयः ॥ )

स यथा—

सर्वज्वरे गुडूच्यादिः।—

गुडूचीधान्यकारिष्टरक्तचन्दनपद्मकैः।
गुडूच्यादिगणक्वाथः सर्वज्वरहरः स्मृतः॥
दीपनो दाहहृल्लास-तृष्णाच्छर्द्यरुचीर्जयेत् ॥ ७ ॥

मधु च विपरीतमिति—शर्करापरिमाणात्; एतेन किमुक्तम्? वातातङ्के सिता चतुर्थांशा क्वथितजलादित्यर्थः, पित्तातङ्केऽष्टमांशा, कफातङ्के षोडशांशा इति। मधु विपरीतं यथा—वातातङ्के षोडशांशं, पित्तातङ्केऽष्टमांशं, कफातङ्के चतुर्थांशमिति भावः। अपरांश्चाह, जीरकमित्यादि।—जीरकादित्रिकटुकान्तं द्रव्यं टङ्कप्रमितं क्षिपेदिति क्वाथे; तत्र क्षारं यवक्षारादि। लवणं सैन्धवादि। त्रिकटुकं शुण्ठीमरिचपिप्पलीसंज्ञकम्। द्रवप्रक्षेपमाह, क्षीरमित्यादि।—क्षीरादीनि कर्षमितानि। तत्र गुड़ोपलक्षितत्वेन सितादयोऽपि सर्वेक्षुविकारा गृह्यन्ते। अन्यद्रवमिति—तोयमद्यासवारिष्टशुक्तादिकम्। चूर्णादिकम् इत्यत्रादिग्रहणात् गुटिकाऽवलेहादयो बोद्धव्याः। कर्षं पलचतुर्थांशमिति ॥ ४—६ ॥

इदानीं ज्वरादिरोगनाशार्थं बहुविधान् क्वाथान् दर्शयन्नाह, स यथेति।—पूर्वं व्याख्यातम्। गुडूच्यादिगणः क्वाथरूपः सर्वज्वरहरो भवति दीपनश्च दाहादींश्च जयति। तत्रारिष्टो निम्बः। पद्मकं पद्मकाष्ठं, यत्र पद्ममस्ति तत्र पद्मकेशरम्। दीपनमग्नेः। हृल्लास इति—असकृत् ष्ठीवनम्। ननु गुडूच्यादिको गणः प्रायेण

* श्लोकोऽयं प्रक्षिप्त इति केचित्।

वातज्वरे गुडूच्यादिः।—

गुडूचीपिप्पलीमूल-नागरैः पाचनं स्मृतम्।
दद्याद्वातज्वरे पूर्ण-लिङ्गे सप्तमवासरे ॥ ८ ॥

वातज्वरे शालपर्ण्यादिः।—

शालपर्णी बला रास्ना गुडूची सारिवा तथा।
आसां क्वाथं पिबेत् कोष्णं तीव्रवातज्वरच्छिदम् ॥ ९ ॥

---

पित्तप्रायोपशमनिमित्तं भवति, तत् कथमवादौ सर्वज्वरहरः प्रोक्तः? उच्यते,—सर्वज्वरे पित्ताविरोधिनी क्रिया कार्य्येति सिध्यति; तदुक्तं वाग्भटे—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम् ॥" (वा० सू० १ अ०) इति न दोषः ॥ ७ ॥

गुडूचीति।—गुडूच्यादिभिस्त्रिभिर्द्रव्यैः शृतं क्वथितं वातज्वरे पाचनमिति। कथम्भूते? पूर्णलिङ्गे सप्तमवासरे वेपथुविषमवेगादिभिरुपलक्षिते इत्यर्थः, अत एव सप्तमवासरे दद्यादिति, यतः,—"वातिकः सप्तरात्रेण" इत्यादिवाक्यं दृश्यते हि। सप्तमदिनग्रहणं ज्वरस्य तारुण्यनिषेधार्थं, यतः सप्ताहादर्वाक् ज्वरस्य तरुणता कथ्यते; तथा हि—"आ सप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः" (पुष्कलावत०) "न कषायं प्रशंसन्ति नराणां तरुणज्वरे। कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः ॥" (हा० ३य स्था० १ अ०) इति। ननु सप्तरात्रं ज्वरस्य तरुणत्वं, तत्र भेषजनिषेधः, तदुपरि वातिको ज्वरः पाकं गच्छति, तत् कथं पाचनादिकमुक्तम्, एतत् सर्वं व्यर्थम्? उच्यते—कषायद्रव्यकृतपाचनकषायो निषिद्धः, न तु स्वरसादिः; तथा ह्युक्तं—"न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते। यः कषायकषायः स्यात् स वर्ज्यस्तरुणे ज्वरे ॥" (च० चि० ज्वर०) इति। यद्वा—आमादयोऽवस्था दोषाणां, तत्र द्विविधा हि सामता, एका रसस्य, अपरा दोषस्य, दोषसामता तरुणतारूपा, रससामता मुखवैरस्यादिलक्षणा, सा सप्ताहात् परतोऽप्यनुवर्त्तते, तरुणतारूपा सामताऽष्टाहादर्वागिति, एतत् प्रयोजनं तरुणतारूपदोषसामतायामौषधं नोपयुज्यते, रससामतायान्तु पाचनं दीयते; अत एवाह चरकः,—"ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम्। पाचनं शमनीयं वा कषायं पाययेत्तु तम् ॥" (च० चि० ज्वर०) इति। एवं कफज्वरेऽपि बोद्धव्यम् ॥ ८ ॥

अपराण्याह, शालपर्णीति।—शालपर्ण्यादीनां क्वाथः प्रौढादीन् (?) हन्तीति। शालपर्णी प्रसिद्धा। सारिवा अनन्तमूलम्, "आफोड़" इति लोके।

वातज्वरे काश्मर्यादिः।—

काश्मरीसारिवाद्राक्षा-त्रायमाणाऽमृताभवः।
कषायः सगुड़ः पीतो वातज्वरविनाशनः॥ १०॥

पित्तज्वरे कट्फलादिः।—

कट्फलेन्द्रयवाम्बष्ठा-तिक्तामुस्तैः शृतं जलम्।
पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम्॥ ११॥

पित्तज्वरे पर्पटादिः।—

पर्पटो वासकस्तिक्ता कैरातो धन्वयासकः।
प्रियङ्गुश्च कृतः क्वाथ एषां शर्करया युतः॥
पिपासादाहपित्तास्र-युतं पित्तज्वरं जयेत्॥ १२॥

एके रास्नास्थाने द्राक्षा इति पठन्ति। ज्वरोऽत्र वातिकः, ग्रन्थान्तरेऽपि तद्यथा—"गुडूची सारिवा द्राक्षा बला चांशुमती तथा। एषोऽपि परमः सिद्धो वातज्वरविनाशनः॥" इति॥ ९॥

अन्यदपि आह, काश्मरीत्यादि।—काश्मरी गाम्भारी। त्रायमाणा स्वनामख्याता। अमृता गुडूची। कषायोऽत्र क्वथितः। सगुड इति—गुडप्रक्षिप्तः॥१०॥

अथ पित्तज्वरे पाचनमाह, कट्फलेत्यादि।—कट्फलादिपाचनं पित्तज्वरे प्रशस्तमेव। कट्फलं प्रसिद्धम्। इन्द्रयवः कुटजबीजम्। अम्बष्ठा पाठा। तिक्ता कटुरोहिणी। दशमेऽह्नि इति—विचारस्तत्र पूर्वं लिखितः (?) तीव्रदाहादियुक्ते। एके शर्कराप्रक्षेपोऽत्र मन्यन्ते; यतः,—* "शर्करामधुरो हन्ति कषायं पैत्तिकं ज्वरम्" (सु० उ० ३९ अ०) इति। तन्न सर्वसम्मतम्॥११॥

पर्पट इति।—पर्पटादिक्वाथः पित्तज्वरं हन्तीति। पर्पटः स्वनामप्रसिद्धः। वासक आटरूषकः। तिक्ता कटुरोहिणी। कैरातो भूनिम्बः। धन्वयासो दुरालभा। प्रियङ्गुर्लताविशेषः, तस्याः फलानि; न तु कर्षप्रियङ्गुः; तथा चोक्तं—"फलिनी

* श्लोकार्द्धोऽयं सुश्रुते श्रीपर्ण्यादिक्वाथे पठितः, न तु कट्फलादौ। तथा च—"श्रीपर्णीचन्दनोशीर-परूषकमधूकजः। शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम्॥" इति।

पित्तज्वरे द्राक्षादिः।—

द्राक्षा हरीतकी मुस्तं कटुकी कृतमालकः।
पर्पटश्च कृतः क्वाथ एषां पित्तज्वरापहः॥
तृष्णमूर्च्छादाहपित्तासृक्-शमनो भेदनः स्मृतः॥ १३॥

पित्तज्वरे पर्पटकादिः।

(* एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः।
किं पुनर्यदि युज्येत चन्दनोशीरवालकैः॥ )

कफज्वरे बीजपूरमूलादिः।—

बीजपूरशिफापथ्या-नागरग्रन्थिकैः शृतम्।
सक्षारं पाचनं श्लेष्म-ज्वरे द्वादशवासरे॥ १४॥

कफज्वरे भूनिम्बादिः।—

भूनिम्बनिम्बपिप्पल्यः शठी शुण्ठी शतावरी।
गुडूची बृहती चेति क्वाथो हन्यात् कफज्वरम्॥ १५॥

---

फलप्रियङ्गुर्लता गोवन्दनी तथा। श्यामा" इत्यादि, "कृष्णप्रियङ्गुरन्या सा ज्ञेया वननकालिका" इति। एषां द्रव्याणाम्। शर्कराऽत्र प्रक्षेपे॥१२॥

द्राक्षेति।—द्राक्षादिक्वाथः पित्तज्वरहरः। कृतमालको राजवृक्षः। तृष्णादयोऽत्र पित्तज्वरस्यैवोपद्रवा ज्ञेयाः। भेदन इति—स्वभावगुणेन पक्वदोषस्याधः पातनम्; तथा हि—"सौक्ष्म्यात् कषायः स्रोतांसि विवृणोति स्वभावतः। पक्वं दोषं स्रंसयति विमार्गस्थं शमं नयेत्॥" इति॥ १३॥

अथ कफज्वरे बीजपूरादिपाचनं, बीजपूरेति।—श्लेष्मज्वरं प्रशमनम्। बीजपूरो मातुलुङ्गः, तस्य शिफा जटा। पथ्या हरीतकी। नागरं शुण्ठी। ग्रन्थिकं पिप्पलीमूलम्। शृतं क्वथितम्। सक्षारमिति—यवक्षारप्रक्षिप्तम्। द्वादशवासरे इति पूर्ववत्॥ १४॥

भूनिम्बेति।—भूनिम्बादिक्वाथोऽपि कफज्वरं हन्यादिति। भूनिम्बः कैरातः।

---

* श्लोकोऽयं प्रक्षिप्त इति केचित्। "चन्दनोशीरवालकैः" इत्यत्र "चन्दनोदीच्यनागरैः" इति पुस्तकान्तरपाठः।

कफज्वरे पटोलादिः।—

पटोलत्रिफलातिक्ता-शठीवासाऽमृताभवः।
क्वाथो मधुयुतः पीतो हन्यात् कफकृतं ज्वरम्॥ १६॥

वातपित्तज्वरे पञ्चभद्रम्।—

पर्पटाब्दामृताविश्व-कैरातैः साधितं जलम्।
पञ्चभद्रमिदं ज्ञेयं वातपित्तज्वरापहम्॥ १७॥

वातकफज्वरे लघुक्षुद्रादिः।—

क्षुद्राशुण्ठीगुडूचीनां कषायः पौष्करस्य च।
कफवाताधिके पेयो ज्वरे वाऽपि त्रिदोषजे॥
कासश्वासारुचिकरे पार्श्वशूलविनाशनः॥ १८॥

---

निम्बः पिचुमर्दः। पिप्पली कृष्णा। शठी कर्चूरभेदः। बृहती बृहत्कण्टकारिका। केचित् "शठी शुण्ठी च पौष्करम्" इति पठन्ति। अयमपि पाठः साधुः॥ १५॥

पटोलेति।—पटोलादिक्वाथो मधुमिश्रः कफजनितज्वरं हन्यादिति। पटोलमत्र * पटोलपञ्चाङ्ग, केवलं पटोलनालं वा, यतः,—"नालं तस्य कफापहम्" इति वचनात्। त्रिफला हरीतक्यादिकम्। तिक्ता कटुरोहिणी। अमृता गुडूची॥ १६॥

इदानीं वातपित्तज्वरे योगमाह, पर्पटेत्यादि।—पञ्चभद्रकसंज्ञकं क्वथितं जलं वातपित्तज्वरापहं भवति। अब्दो मुस्तम्। विश्वः शुण्ठी। अत्रापि संसर्गजनितज्वरे वासरादीनां मानं तन्त्रान्तरेऽवगन्तव्यम्; तद्यथा—"वातपित्तज्वरे देयमौषधं पञ्चमेऽहनि। पित्तश्लेष्मज्वरे चापि औषधं सप्तमेऽहनि॥ अत ऊर्द्ध्वं समाहात् वातश्लेष्मज्वरे पिबेत॥" इति॥ १७॥

क्षुद्रेति।—लघुक्षुद्रादिक्वाथः कफवातजनितज्वरे पेयः त्रिदोषजे वा। तत्र पौष्करं मूलं, तदभावे कुष्ठं ग्राह्यमिति सर्वत्र। कासाद्युपद्रवाः सन्निपातज्वरस्यापि ज्ञातव्याः। तन्त्रान्तरे पञ्चतिक्तकसंज्ञकमिदं, तत्र पञ्चमं भूनिम्बम्; तद्यथा—"क्षुद्राऽमृताभ्यां सह नागरेण सपुष्कराख्यं च किराततिक्तम्। पिबेत्

---

* "पटोलादिष्वच्छदस्तथा" इति परिभाषाबलात् पटोलशब्देन सामान्योक्तौ पटोलपत्रमेव गृह्यते वैद्यैः। गूढार्थदीपिकाकारेणापि अयमेवार्थः स्वीकृतः।

वातकफज्वरे आरग्वधादिः।—

आरग्वधकणामूल-मुस्तातिक्ताऽभयाकृतः।
क्वाथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम्॥
आमशूलप्रशमनो भेदी दीपनपाचनः॥ १९॥

पित्तकफज्वरे अमृताष्टकम्।—

अमृतारिष्टकटुका-मुस्तेन्द्रयवनागरैः।
पटोलचन्दनाभ्याञ्च पिप्पलीचूर्णयुक् शृतम्॥ २०॥
अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम्।
छर्द्यरोचकहृल्लास-दाहतृष्णाविनाशनम्॥ २१॥

पित्तकफज्वरे पटोलादिः।—

(* पटोलं चन्दनं मूर्वा-तिक्तापाठाऽमृतागणः।
पित्तश्लेष्मज्वरच्छर्दि-दाहकण्डुविषापहः॥)

सर्वज्वरे कण्टकार्य्यादिः।—

कण्टकारीद्वयं शुण्ठी धान्यकं सुरदारु च।

---

कषायं त्विह पञ्चतिक्तं ज्वरं निहन्त्यष्टविधं समग्रम्॥" इति। अत्रापि कैराती योज्यास्त्रिदोषहरत्वात्॥ १८॥

आरग्वधेति।—आरग्वधादिक्वाथः क्षिप्रं शीघ्रं कफवातोद्भवं ज्वरं शमयति। आरग्वधः कृतमालकः, स च चरके फलवर्गे पठितः, सुश्रुते तु पत्रवर्गे; अतोऽन्तः-परिमार्जने फलं, बहिःपरिमार्जने कुष्ठादौ पत्रमिति। कणामूलं पिप्पलीमूलम्। तिक्ता कटुरोहिणी। अभया हरीतकी। आमशूलप्रशमन इति—आमेनापरिपक्वरसेन जनितः शूलस्तस्य प्रशमन इत्यर्थः। अयं शूलः ज्वरस्यैवोपद्रव इत्येके वदन्ति। भेदीति—पक्वमलं भित्त्वा योऽधः पातयति स भेदी। अत एव सकलवैद्यास्तृतीयदिवसे-ऽनेनैव पक्वदोषस्य निर्हरणं कुर्वन्ति; तस्मादारोग्यपञ्चक इति संज्ञा लोके॥ १९॥

अथ पित्तश्लेष्मज्वरे अमृतेति।—अमृताष्टकसंज्ञोऽयं क्वाथः पिप्पलीचूर्णप्रयुक्तः पित्तश्लेष्मज्वरघ्नो भवति। अमृता गुडूची। अरिष्टो निम्बः। चन्दनमत्र रक्तचन्दनम्। पिप्पलीचूर्णमत्र निक्षिपेत्, तन्मात्रकद्वयव्यवहारः, कुतः? तीक्ष्णत्वात्। छर्द्यादयो-ऽप्युपद्रवा अस्यैव ज्ञातव्याः॥ २०। २१॥

---

* प्रक्षिप्तोऽयमिति केचित्।

एभिः शृतं पाचनं स्यात् सर्वज्वरविनाशनम् ॥ २२ ॥

वातश्लेष्मज्वरे दशमूलम् ।—

शालपर्णीपृश्निपर्णी-बृहतीद्वयगोक्षुरैः ।
विल्वाग्निमन्थश्योनाक-काश्मरीपाटलायुतैः ॥२३॥
दशमूलमिति ख्यातं क्वथितं तज्जलं पिबेत् ।
पिप्पलीचूर्णसंयुक्तं वातश्लेष्मज्वरापहम् ॥ २४ ॥
सन्निपातज्वरहरं सूतिकादोषनाशनम् ।
शोषशैत्यभ्रमस्वेद-कासश्वासविकारनुत् ॥
हृत्कण्ठग्रहपार्श्वार्त्ति-तन्द्रामस्तकशूलहृत् ॥ २५ ॥

सन्निपातज्वरे अभयादिः ।—

अभयामुस्तधान्याक-रक्तचन्दनपद्मकैः ।

---

अथ सर्वज्वरेषु पाचनमिदमाह, कण्टकारीति ।—कण्टकारीक्वाथसंज्ञकं पाचनम् इदं सर्वज्वरहरं भवति। कण्टकारीद्वयमिति—लघुकण्टकारिका बृहत् कण्टकारिका च। सुरदारु देवदारु। सर्वज्वरामत्यष्टविधसंज्ञम्। एतत् गोविन्दवङ्ग-सेनादिभिः सर्वज्वरेषु पठितं, तत्र नागरादिपाचनसंज्ञा ॥ २२ ॥

इदानीं सन्निपातज्वरे योगचतुष्टयमाह, शालपर्णीति ।—एतत्र दशमूलसंज्ञकं क्वथितजलं पिप्पलीचूर्णं यथादोषापेक्षया प्रक्षिप्तं सन्निपातज्वरादिकं हन्तीति। शालपर्णी पृश्निपर्णी च प्रसिद्धा, लोके कवाराद्वयमिति संज्ञा। बृहतीद्वयमिति—कण्टकारीद्वयम्। अग्निमन्थोऽरणिः। श्योनाको वृक्षविशेषः स्वनामख्यातः। काश्मरी गाम्भारी। एतेषां मूलं ग्राह्यं, कुतः? तत्संज्ञकत्वात्। सूतिका-दोषोऽपि त्रिदोषज एव। * शोषशैत्यादयोऽपि सन्निपातोपद्रवाः, तत्र शोषो मुखशोषः। शैत्यमङ्गानाम्। केचित् श्वासशैत्यमिति पठन्ति, तत्र श्वासः तथा शैत्यञ्चाङ्गानामित्यर्थः ॥२३—२५॥

अभयेति ।—अभयादिक्वाथः पिप्पलीचूर्णयुक्तस्त्रिदोषज्वरघ्नो भवति। अभया

---

* "शोषशैत्य" इत्यत्र "शाखाशैत्य" इति गू० टी०। शाखाशैत्यं हस्तपाद-शैत्यम्।

वासकेन्द्रयवोशीर-गुडूचीकृतमालकैः ॥ २६ ॥
पाठानागरतिक्ताभिः पिप्पलीचूर्णयुक् शृतम् ।
पिबेत्त्रिदोषज्वरजित् पिपासाकासदाहनुत् ॥ २७ ॥
प्रलापश्वासतन्द्राघ्नं दीपनं पाचनं परम् ।
विण्मूत्रानिलविष्टम्भ-वमिशोषारुचिं जयेत् ॥ २८ ॥

सन्निपातज्वरे पिप्पल्यादिः :—

(*पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
वचातिविषाऽजाजी-पाठावत्सकरेणुकैः ॥
किराततिक्तकं मूर्वा सर्षपा मरिचानि च ।
कटुकं पुष्करं भार्गी विडङ्गं कर्कटाह्वयम् ॥
अर्कमूलं बृहत्सिंही श्रेयसी सदुरालभा ।
दीप्यकं चाजमोदा च शुकनासादिहिङ्गुभिः ॥
एतानि समभागानि गणोऽष्टविंशको मतः ।
कषायमुपभुञ्जीत वातश्लेष्मज्वरापहम् ॥
हन्ति वातं तथा शीतं क्लेदजं प्रबलं कफम् ।
प्रलापं चातिनिद्रां च रोमहर्षारुची तथा ॥
महावातेऽपतन्त्रे च सर्वगात्रे च शून्यताम् ।
अयं सर्वज्वरान् हन्ति सन्निपातांस्त्रयोदश ॥)

---

हरीतकी । वासकः आटरूषकः । उशीरं तृणभेदः प्रसिद्धः । कृतमालकः आरग्वध-फलम् । पिपासादयोऽप्यस्यैवोपद्रवाः । प्रलापोऽसम्बद्धभाषणम् । विष्टम्भो वाताद्यीनामप्रवृत्तिः, † "गुडगुड़ा" शब्द इत्यपरे । एतच्च ग्रन्थान्तरे गुडूच्यादिसंज्ञम् ॥ २६—२८ ॥

---

* प्रक्षिप्तोऽयमिति केचित् ।

† आटोपो गुड़गुड़ाध्वनिः इति विजयरक्षितदासादयः । विष्टम्भस्तु मलवाताप्रवृत्तिः ।

सन्निपातज्वरे अष्टादशाङ्गः।—

कैरातकट्कीमुस्ता-धान्येन्द्रयवनागरैः।
दशमूलमहादारु-गजपिप्पलिकायुतैः॥ २९॥
कृतः कषायः पार्श्वार्त्ति-सन्निपातज्वरं जयेत्।
कासश्वासवमीहिक्का-तन्द्राहृद्ग्रहनाशनः॥ ३०॥

वातश्लेष्मज्वरे कट्फलादिः।—

कट्फलाम्बुदभार्गीभिर्धान्यरोहिषपर्पटैः।
वचाहरीतकीशृङ्गी-देवदारुमहौषधैः॥
हिक्कां कासज्वरं हन्ति श्वासश्लेष्मगलग्रहान्॥ ३१॥

जीर्णज्वरे गुडूचीक्वाथः।—

क्वाथो जीर्णज्वरं हन्ति गुडूच्याः पिप्पलीयुतः॥ ३२॥

पित्तज्वरे पर्पटादिः।—

तथा पर्पटजः क्वाथः पित्तज्वरहरः परः।

---

कैरातेत्यादि।—भूनिम्बादिक्वथितः कषायः सोपद्रवं सन्निपातज्वरं जयेत् हन्तीति। कैरातो भूनिम्ब एव। दशमूलं प्रसिद्धं, तदत्र पृथक् समभागं, यतो ग्रन्थान्तरे अष्टादशाङ्गसंज्ञकोऽयं गणः। महादारु देवदारु। गजपिप्पलिका चविकाफलं प्रसिद्धम्। पार्श्वार्त्तिरपि त्रिदोषजा स्यात्। हृद्ग्रहोऽप्येवम्॥२९।३०॥

कट्फलेति।—कट्फलस्त्वग्विशेषः। अम्बुदो मुस्तम्। रोहिषं गन्धतृणम्। शृङ्गी कर्कटाख्या। महौषधं शुण्ठी। ज्वरमत्र त्रिदोषजनितं, तेन कर्णमूलमपि गृह्यते बहुवचनग्रहणात्। अयं तन्त्रान्तरे कासश्वासरोगे पठितः, तत्र मधुहिङ्गु-युत इति पठन्ति। शार्ङ्गधरेण सन्निपातज्वरार्थं मध्वादित्यागेनात्र लिखितः, यतो मध्वत्र विरुद्धम्; तथा हि—"सर्वेषु सन्निपातेषु न क्षौद्रमवचारयेत्। शीतोपचारि क्षौद्रं स्यात् शीतश्चात्र विरुध्यते॥" इति। चक्रेणाप्युक्तं—"विरोध्युष्णो मधु त्यक्त्वा कार्य्यश्चाऽऽर्द्रकजैः रसैः" इति॥३१॥

अथ जीर्णज्वरे योगद्वयमाह, क्वाथ इति।—केवलं गुडूच्याः क्वाथः पिप्पली-चूर्णप्रक्षिप्तः जीर्णं ज्वरं हरतीति। केचित् पिप्पलीयुत इत्यस्य स्थाने मधुसंयुत इति पठन्ति। अयमपि प्रक्षेपः साधुः। तथा पर्पटोद्भवः क्वाथः पित्तज्वरहरो

किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः॥ ३३ ॥

जीर्णज्वरे निदिग्धिकादिः।—

निदिग्धिकाऽमृताशुण्ठी-कषायं पाययेद्भिषक्।
पिप्पलीचूर्णसंयुक्तं श्वासकासार्दितापहम्॥
पीनसारुचिवैस्वर्य्य-शूलाजीर्णज्वरच्छिदम्॥ ३४ ॥

सूतिकाज्वरे देवदार्वादिः।—

(*देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम्।
कट्फलं मुस्तभूनिम्ब-तिक्ताधान्या हरीतकी॥
गजकृष्णा च दुःस्पर्शा गोक्षुरुर्धन्वयासकम्।
बृहत्यतिविषा छिन्ना कर्कटं कृष्णजीरकम्॥
क्वाथमष्टावशेषन्तु प्रसूतां पाययेत् स्त्रियम्।
शूलकासज्वरश्वास-मूर्च्छाकम्पशिरोऽर्त्तिजित्॥)

शीतज्वरे बृहत् क्षुद्रादिः।—

क्षुद्राधान्यकशुण्ठीभिर्गुडूचीमुस्तपद्मकैः।
रक्तचन्दनभूनिम्ब-पटोलवृषपौष्करैः॥ ३५ ॥

भवति; तर्षेति ग्रहणात् मध्वादिसंयुतोऽयमपि बोद्धव्यः। † पित्तज्वरकथनेनैवैतत् प्रायोऽजीर्णज्वर एव (?) कथितः॥ ३२।३३ ॥

अपरमप्याह, निदिग्धिकेति।—निदिग्धिकादिकषायः श्वासादिकान् हन्तीति। निदिग्धिका लघुकण्टकारिका। अमृता गुडूची। अर्दितः रोगविशेषः, स च वातरोगे पठितः। वैस्वर्य्यं विकृतस्वरत्वम्। अयमपि प्रायशः सायमुपयोज्यः; तथा हि —"हन्त्यहंगामयं प्रायः सायं तेनोपयुज्यते" इति॥ ३४ ॥

क्षुद्रेति।—बृहत् क्षुद्रादिसंज्ञकोऽयं क्वाथः शीतज्वरं हन्तीति। क्षुद्रा लघुकण्टकारी। भूनिम्बः किरातः। वृषो वासकः। पौष्करं पुष्करमूलम्। इन्द्रयवः

* प्रक्षिप्तोऽयमिति केचित्।

† योगोऽयं चक्रपाणिना पित्तज्वरे एव लिखितः, न तु अजीर्णज्वरे। गूढार्थदीपिकाकारस्तु "ज्वरोऽत्र जीर्ण एव" इत्याह।

कटुकेन्द्रयवारिष्ट-भार्गीपर्पटकैः समैः।
क्वाथं प्रातर्निषेवेत सर्वशीतज्वरच्छिदम् ॥ ३६ ॥

विषमज्वरे मुस्तादिः।—

मुस्तक्षुद्राऽमृताशुण्ठी-धात्रीक्वाथः समाक्षिकः।
पिप्पलीचूर्णसंयुक्तो विषमज्वरनाशनः ॥ ३७ ॥

विषमज्वरे पटोलादिः।—

पटोलेन्द्रयवादारु-त्रिफलामुस्तगोस्तनैः।
मधुकामृतवासानां क्वाथं क्षौद्रयुतं पिबेत् ॥ ३८ ॥
सन्तते सतते चैव द्वितीयकतृतीयके।
ऐकाहिके वा विषमे दाहपूर्वे नवज्वरे ॥ ३९ ॥

ऐकाहिके पटोलादिः।—

पटोलत्रिफलानिम्ब-द्राक्षाशम्पाकवासकैः।
क्वाथः सितामधुयुतो जयेदैकाहिकं ज्वरम् ॥ ४० ॥

तृतीयके गुडूच्यादिः।—

गुडूचीधान्यमुस्ताभिश्चन्दनोशीरनागरैः।
कृतं क्वाथं पिबेत् क्षौद्र-सितायुक्तं ज्वरातुरः ॥

---

कुटजबीजम्। अरिष्टो निम्बः। भार्गी ब्राह्मणयष्टिका। तन्त्रान्तरेऽयमपि वात-कफज्वरे पठितः, यतो वातश्लेष्माणौ शीतोत्पादकौ, यतः,—"त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे" इत्यादि वचनं, तस्मात् तत्र शीतज्वरे लिखितः ॥ ३५।३६ ॥

इदानीं विषमज्वरनाशनार्थं योगपञ्चकमाह, मुस्तेति।—मुस्तादिभिः कृतः क्वाथः विषमज्वरे प्रशस्तः। अत्र धात्री आमलकी। मधुपिप्पल्योः प्रक्षेपः पूर्वमात्रया। विषमज्वरा ऐकाहिकादयः ॥ ३७—३९ ॥

पटोलेति।—पटोलादिः एष क्वाथः ऐकाहिकं ज्वरं हन्तीति। अत्र त्रिफला ख्याता, सा च प्रत्येकं समभागा। शम्पाकः कृतमालकः। सितामधुयुत इति सम्यक् माधुर्य्यार्थं प्रक्षेपद्वयमुक्तं दोषनाशनार्थञ्च ॥ ४० ॥

गुडूचीति।—गुडूच्यादिः तृतीयज्वरं हन्तीति। चन्दनमत्र रक्तम्। उशीरं तृण-भेदः रक्तपर्णं दर्भवत्। केचिदुशीरस्थाने उदीच्यमिति पठन्ति, तयोर्दीच्यो बालकः

तृतीयज्वरनाशाय तृष्णादाहनिवारणम् ॥ ४१ ॥

चातुर्थके देवदार्वादिः।—

देवदारुशिवावासा-शालपर्णीमहौषधैः।
धात्रीयुतं शृतं शीतं दद्यान्मधुसितायुतम् ॥
चातुर्थकज्वरे श्वासे कासे मन्दानले तथा ॥ ४२ ॥

ज्वरातीसारे बृहद्गुडूच्यादिः।—

गुडूचीधान्यकोशीर-शुण्ठीबालकपर्पटैः।
बिल्वप्रतिविषापाठा-रक्तचन्दनवत्सकैः ॥ ४३ ॥
किरातमुस्तेन्द्रयवैः क्वथितं शिशिरं पिबेत्।
सक्षौद्रं रक्तपित्तघ्नं ज्वरातीसारनाशनम् ॥ ४४ ॥

ज्वरातीसारे नागरादिः।—

नागरं कुटजो मुस्तममृताऽतिविषा तथा।
एभिः शृतं पिबेत् क्वाथं ज्वरातीसारनाशनम् ॥४५॥

---

सुशीतलत्वात्; यतः,—"पित्तप्रायस्तृतीयकः" इत्युक्तम्, अतो व्यजनादिना हितं शीतगुणम् ॥ ४१ ॥

देवदार्विति।—देवदार्वादिक्वाथोऽयं चातुर्थकज्वरे प्रशस्तः। शिवा हरीतकी। वासा आटरूषकः। महौषधं शुण्ठी। धात्री आमलकी। शृतमिति—क्वथितम्। शीतं हिमस्पर्शं, मधुप्रक्षेपशनितत्वात्, तथा हि—"उष्णैर्विरुध्यते सर्वं विषान्वयतया मधु। उष्णार्त्तमुष्णैरुष्णे वा तन्निहन्ति यथा विषम् ॥" (सु० सू० ४५ अ०) इति ॥४२॥

अथ ज्वरातीसारे योगद्वयमाह, गुडूचीति।—गुडूच्यादिकोऽयं गणः। अत्र वत्सकः कुटजत्वक्, कुटजत्वगभावे शक्रयवा एव द्विगुणाः ग्राह्याः, लघुत्वात् पाचनत्वाच्च। किराती भूनिम्बः। शिशिरं शीतस्पर्शम्। एष बृहद्गुडूच्यादिसंज्ञकस्तन्त्रान्तरेऽवबोद्धव्यः ॥ ४३।४४ ॥

नागरमिति।—नागरादिक्वाथो ज्वरातीसारनाशनो भवति।* कुटजोऽत्र कुटज-

---

* कुटजशब्देन अविशेषोक्तौ सर्वत्र कुटजत्वगेव गृह्यते, न तु कुटजबीजम्, अत्र तु, तन्त्रान्तरे वत्सक-कलिङ्गादिप्रयोगदर्शनात् कुटजबीजमेव ग्राह्यमिति पाठकरणमुचितम्।

आमशूले धान्यपञ्चकम्।—

धान्यबालकबिल्वाब्द-नागरैः साधितं जलम्।
आमशूलहरं ग्राहि दीपनं पाचनं परम् ॥ ४६ ॥

आमवाते धान्यनागरक्वाथः।—

धान्यनागरजः क्वाथः पाचनो दीपनस्तथा।
एरण्डमूलयुक्तश्च जयेदामानिलव्यथाम् ॥ ४७ ॥

सामरक्तातिसारे वत्सकादिः।—

वत्सकातिविषाबिल्व-मुस्तबालकजः शृतः।
अतीसारं जयेत् सामं चिरजं रक्तशूलजित् ॥ ४८ ॥

---

फलम्, एवमविशेषोक्तौ सर्ववातीसारे। केचित "भूनिम्बातिविषाऽमृता" इति पठन्ति; तत्र भूनिम्बः किरातः; उक्तञ्च तन्त्रान्तरे,—"नागरातिविषामुस्ता-भूनिम्बामृतवत्सकैः। सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥" इति ॥ ४५ ॥

अथ आमशूले धान्येति।—इदं धान्यपञ्चकसंज्ञकं क्वथितजलम् आमशूलहरं भवति। बिल्वमत्र बिल्वशलाटुः, संग्राहित्वात्; एवं सर्वत्र स्तम्भनयोगे। अब्दो मुस्तकम्। केचिदिति पठन्ति—"पित्ते धान्यचतुष्कन्तु शुण्ठीत्यागादवदन्ति हि"। एतदभिप्रायः न सर्वमतः; यतः,—"शुण्ठी मधुरपाकित्वान्न च पित्तप्रकोपिणी" इति वचनम् ॥४६॥

अथ आमवाते धान्येति।—एतदपि पाचनम् आमवातपीडां जयेत्। एतदन्यत्राप्यामवाते आमे वा विबन्धेऽपि पाचनसंज्ञं मानान्यम; तथा ह्युक्तं—"धान्यनागरवातारि-मूलं क्वथितशीतलम्। आमशूलविबन्धघ्नं स्मृतं दीपनपाचनम् ॥" इति ॥४७॥

अथातीसारे योगचतुष्टयमाह, वत्सकेत्यादि।—वत्सकादिक्वाथः अतिसारं जयेत् इति। वत्सकः * कुटजफलम्। साममतीसारं चिरजं चिरकालानुबन्धि। शेषं सुगमम् ॥ ४८ ॥

---

* अत्र श्रीशिवदासः,—"वत्सकादौ वत्सकः कुटजः, तस्य त्वक् इति चन्द्रकलाटीकाकारः वैद्यप्रसारकश्च। अन्ये तु—'बिल्वशक्रयवाम्भोद-बालकातिविषाकृतः। कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥' इति सुश्रुतसंवादात् फलमेवेत्याहुः, किन्तु प्रायो व्यवहारस्त्वचा। फलेनापि ज्वरे रक्तप्राबल्ये च; यदुक्तं—'कुटजः कफवातास्रकत्वग्दोषोऽर्शोऽतिसारजित्। तद्बीजं रक्तपित्तातीसारज्वरहरं हिमम्' ॥" इति।

सामरक्तातिसारे कुटजाष्टकम्।—

कुटजातिविषापाठा-धातकीलोध्रमुस्तकैः।
ह्रीवेरदाडिमयुतैः कृतः क्वाथः समाक्षिकः॥ ४९॥
पेयो मोचरसेनैव कुटजाष्टकसंज्ञकः।
अतीसारान् जयेद्दाह-रक्तशूलामदुस्तरान्॥ ५०॥

अतिसारे ह्रीवेरादिः।—

ह्रीवेरधातकीलोध्र-पाठालज्जालुवत्सकैः।
धान्यकातिविषामुस्ता-गुडूचीविल्वनागरैः॥ ५१॥
कृतः कषायः शमयेदतीसारं चिरोत्थितम्।
अरोचकामशूलास्र-ज्वरघ्नः पाचनः स्मृतः॥ ५२॥

बालातीसारे धातक्यादिः।—

धातकीविल्वरोध्राणि वालकं गजपिप्पली।
एभिः कृतं शृतं शीतं शिशुभ्यः क्षौद्रसंयुतम्॥
प्रदद्यादवलेहं वा सर्वातीसारशान्तये॥ ५३॥

---

कुटजेति।—कुटजाष्टकोऽयं क्वाथः अतीसारान् जयेत्। अतीसारानिति बहुवचनत्वेन सप्तविधानित्यर्थः। कुटजः इन्द्रयवः। धातकी धातकीकुसुमानि, व्यवहारात्। ह्रीवेरं वालकम्। दाडिमं * दाडिमफलम्। मोचरसः शाल्मलीनिर्य्यासः, स चात्र प्रक्षेपे। मध्वपि प्रक्षेपः। अष्टग्रहणं यथालाभनिषेधार्थम्॥ ४९।५०॥

ह्रीवेरेति।—ह्रीवेरादिकोऽयं क्वथितः कषायश्चिरोत्थितमतीसारं जयेत्। ह्रीवेरं वालकम्। लज्जालुः स्वनामख्यातः। वत्सकः कुटजः। अत्र पाठा गुडूची चेति द्रव्यद्वयमधिकं लिखितमन्यनिबन्धात्, न दोषो ज्वरनाशनार्थम्। शेषं सुबोधम्॥५१।५२॥

धातकीति।—धातक्यादिभिः शृतं क्वथितं, शीतं स्यशीतं। अत्र धातक्याः कुसुमानि। गजपिप्पली प्रसिद्धा। क्षौद्रसंयुतमिति—मधुप्रक्षिप्तम्। अवलेहं वेति—एतेषां चूर्णं कृत्वा मधुना प्लाव्य बालकेभ्योऽवलेहं वा दद्यात्॥ ५३॥

---

* "दाडिमफलवल्कलम्" इति शिवदासव्याख्या॥

Uttarpara

ग्रहण्यां शालपर्ण्यादिः।—

शालपर्णीबलाबिल्व धान्यशुण्ठीकृतः शृतः।
आध्मानशूलसहितां वातजां ग्रहणीं जयेत्॥ ५४ ॥

ग्रहण्यां गुडूच्यादिः।—

गुडूच्यतिविषाशुण्ठी-मुस्तैः क्वाथः कृतो जयेत्।
आमानुषक्तां ग्रहणीं ग्राही पाचनदीपनः॥ ५५ ॥

अतीसारे यवादिः।—

यवधान्यपटोलानां क्वाथः सक्षौद्रशर्करः।
योज्यः छर्द्यतिसारेषु बिल्वाम्रास्थिभवस्तथा॥ ५६ ॥

क्रिमिरोगे त्रिफलादिः।—

त्रिफला देवदारुश्च मुस्ता मूषककर्णिका।
शिग्रुरेतैः कृतः क्वाथः पिप्पलीचूर्णसंयुतः॥
विडङ्गचूर्णयुक्तश्च क्रमिघ्नः क्रिमिरोगहा॥ ५७ ॥

---

इदानीं ग्रहणीशान्तये योगद्वयमाह, शालपर्ण्यादि।—शृतः क्वथितः। शालपर्णी प्रसिद्धा। बला च प्रसिद्धा, "सामस" इति लोके। आध्मान उदरापूरः। शूलोऽवामजनितपीड़ा, "कुरकुरी" इति लोके॥ ५४ ॥

गुडूचीति।—चातुर्भद्रसंज्ञकोऽयं क्वाथः। अत्र गुडूच्यादयो विख्याता एव॥५५॥

यवेति।—छर्द्यतिसारे योगद्वयमपि, तद्यथा—इन्द्रयवादीनां क्वाथः सक्षौद्रशर्करः एको योगः। बिल्वाम्रास्थिभवः क्वाथो द्वितीयः। अत्रापि सक्षौद्रशर्कर इति सम्बन्धनीयस्तथेति पदश्रवात्।* यवोऽत्र कुटजबीजम्। क्षौद्रशर्कराप्रक्षेपः साधुः। छर्दिरतीसारस्योपद्रवः। † बिल्वमत्र बिल्वमूलम्; यतः,—"बिल्वमूलं सकृत्कृम-च्छर्दिघ्नं न च पित्तलम्" इति; तदभावे फलमिति सर्वत्र। आम्रास्थि आम्रफलमज्जा॥ ५६ ॥

अथ क्रिमिरोगे त्रिफलेति।—त्रिफला हरीतक्यादि। मूषककर्णिका इति—वाति-भेदाः (?)। शिग्रुः शोभाञ्जनकः। पिप्पलीविडङ्गचूर्णप्रक्षेपे। क्रिमिघ्नो बाह्याभ्यन्तर-क्रिमिनाशनः। क्रिमिरोगः क्रिमिजनितहृद्रोगकुष्ठादिः॥ ५७ ॥

---

* यवोऽत्र इन्द्रयववाची इति तु शिवदासेन न व्याख्यातम्।

† बिल्वशब्देन बिल्वमूलमित्यपि शिवदासेन नोक्तं, किन्तु बिल्वमूलस्य छर्दिहरत्वेऽपि ग्राहकत्वात् अतिसारहरयोगे तत्प्रयोगो न मनोरमः।

क्रिमिरोगे फलत्रिकादिः ।—

फलत्रिकामृतातिक्ता-निम्बकैरातवासकैः ।
जयेन्मधुयुतः क्राथः कामलां पाण्डुतां तथा ॥ ५८ ॥

पाण्डुशोथे पुनर्नवादिः ।—

पुनर्नवाऽभयानिम्ब-* दार्वीतिक्तपटोलकैः ।
गुडूचीनागरयुतैः क्राथो गोमूत्रसंयुतः ॥
पाण्डुकासोदरश्वास-शूलसर्वाङ्गशोथहा ॥ ५८ ॥

रक्तपित्ते वासादिः ।—

वासाद्राक्षाऽभयाक्राथः पीतः सक्षौद्रशर्करः ।
निहन्ति रक्तपित्तार्त्ति-श्वासकासान् सुदारुणान् ॥ ६० ॥

रक्तपित्तादौ वासाक्राथः ।—

रक्तपित्तं क्षयं कासं श्लेष्मपित्तज्वरं तथा ।
केवलो वासकक्राथः पीतः क्षौद्रेण नाशयेत् ॥ ६१ ॥

---

अथ कामलायां फलेति ।—तिक्ता कटुरोहिणी । कैराती भूनिम्बः । पाण्डुतामिति—पाण्डुरोगम ॥ ५८ ॥

सर्वाङ्गशोथे पुनर्नवेति ।—पुनर्नवा वर्षाभूः, "साठ" इति लोके । दार्वी दारुहरिद्रा । तिक्तशब्देन कटुकी ग्राह्या, न तु तिक्तं पटोलं, समासान्तत्वात् तिक्ताया क्रस्तत्वम् । गोमूत्रेणेव शृतः क्राथ इति मन्यन्ते केचित्, तन्न युक्तम्; मूत्रन्तु प्रक्षेपे साधु व्यवहारात् ॥ ५९ ॥

अथ रक्तपित्ते वासेति ।—वासा आटरूषकः । अभया हरीतकी । रक्तपित्तार्त्तिः रक्तपित्तव्यथा । श्वासं कासञ्च सुदारुणं दुःसाध्यम् ॥ ६० ॥

रक्तपित्तमिति ।—अपरञ्च—वासकक्राथः केवल इति—वासकोऽत्र पञ्चाङ्गो ग्राह्यः । क्षौद्रमत्र प्रक्षेपे । नाशयेदिति रक्तपित्तादिकान् ॥ ६१ ॥

---

* चक्रसङ्ग्रहे दारु इति पाठः, न तु दार्वी । दारु देवदारु इति च शिवदासव्याख्या । चक्रादौ तिक्ता इति पाठः, न तु तिक्तः, किञ्च "समासान्तत्वात् तिक्ताया क्रस्तत्वम्" इति टीकाकारोक्तिरपि न समीचीना, समासान्तत्वाभावात् । गूढार्थदीपिकाकारेण तिक्ता इत्येव पाठः स्वीकृतः । चक्रोक्तेऽस्मिन् योगे गोमूत्रप्रक्षेपो नास्ति ।

कासे वासादिः।—

वासाक्षुद्राऽमृताक्काथः क्षौद्रेण ज्वरकासहा।
कासघ्नः पिप्पलीचूर्ण-युक्तः क्षुद्रामृतस्तथा॥ ६२॥

कासे क्षुद्रादिः।—

क्षुद्राकुलत्थवासाभिर्नागरेण च साधितः।
क्काथः पौष्करचूर्णाढ्यः श्वासकासौ निवारयेत्॥ ६३॥

हिक्कायां रेणुकादिः।—

रेणुकापिप्पलीक्काथो हिङ्गुकल्केन संयुतः।
पानादेव हि पञ्चापि हिक्का नाशयति क्षणात्॥ ६४॥

छर्द्यां योगत्रयम्।—

बिल्वत्वचो गुडूच्या वा क्काथः क्षौद्रेण संयुतः।
जयेत्त्रिदोषजां छर्दिं पर्पटः पित्तजां तथा॥ ६५॥

कासे योगद्वयमाह वासाक्षुद्रेति।—क्षुद्रा लघुकण्टकारिका। अमृता गुडूची। क्षौद्रेणेति—क्षौद्रप्रक्षेपः। ज्वरकासहेति—ज्वरोपद्रवयुक्तकासहा। कासघ्न इति—द्वितीयस्तु क्काथः केवलं पञ्चाङ्गकण्टकारिकायाः कृतः पिप्पलीचूर्णप्रक्षिप्तश्च। तथेति ग्रहणादत्रापि * मधुप्रक्षेपमाहुः॥ ६२॥

श्वासकासेऽपरमप्याह, क्षुद्रेति।—कुलत्थोऽन्नविशेषः प्रसिद्ध एव। नागरं शुण्ठी। पौष्करचूर्णाढ्य इति—पुष्करमूलचूर्णप्रक्षेपः; पुष्करमूलाभावे कुष्ठं ग्राह्यमिति व्यवहारः॥ ६३॥

अथ हिक्कायां रेणुकेति।—रेणुका कौन्तीति पर्य्यायनाम्ना प्रसिद्धा। निर्गुण्डीबीजानि रेणुकाशब्दवाच्यानि इत्येके। व्यवहारादत्र हिङ्गु भर्जितं, "भर्जितं देयं हिङ्गु नीलकण्ठकृतेत" इति वचनम्। कल्कस्थाने चूर्णमिति पठन्ति केचित्। पञ्चेति—अन्नजादयो विख्याताः। क्षणादिति ग्रहणेनास्य दृष्टफलत्वं दर्शितम्॥ ६४॥

अथ छर्द्यां बिल्वत्वच इति।—एतत् योगत्रयं क्षौद्रयुक्तं छर्दिं जयेदिति। किं तत् त्रयम्? बिल्वत्वचः क्काथ एको योगः, गुडूच्याः क्काथो द्वितीयः, पर्पटोऽत्रस्तृतीय इति। बिल्वत्वचः बिल्वमूलवल्कलस्य, छर्दिहरत्वात्; तथा हि—"बिल्वमूलं सकृच्छ्रं छर्दिघ्नं न च पित्तकृत्" इति। ननु गुडूची सुश्रुते शाकवर्गे कफपित्तहरत्वेनोक्ता, तत्

* चक्रदत्ते योगेऽस्मिन् मधुप्रक्षेपो नास्ति।

गृध्रस्यां दशमूलक्वाथः निर्गुण्डीक्वाथश्च ।—

हिङ्गुपुष्करचूर्णाढ्यो दशमूलशृतो जयेत् ।
गृध्रसीं केवलः क्वाथः शेफालीपत्रजस्तथा ॥ ६६ ॥

आमवाते रास्नापञ्चकम् ।—

रास्नाऽमृतामहादारु-नागरैरण्डजैः शृतम् ।
सप्तधातुगते वाते सामे सर्वाङ्गजे पिबेत् ॥ ६७ ॥

आमवाते रास्नासप्तकम् ।—

रास्ना गोक्षुरकैरण्ड-देवदारु पुनर्नवा ।
गुडूच्यारग्वधश्चैव क्वाथमेषां विपाचयेत् ॥ ६८ ॥
शुण्ठीचूर्णेन संयुक्तं पिबेज्जङ्घाकटीग्रहे ।
पार्श्वपृष्ठोरुपीडायामामवाते सुदुस्तरे ॥ ६९ ॥

---

कथं तस्याः क्वाथो वातजाया शस्तत्वेन प्रदर्शितः ? उच्यते—अत्र मधुसंयोगोदर्येन तद्धर्मशक्तिविशेषात्, किंवा शाकवर्गे तत्पत्रमुक्तं, लता तु वातमपि शमयति इति न दोषः। अत्र तु गुडूच्याः क्वाथः सुशीतलो ज्ञेयः; उक्तञ्च—"छिन्नरुहायाः क्वाथं सुशीतलं च पिबेन्मधुना। छर्दिं स वातपित्तश्लेष्मसमुत्थां निवारयति॥" इति। तथेति ग्रहणात् पर्पटक्वाथेऽपि मधुप्रक्षेपः॥ ६५॥

अथ गृध्रस्यां योगद्वयमाह, हिङ्गुपौष्करेति।—दशमूलं विख्यातम्; तद्यथा—"शालपर्णी पृश्निपर्णी बृहती कण्टकारिका। तथा गोक्षुरकश्चैव पञ्चमूलं लघु स्मृतम्॥ बिल्वोऽग्निमन्थः श्योनाकः काश्मरी पाटला तथा। इदं महत् पञ्चमूलं दशमूलमुभे स्मृतम्॥" इति। शेफाली निर्गुण्डी, तस्याः पत्राणि। तथेति ग्रहणादत्रापि हिङ्गुपुष्करमूलचूर्णप्रक्षेपो विज्ञेयः॥ ६६॥

अथ वातविकारेषु योगानाह, रास्नेति।—इदं रास्नापञ्चकसंज्ञकं शृतं क्वाथं पिबेत्, आतुर इति शेषः। रास्ना सुरभि। महादारु देवदारु। एरण्डम् एरण्डमूलम्। सप्तधातवः रसाद्याः शुक्रान्ताः। आमवातोक्तत्वादत्र विरेकार्थं रुबुतैलं प्रक्षिपन्ति केचिच्चिकित्सकाः; तदुक्तम्—"आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एवाग्रणीर्हन्ता एरण्डस्नेहकेशरी॥" इति॥ ६७॥

रास्नेति।—रास्नासप्तकसंज्ञकोऽयं क्वाथः। रास्ना सुरभीति लोके। एरण्ड एरण्डजटा। आरग्वधः कृतमालकः। शुण्ठीचूर्णमत्र प्रक्षेपे। जङ्घाग्रहे कटीग्रहे वा, पार्श्व-

वातव्याधौ महारास्नादिः।—

रास्ना द्विगुणभागा स्यादेकभागास्ततः परे।
धन्वयासबलैरण्ड-देवदारुशटीवचाः॥ ७०॥
वासको नागरं पथ्या चव्यं मुस्ता पुनर्नवा।
गुडूची वृद्धदारश्च शतपुष्पा च गोक्षुरः॥ ७१॥
अश्वगन्धा प्रतिविषा कृतमालः शतावरी।
कृष्णा सहचरश्चैव धान्यकं बृहतीद्वयम्॥ ७२॥
एभिः कृतं पिबेत् क्वाथं शुण्ठीचूर्णेन संयुतम्।
कृष्णाचूर्णेन वा योग-राजगुग्गुलुनाऽथवा॥ ७३॥
अजमोदादिना वाऽपि तैलेनैरण्डजेन वा।
सर्वाङ्गकम्पे कुब्जत्वे पक्षाघातेऽवबाहुके॥ ७४॥
गृध्रस्यामामवाते च श्लीपदे चापतानके।
अन्त्रवृद्धौ तथाऽऽध्माने जङ्घाजानुगतेऽर्दिते॥ ७५॥
शुक्रामये मेढ्ररोगे वन्ध्यायोन्यामयेषु च।
महारास्नादिराख्यातो ब्रह्मणा गर्भकारणम्॥ ७६॥

वातादिगतशूले एरण्डसप्तकम्।—

एरण्डो बीजपूरश्च गोक्षुरो बृहतीद्वयम्।
अश्मभेदस्तथा विल्व एतन्मूलैः कृतः शृतः॥ ७७॥

---

पीडा पृष्ठपीडा ऊरुपीडेत्यर्थः। सुदुस्तरे इति कष्टसाध्ये। अत्रापि केचिदेरण्डतैल-प्रक्षेपमाहुः॥ ६८-६९॥

रास्ना द्विगुणभागेति।—द्विगुणभागा रास्नाऽत्र पठन्ति, एतदपि मनोहरं न दोषः। अपरं धन्वयासादयः एकभागाः प्रत्येकम्। धन्वयासः दुरालभा। शटी कर्चूरभेदः। वृद्धदारः निःसृताभेदः। कृतमालः राजवृक्षफलम्। कृष्णा पिप्पली। सहचरः कुरण्टकः। बृहतीद्वयमिति—लघुकण्टकारिका बृहत्कण्टकारिका चेति। प्रक्षेपश्चात्र यथादोषं यथाव्याधि च योजनीयः। योगराजगुग्गुल्वादयोऽग्र वक्ष्यमाणा ज्ञेयाः। अथवेति ग्रहणात् प्रक्षेपार्थे चाल्लभ्यषादिचूर्णम् आभादां वा ग्रन्थान्तरादव-गन्तव्यम्। शेषं सुगमम्॥ ७०—७६॥

एरण्डसप्तकं सम्प्रत्याह, एरण्ड इति।—एरण्डादीनां मूलैर्जर्जराभिः कृतः क्वाथः

एरण्डतैलहिङ्ग्वाढ्यः सयवक्षारसैन्धवः।
स्तनस्कन्धकटीमेढ्र-हृदयोत्थां व्यथां जयेत्॥ ७८॥

वातशूले नागरादिः इन्द्रयवक्काथश्च।—

नागरैरण्डजः क्वाथः क्वाथ इन्द्रयवस्य च।
हिङ्गुसौवर्चलोपेतो वातशूलनिवारणः॥ ७९॥

पित्तशूले त्रिफलादिः।—

त्रिफलाऽऽरग्वधक्काथः शर्कराक्षौद्रसंयुतः।
रक्तपित्तहरो दाह-पित्तशूलनिवारणः॥ ८०॥

कफशूले एरण्डमूलक्काथः।—

एरण्डमूलं द्विपलं जलेऽष्टगुणिते पचेत्।
तत्क्काथो यावशूकाढ्यः पार्श्वहृत्कफशूलहा॥ ८१॥

---

उक्तप्रक्षेपयुक्तः स्तनस्कन्धादिगतपीडां जयेदिति। अत्राश्मभेदः पाषाणभेदः। हिङ्गु अत्र भर्जितम्। समुदायप्रक्षेपे द्रव्याणां मानाभेदं वदन्त्येके, तद्यथा—"क्षारसैन्धवचूर्णानां माषैकैकं प्रयोजयेत्। माषार्द्धं हिङ्गुचूर्णञ्च तैलं माषचतुष्टयम्॥" इत्यादि॥७७।७८॥

अथ शूले वातादिनिमित्तजे योगत्रयमाह, नागरेत्यादि।—एतत् योगद्वयं वातशूले प्रशस्तम्। नागरं शुण्ठी। एरण्डम् एरण्डमूलम्। इन्द्रयवः कुटजबीजम्। केचित् द्रव्यत्रयेणापि योगमेकं वदन्ति; तथा हि—"हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्चलेन वा। * विश्वैरण्डयवक्काथः पीतः शूलनिवारणः॥" इति॥ ७९॥

त्रिफलेति।—अयं क्काथः पित्तशूले विहितः। त्रिफला प्रसिद्धा। आरग्वधः कृतमालकः। केचिदत्र रक्तपित्तोपशमनार्थं त्रिफलाशब्देन द्राक्षादिकं क्षिपन्ति; तथा ह्युक्तं—"द्राक्षाकाश्मर्यखर्जूर फलानीति फलत्रिकम्। इयं प्रोक्ता द्वितीया च त्रिफला चरकादिभिः। फलत्रिकाणां योगोऽयं चरकाद्युक्तपैत्तिके॥" इति॥ ८०॥

एरण्डेति।—अयं क्काथः कफशूले प्रशस्तः। द्विपलमिति कफस्य दुर्जयत्वात्। जलेऽष्टगुणिते इति—द्रव्यभागापेक्षिते। यावशूकाढ्य इति—यवक्षारचूर्णप्रक्षेपः। पार्श्वशूलं, हृच्छूलं, कफशूलञ्चेति, कफशूलं कफजनितशूलम्॥ ८१॥

---

* "विश्वैरण्डयवक्काथः" इत्यत्रोक्तयवशब्दस्य इन्द्रयवेति व्याख्या शिवदासादिभिः कैरपि न कृता, अतः नागरैरण्डजः इत्याद्युक्तयोगेन सह अस्य ऐक्यबोधिका व्याख्या चिन्त्या।

हृद्रोगादौ दशमूलक्वाथः।—

दशमूलकृतः क्वाथः सयवक्षारसैन्धवः।
हृद्रोगगुल्मशूलानि कासं श्वासञ्च नाशयेत्॥ ८२॥

मूत्रकृच्छ्रे हरीतक्यादिः।

हरीतकीदुरालभा-कृतमालकगोक्षुरैः।
पाषाणभेदसहितैः क्वाथो माक्षिकसंयुतः॥
विबन्धे मूत्रकृच्छ्रे च सदाहे सरुजे हितः॥ ८३॥

अश्मर्य्यां वीरतर्वादिः।—

* वीरतरो वृक्षवन्दा काशः सहचरत्रयम्।
कुशद्वयं नलो गुन्द्रा वकपुष्पोऽग्निमन्थकः॥ ८४॥
मूर्वा पाषाणभेदश्च श्योनाको गोक्षुरस्तथा।
अपामार्गश्च कमलं ब्राह्मी चेति गणो वरः॥८५॥
वीरतर्वादिरित्युक्तः शर्कराऽश्मरिकृच्छ्रहा।
मूत्राघातं वायुरोगान्नाशयेन्निखिलानपि॥८६॥

दशमूलेति।—दशमूलं प्रसिद्धम्। यवक्षारसैन्धवचूर्णप्रक्षिप्तोऽयं क्वाथो हृद्रोगादीन् हन्तीति॥ ८२॥

हरीतकीति।—मूत्रकृच्छ्रे हरीतक्यादिसंज्ञकोऽयम्। अत्र दुरालभा यवासकः। पाषाणभेदः प्रतीतः, "पखेतो" इति लोके। माक्षिकसंयुत इति—मधुप्रक्षेपः। विबन्धे अप्रवर्त्तने। केचित् पाषाणभेदसहितैरित्यत्र "पाषाणभेदात्रुटिभिः" इति पठन्ति, तत्र त्रुटिरेला। अयमपि साधुः॥ ८३॥

वीरतर इति।—अथाश्मरीरोगे वीरतर्वादिसंज्ञकोऽयं गणः वरः श्रेष्ठः उक्तः कथितः, मुनिभिरिति शेषः। वीरतरः उशीर इति लोके शरो वा। वृक्षवन्दा वृक्षादनी। काशः प्रसिद्धः। सहचरत्रयमिति—कुरण्टकत्रयं, तच्च पीतरक्तनील-कुसुमभेदेन बोद्धव्यम्; तथा चोक्तं—"पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत्।

* "वीरतरः" इत्यत्र "वीरतरुः" इति पाठोऽपि स एवार्थः; केचित्तु वीरतरुर्वेल्लन्तर इति नाम्ना प्रसिद्धः जाङ्गलदेशे नर्मदातटे चर्मण्वतीनदीसमीपे च। तल्लक्षणं यथा—"वेल्लन्तरो जगति वीरतरुः प्रसिद्धः श्वेतासिताऽरुणविलोहितपीतपुष्पः। काशातितुल्यकुसुमः शमिसूक्ष्मपत्रः स्यात् कण्टकी विजलदेशज एषः वृक्षः॥" इति।

अश्मर्य्याम् एलादिः।—

एलामधुकगोकण्ट-रेणुकैरण्डवासकाः।
कृष्णाऽश्मभेदसहिताः क्वाथ एषां सुसाधितः॥
शिलाजतुयुतः पेयः शर्कराऽश्मरिकृच्छ्रहा॥८७॥

मूत्रकृच्छ्रे गोक्षुरमूलक्वाथः।—

समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः।
नाशयेन्मूत्रकृच्छ्राणि तथा चोष्णसमीरणम्॥८८॥

प्रमेहे वरादिर्वत्सकादिश्च।—

वराटार्व्यब्दटारूणां क्वाथः क्षौद्रेण मेहहा।
वत्सकत्रिफला दार्वी मुस्तको बीजकस्तथा॥८९॥

---

पीतः कुरण्टको ज्ञेयो रक्तः कुरवकः स्मृतः॥ नीलश्चार्त्तगलः प्रोक्तो नामतः परिकीर्त्तितः॥" इति। कुशद्वयमिति—दर्भद्वयं, हरितरक्तपत्रभेदेन। नलः नलसरः। गुन्द्रा * पटेरकभेदः। बकपुष्पो वसुकः, सामसभेदो वा। अग्निमन्थोऽरणिः। मूर्वा चोरस्नायुः। पाषाणभेदः "वजेती" इति प्रसिद्धः। कमलमत्र रक्तम्। ब्राह्मी स्वनामख्याता। शेषं सुबोधम्॥ ८४—८६॥

अपरमप्याह, एलामधुकेति।—एलादिकोऽयं योगः। अत्र मधुकं मधुयष्टी। गोकण्टको गोक्षुरकः। रेणुका प्रसिद्धा। अश्मभेदः पाषाणभेदः। सुसाधित इति—सम्यक् क्वथितः। शिलाजतु प्रक्षेपे साधु, तस्य माषचतुष्टयं व्यवहारात्। कृच्छ्रेति—मूत्रकृच्छ्रगोगघ्न इत्यर्थः॥८७॥

समूलगोक्षुरेति।—अयं पञ्चाङ्गगोक्षुरक्वाथोऽपि सितामधुप्रक्षेपः द्वितीयः मूत्रकृच्छ्रनाशनो ज्ञेयः। उष्णसमीरणमिति—मूत्राघातभेदः॥ ८८॥

वरेति।—एतद्योगद्वयं प्रमेहेषु सम्मतम्। किं तद्द्वयम्? एको वरादिः, अपरो वत्सकादिरिति। वरा अत्र त्रिफला। दार्वी दारुहरिद्रा। अब्दो मुस्तकम्। दारु

---

"सहचरद्वयम्" इत्यत्र "सहचरौ" इति चक्रधृतपाठः; "सहचरौ झिण्टीद्वयम्" इति शिवदासव्याख्या। सुश्रुतेऽपि सहचरद्वयमिति पाठः। किञ्च अत्रोक्तेषु मूर्वाऽपामार्ग-कमल-ब्राह्मी इत्येतेषु स्थानेषु सुश्रुते चक्रदत्ते च मोरटा-बधिर-कुरण्टकेन्दीवर-कपीतवक्राकाः इत्येते पाठभेदा दृश्यन्ते।

* "गुडूची" इति शिवदासव्याख्या।

प्रमेहे फलत्रिकादिः।—

फलत्रिकाब्ददार्वीणां विशालायाः शृतं पिबेत्।
निशाकल्कयुतं सर्व-प्रमेहविनिवृत्तये ॥ ९० ॥

प्रदरे दार्व्यादिः।—

दार्वी रसाञ्जनं मुस्तं भल्लातः श्रीफलं वृषः।
कैरातश्च पिबेदेषां क्वाथं शीतं समाक्षिकम् ॥
जयेत् सशूलं प्रदरं पीतश्वेतासितारुणम् ॥९१॥

व्रणरोगे न्यग्रोधादिः।—

न्यग्रोधप्लक्षकोशाम्र-वेतसा बदरी तुणिः।
मधुयष्टी पियालश्च रोध्रद्वयमुडुम्बरः ॥९२॥
पिप्पलश्च मधूकश्च तथा पारिशपिप्पलः।
शल्लकी तिन्दुकी जम्बू-द्वयमाम्रतरुः शिवा ॥९३॥

---

देवदारु। एतेषां क्वाथो मधुप्रक्षेपः। द्वितीयः,—वत्सकः कुटजः। बीजकोऽशनो वृक्षविशेषः। तथेति ग्रहणादयमपि मधुप्रक्षेपो व्यवक्रियते ॥ ८९ ॥

अपरश्च फलत्रिकादिप्रयोगः, फलत्रिकेति।—अब्दो मुस्ता। दार्वी दारुहरिद्रा। विशाला इन्द्रवारुणी। निशा हरिद्रा, तस्याः कल्कः प्रक्षेपः। अत्र मध्वपि प्रक्षिपन्त्येके व्याधिविहितत्वात् ॥ ९० ॥

अथ प्रदरे दार्वीति।—दार्व्यादिकोऽयं गणः। अस्य क्वाथं शीतं स्पशांत, अत एव समाक्षिकं मधुप्रक्षेपम्। दार्वी दारुनिशा। रसाञ्जनं प्रतीतं, तच्च दार्वीक्वाथ-समुद्भवमिति वदन्ति। भल्लातो भल्लातकफलं, तदसहत्वे रक्तचन्दनमिति। श्रीफलं बिल्वम्। वृष आटरूषकः। कैरातो भूनिम्बः। सशूलमिति—सशूलमुपद्रवं प्रदरस्यैव। असितं कृष्णम् ॥९१॥

अथ व्रणरोगे न्यग्रोधेति।—न्यग्रोधादिकषायोऽयं व्रणरोगेषु प्रशस्तः ग्राही च भवति। न्यग्रोधो वटवृक्षः। प्लक्षः पाकरीति लोके। कोशाम्रः क्षुद्राम्रवृक्षः, तत्फलमम्लं ग्राही भवति। वेतसो वञ्जुलः, जलवेतस इति प्रतीतः। तुणिः "तोंद" पादपो वस्त्ररञ्जनार्थकः पीतवर्णः। पियालश्चिरोञ्जी। रोध्रद्वयमिति—लोध्रं सावर-लोध्रञ्चेति। मधूको वृक्षविशेषः। पारिशपिप्पलः पिप्पलभेदः प्रसिद्धः। शल्लकी

कदम्बककुभौ चैव भल्लातकफलानि च ।
न्यग्रोधादिगणक्वाथं यथालाभञ्च कारयेत् ॥९४॥
अयं क्वाथो महाग्राही व्रण्यो भग्नञ्च साधयेत् ।
योनिदोषहरो दाह-मेदोमेहविषापहः ॥९५॥

स्थौल्ये बिल्वादिपञ्चमूलम् ।—

बिल्वोऽग्निमन्थः श्योनाकः काश्मरी पाटला तथा ।
क्वाथ एषां जयेन्मेदो-दोषं क्षौद्रेण संयुतः ॥९६॥

स्थौल्ये त्रिफलाक्वाथः उष्णाम्बुयोगश्च ।—

क्षौद्रेण त्रिफलाक्वाथः पीतो मेदोहरः स्मृतः ।
शीतीभूतं तथोष्णाम्बु मेदोहृत् क्षौद्रसंयुतम् ॥९७॥

उदरे चव्यादिः ।—

चव्यचित्रकविश्वानां साधितो देवदारुणा ।
क्वाथस्त्रिवृच्चूर्णयुतो गोमूत्रेणोदरान् जयेत् ॥९८॥

कपिप्रिया । जम्बूद्वयमिति—क्षुद्रजम्बू राजजम्बूश्चेति । शिवा हरीतकी । कदम्बो वृक्षविशेषः, न तु ग्रामिकदम्बः । ककुभः अर्जुनः, सुगन्धमूला विटपविशेषः, अथवा "कोह" शब्दवाच्यवृक्षविशेषः । यथालाभमिति—प्राप्तं वा ग्राह्यं क्वाथ्यम् ॥९२—९५॥

बिल्व इति ।—एष महापञ्चमूलाख्यः कषायो मेदोहरो प्रशस्तः । तत्राग्निमन्थोऽरणिः । श्योनाकः वृक्षविशेषः । काश्मरी गाम्भारी । एषामिति—महापञ्चमूलानां, महातरुसम्भवत्वात् महच्छब्दोपलक्षितानामिदम् । क्षौद्रेण संयुतः इति—मधुप्रक्षेपः ॥ ९६ ॥

क्षौद्रेणेति ।—अपरोऽपि त्रिफलाक्वाथो मधुप्रक्षेपः दोषहरो भवति ; त्रिफलाऽत्र हरीतक्यादिकम् । शीतीभूतं तथेति योगान्तरमाह—उष्णाम्बु शीतीभूतं कृत्वा तत्र मधुप्रक्षेपं मेदोहृद्भवति । उष्णाम्बु अष्टमांशावशेषितजलं, तत्र द्विपलमितं, मधु चतुर्थांशमिति व्यवहारात्, न तु साम्यम्, यतः—"मधुसर्पिषी मध्वम्बुनी मानतस्तुल्ये नाश्नीयात्" ( सु० सू० २० अ० ) इति । अत्र मतिरेव बोध्यः ॥ ९७ ॥

चव्येति ।—चव्यं स्वनामख्यातम् । विश्वा शुण्ठी । त्रिवृत् त्रिभण्डी, "निसोथ" इति लोके, तस्याश्चूर्णं प्रक्षेपं साधु । गोमूत्रस्याप्यत्र प्रक्षेपः । उदरानिति—सर्वोदरान् ॥ ९८ ॥

शोथोदरे पुनर्नवादिः।—

पुनर्नवाऽमृतादारु-पथ्यानागरसाधितः।
गोमूत्रगुग्गुलुयुतः क्वाथः शोथोदरापहः ॥९९॥

यकृदादौ पथ्यादिः।—

पथ्यारोहितकक्वाथं यवक्षारकणायुतम्।
पिबेत् प्रातर्यकृत्प्लीह-गुल्मोदरनिवृत्तये ॥ १००॥

शोथे पुनर्नवादिः।—

पुनर्नवा दारुनिशा निशा शुण्ठी हरीतकी।
गुडूची चित्रकौ भार्गी देवदारु च तैः शृतः ॥
पाणिपादोदरमुख-प्राप्तं शोफं निवारयेत् ॥१०१॥

वृद्धिरोगे त्रिफलाक्वाथः।—

फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव पाययेत्।
वातश्लेष्मकृतं हन्ति शोथं वृषणसम्भवम् ॥१०२॥

अन्त्रवृद्धौ रास्नादिः।—

रास्नाऽमृताबलायष्टी-गोकण्टैरण्डजः शृतः।
एरण्डतैलसंयुक्तो वृद्धिमन्त्रभवां जयेत् ॥ १०३ ॥

---

पुनर्नवेति।—पुनर्नवा वर्षाभूः। अमृता गुडूची। दारु देवदारु। पथ्या हरीतकी। नागरं शुण्ठी। प्रत्यहोपयोगत्वात् प्रक्षेपार्थं गुग्गुलुमाषचतुष्टयं गोमूत्रमक्षप्रमाणं, विरेके तु प्राचुर्य्यमुभयोः ॥ ९९ ॥

अथ प्लीहोदरे पथ्येति।—पथ्या हरीतकी। रोहितकः विटपिविशेषः, "रुहेरी" इति लोके। यवक्षारः पिप्पलीचूर्णं यथादोषापेक्षया व्यवहरन्ति ॥ १०० ॥

अथ शोथे पुनर्नवेति।—पुनर्नवादिशृतः कथितः। अत्र दारुनिशा दारुहरिद्रा। शेषं सुगमम ॥१०१ ॥

अथ वृषणशोथे फलत्रिकेति।—गोमूत्रेणैव क्वथितं त्रिफलोद्भवं कषायमिति। अयं वातकफकृते वृषणशोफे। तन्त्रान्तरे वातोद्भवे वृषणशोथे कथितः; तत्र त्रिफलाक्वाथो गोमूत्रप्रक्षेपः प्रातरेव योज्यः ॥ १०२ ॥

अथान्त्रवृद्धौ रास्नेति।—रास्नादिकोऽयं शृतः कथितः। रास्ना सुरभी। बला "खिरहटी" इति लोके। यष्टी मधुयष्टी। गोकण्टको गोक्षुरकः। केचित्

गण्डमालायां काञ्चनार-वरुणक्वाथौ।—

काञ्चनारत्वचः क्वाथः शुण्ठीचूर्णेन नाशयेत्।
गण्डमालां तथा क्वाथः क्षौद्रेण वरुणत्वचः ॥१०४॥

श्लीपदे शाखोटवल्कलक्वाथः।—

शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत्।
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये ॥१०५॥

अन्तर्विद्रधौ पुनर्नवादिः शिग्रुक्वाथश्च।—

पुनर्नवावरुणयोः क्वाथोऽन्तर्विद्रधीन् जयेत्।
तथा शिग्रुभवः क्वाथो हिङ्गुसैन्धवसंयुतः ॥१०६॥

अन्तर्विद्रधौ वरुणादिः।—

वरुणादिगणक्वाथमपक्वे मध्यविद्रधौ।
ऊषकादिरजोयुक्तं पिबेच्छमनहेतवे ॥१०७॥

स यथा—

वरुणादिगणः।—

वरुणो बकपुष्पश्च बिल्वापामार्गचित्रकाः।

"गोकण्टेरण्डजः शृतः" इत्यत्र "पटोलं रेवतं कटु" इति पठन्ति, तच्च बहुषु पुस्तकेषु न दृश्यते ॥ १०३ ॥

अथ गण्डमालायां काञ्चनारत्वच इति।—एतद्योगद्वयं गण्डमालायां प्रशस्तम्। काञ्चनारो वृक्षविशेषः स्वनामप्रतीतः, तस्य त्वक्क्वाथः। शुण्ठीचूर्णमत्र प्रक्षेपः। वरुणोऽपि वृक्षभेदो विख्यातः। मधु प्रक्षेपे। तथेति—गण्डमालाहरो योगोऽयम् ॥ १०४ ॥

अथ श्लीपदरोगे शाखोटेति।—शाखोटः प्रसिद्धः, "सिहोरो" इति लोके। गोमूत्रं प्रक्षेपे। एतच्च कफश्लीपदे प्रायशो योज्यम् ॥१०५॥

अथ विद्रधौ पुनर्नवेति।—पुनर्नवा अत्र श्वेतवर्षाभूः, तस्या मूलम्। वरुणस्य त्वक्। अयं योगोऽन्तर्विद्रधौ अपक्वे योज्यः। अपरयोगमाह, तथेत्यादि।—शिग्रुः शोभाञ्जनः। हिङ्गुसैन्धवसंयुत इति—व्यवहारात् प्रक्षेपे हिङ्गु रक्तिकाचतुष्टयं, सैन्धवं माषकं प्रत्यहोपयोगत्वात् ॥ १०६ ॥

वरुणादिगणेति।—वरुणादिगणः अत्रैवाग्रे वक्ष्यमाणोऽस्ति। ऊषकः क्षारमृत्तिका, वाराणसीसमीपे बहुक्षारेऽपि बाहुल्येन भवति, अन्ये तद्भवद्रव्यमाहुरिति

अग्निमन्थद्वयं शिग्रु-द्वयञ्च बृहतीद्वयम् ॥ १०८ ॥
मैरेयकत्रयं मूर्वा मेषशृङ्गी किरातकः।
अजशृङ्गी च बिम्बी च करञ्जश्च शतावरी ॥ १०९ ॥ *
वरुणादिगणक्वाथः कफमेदोहरः स्मृतः।
हन्ति गुल्मं शिरःशूलं तथाऽऽभ्यन्तरविद्रधीन् ॥११०॥

भगन्दरे खदिरादिः।—

खदिरत्रिफलाक्वाथो महिषीघृतसंयुतः।
विडङ्गचूर्णयुक्तश्च भगन्दरविनाशनः ॥ १११ ॥

हन्तन:। स यथेति ग्रहणात वरुणादिकयोगमाह, वरुण इत्यादि।—एवं वरुणादिक्वाथो विद्रधौ प्रशस्तः। स च ऊषकादिगणरजसा प्रक्षिप्तः पूर्वं कथित एव। वरुणः प्रसिद्धः। वक्रपुष्पः "काकई" इति लोके। अपामार्गः शिखरी प्रतीतः। अग्निमन्थद्वयमिति—तर्कारी, तस्य भेदोऽरणिः। शिग्रुद्वयमिति—शिग्रु मधुशिग्रु च हरितरक्तभेदेन। बृहतीद्वयमिति—कण्टकारीद्वयं, तेन लघुकण्टकारिका बृहती च। मैरेयकत्रयमिति—सहचरत्रयं, तच्च पीतरक्तनील-पुष्पभेदेन भिन्नं विख्यातमेव। मूर्वा चोरस्नायुः। मेषशृङ्गी वल्लीसंज्ञा प्रसिद्धा, भेढाशृङ्गीति लोके। किरातकः भूनिम्बः। अजशृङ्गी कर्कटाख्या। बिम्बीति—"बिरौत" इति लोके, सा च पीलुपर्णी कथिता। करञ्जो बृहत्करञ्जो वृक्षविशेषः। ऊषकादिगणो यथा—"ऊषकसैन्धवशिलाजतुकाशीसद्वयगुग्गुलुहिङ्गूनि तुत्थकञ्च" (सु० सू० ३८ अ०) इति गणोऽयं ग्रन्थान्तरात् बोद्धव्यः; एतत् व्यक्तं वा प्रक्षेपे प्रशस्तम्। अयं क्वाथो मेदःकफजे विद्रधौ विहितः, वरुणादिगणस्य कफमेदो-विनाशकत्वात ॥ १०७—११० ॥

अथ भगन्दरं खदिरेति।—खदिरादिक्वाथो महिषीघृतप्रक्षिप्तः विडङ्गचूर्णाव-कीर्णश्च भगन्दरे विहितः। खदिरः कण्टकीवृक्षः प्रतीतः, तस्य सारो ग्राह्यः। महिषीघृतमिति व्याधिविहितत्वात् ॥ १११ ॥

* अपामार्ग-मैरेयकत्रय-मूर्वा-किरातक-करञ्ज इत्येतेषां स्थाने सुश्रुते चक्रदत्ते च आर्तगल-सैरेयकद्वय-मोरटा-बघिर-दर्भ-करञ्जद्वय इति पाठवैषम्यं दृश्यते।

उपदंशे पटोलादिः।—

पटोलत्रिफलारिष्ट-किरातखदिरासनैः।
क्वाथः पीतो जयेत् सर्वानुपदंशान् सगुग्गुलुः ॥११२॥

वातरक्ते अमृतादिः।—

अमृतैरण्डवासानां क्वाथ एरण्डतैलयुक्।
पीतः सर्वाङ्गसञ्चारि वातरक्तं जयेद्ध्रुवम् ॥११३॥

वातरक्ते पटोलादिः।—

पटोलं त्रिफला तिक्ता गुडूची च शतावरी।
एतत्क्वाथो जयेत् पीतो वातास्रं दाहसंयुतम् ॥११४॥

श्वित्रे धात्र्यादिः।—

क्वाथोऽवल्गुजचूर्णाढ्यो धात्रीखदिरसारयोः।
जयेत् सुशीलितो नित्यं श्वित्रं पथ्याशिनां नृणाम् ॥११५॥

---

अथोपदंशे पटोलेति।—अरिष्टो निम्बः। असनो शालविशेषः पीतसारः। गुग्गुलुरत्र प्रक्षेपे माषचतुष्टय व्यवहारात्। सर्वानिति—पञ्चप्रकारान् ॥ ११२ ॥

अथ वातरक्ते योगद्वयमाह, अमृतेत्यादि।—एषः अमृतादिक्वाथः एरण्डतैल-प्रक्षिप्तः। अमृता गुडूची। वासा आटरूषकः। सर्वाङ्गसञ्चारीति—सर्वशरीरप्रसिद्धम्। ध्रुवमिति ग्रहणेन दृष्टफलोऽयं योगः। "अमृतारग्वधवृषैः क्वाथः" इति केचित् पठन्ति; अयमपि साधुः अन्यतो दर्शनात्; तथा हि—"वासागुडूचीचतुरङ्गुला-नामेरण्डतैलेन पिबेत् कषायम्। क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥" इति ॥११३॥

पटोलमिति।—अयं पटोलादिक्वाथो वातरक्ते साधुः। तिक्ता कटुरोहिणी। शेषं सुगमम्। अयं योगः पित्तप्राये प्रायशः प्रचरति ॥ ११४ ॥

अथ श्वित्रे क्वाथोऽवल्गुजेति।—असौ क्वाथो नित्यं प्रतिदिनम्। सुशीलितः सतता-भ्यस्तः। पथ्याशिना श्वित्रविहितपथ्याशिनाम्। अवल्गुजो वाकुचीति प्रसिद्धवाच्यद्रव्य-विशेषः, तस्य चूर्णं प्रक्षेपे। धात्री आमलकीफलानि ॥ ११५ ॥

वातरक्ते स्वल्पमञ्जिष्ठादिः।—

मञ्जिष्ठा त्रिफला तिक्ता वचा दारुनिशाऽमृता।
निम्बश्चैषां कृतः क्वाथो वातरक्तविनाशनः॥
पामाकपालिकाकुष्ठ-रक्तमण्डलजिन्मतः ॥११६॥

कुष्ठादौ बृहन्मञ्जिष्ठादिः।—

मञ्जिष्ठामुस्तकुटज-गुडूचीकुष्ठनागरैः।
भार्गीक्षुद्रावचानिम्ब-निशाद्वयफलत्रिकैः॥ ११७॥
पटोलकटुकीमूर्वा-विडङ्गाशनचित्रकैः।
शतावरीत्रायमाणा-कृष्णेन्द्रयववासकैः॥११८॥
भृङ्गराजमहादारु-पाठाखदिरचन्दनैः।
त्रिवृद्वरुणकैरात-वाकुचीकृतमालकैः॥ ११९॥
शाखोटकमहानिम्ब-करञ्जातिविषाजलैः।
इन्द्रवारुणिकाऽनन्ता-सारिवापर्पटैः समैः॥१२०॥
एभिः कृतं पिबेत् क्वाथं कणागुग्गुलुसंयुतम्।
अष्टादशसु कुष्ठेषु वातरक्तार्दिते तथा॥ १२१॥

---

अथ कुष्ठादौ क्वाथद्वयमाह, मञ्जिष्ठेति।—अयं लघुमञ्जिष्ठादिको योगः। तत्र दारुनिशा दारुहरिद्रा। अमृता गुडूची। एके दारु निशेति द्रव्यद्वयं व्याख्यापयन्ति, तेन दारु देवदारु, निशा हरिद्रा, एतदपि व्यवहरन्ति। पामादयोऽपि कुष्ठस्यैव भेदाः॥११६॥

अपरमप्याह, मञ्जिष्ठेति।—बृहन्मञ्जिष्ठादिसंज्ञकोऽयं क्वाथः प्रसिद्धः। अत्र कुटजो वृक्षविशेषः, तस्य त्वक्। निशाद्वयं हरिद्राद्वयम्। मूर्वा चोरस्नायुः। अशनो वृक्षविशेषः। त्रायमाणा स्वनामप्रसिद्धा। कृष्णा पिप्पली। वासकः आटरूषकः। भृङ्गराजः केशरञ्जनः, "भमरा" इति प्रसिद्धः। महादारु देवदारु। चन्दनं रक्तचन्दनम्। त्रिवृत् निःसृता। कैराती भूनिम्बः। शाखोटको वृक्षविशेषः प्रसिद्धः। महानिम्बो निम्बार्कः, "बका" इति लोके प्रतीतः। करञ्जो बृहत्करञ्जः। जलं बालकम्। अनन्ता यवासकः। सारिवा आस्फोता, सा द्विविधा श्वेतकृष्णभेदेन, शुक्ला जम्बूपत्रपत्रा क्षवयिः, कृष्णा काकड़ंवपत्रा सुगन्धा। शेषं सुबोधम्।

उपदंशे श्लीपदे च प्रसुप्तौ पक्षघातके।
मेदोदोषे नेत्ररोगे मञ्जिष्ठादिः प्रशस्यते ॥१२२॥

शिरोरोगादौ पथ्यादिः।—

पथ्याऽक्षधात्रीभूनिम्बैर्निशानिम्बामृतायुतैः।
शृतः क्वाथः षडङ्गोऽयं सगुड़ः शीर्षशूलहृत् ॥१२३॥
भ्रूशङ्खकर्णशूलानि तथाऽर्द्धशिरसो रुजम्।
सूर्य्यावर्त्तं शङ्खकञ्च दन्तपातञ्च तद्रुजम् ॥
नक्तान्ध्यं पटलं शुक्रं चक्षुःपीड़ां व्यपोहति ॥ १२४॥

नेत्ररोगे वासादिः।—

वासाविश्वाऽमृतादार्वी-रक्तचन्दनचित्रकैः।
भूनिम्बनिम्बकटुका-पटोलत्रिफलाऽम्बुदैः ॥ १२५ ॥
यवक्षालिङ्गकुटजैः क्वाथः सर्वाक्षिरोगहा।
वैस्वर्य्यं पीनसं श्वासं नाशयेद्द्रसः क्षतम् ॥ १२६ ॥

---

एभिर्मञ्जिष्ठादिद्रव्यैः समैः सममानैः कृतं साधितं क्वाथमित्यर्थः। कणागुग्गुलुसंयुतमिति—कणाचूर्णं गुग्गुलुश्च प्रक्षेपे साधुः ॥ ११७—१२२॥

अथ शिरोरोगे पथ्यादिकं योगमाह, पथ्येति।—पथ्या हरीतकी। अक्षो विभीतकः। धात्री आमलकी। भूनिम्बः कैरातः। निशा हरिद्रा। निम्बः प्रतीतः। अमृता गुडूची। अयं षडङ्गसंज्ञः षट् अङ्गानि यस्य स तथा। अत्र त्रिफला एकमङ्गं षष्ठमङ्गं गुडमिति। गुडोऽत्र प्रक्षेपे साधुः। अयमपि सायमुपयोज्यः, प्रायेण ऊर्द्ध्वजत्रुगतरोगहरत्वात्। शीर्षशूलं शिरोव्यथा। भ्रूशूलं शङ्खशूलं कर्णशूलमिति। तद्रुजमिति—दन्तशूलम्। शुक्रमिति—नेत्रपुष्पम् ॥ १२३।१२४ ॥

अथानन्तरमक्षिरोगे वासेति।—एक एव वासादिको गणो अक्षिरोगे प्रशस्तः। वासा आटरूषकः। विश्वं शुण्ठी। अमृता गुडूची। दार्वी दारुहरिद्रा। कटुका तिक्तरोहिणी; * समासान्तत्वात् कटुकाया ह्रस्वत्वञ्च। पटोलः कुलकः, तस्य पत्राणि।

---

* मूले कटुका इति पाठो विद्यते, तेन च छन्दोभङ्गः न जातः, अत एव समासान्तत्वादित्याद्युक्तिर्न समीचीनतया प्रतिभाति, किञ्च कटुका इत्यत्र समासान्तोऽपि न जातः इति सुधीभिर्द्रष्टव्यम्।

नेत्ररोगे अमृतादिः।—

अमृतात्रिफलाक्वाथः पिप्पलीचूर्णसंयुतः।
सक्षौद्रः शीतलो नित्यं सर्वनेत्रव्यथां जयेत् ॥ १२७ ॥

व्रणादौ पञ्चवल्कलम्।—

* अश्वत्थोडुम्बरप्लक्ष-वटवेतसजं स्मृतम्।
व्रणशोथोपदंशानां नाशनं क्षालनं स्मृतम् ॥१२८॥

प्रमथ्यालक्षणम्।—

प्रमथ्या प्रोच्यते द्रव्य-पलात् कल्कीकृताच्छृता।
तोयेऽष्टगुणिते तस्याः पानमाहुः पलद्वयम् ॥ १२९ ॥

---

अब्दो मुस्तम्। यवोऽन्नविशेषः निजनामविख्यातः, स च निस्तुषो ग्राह्यः। कालिङ्गम् इन्द्रयवः। कुटजो वत्सकत्वक्। अयं प्रातरेव योज्यः कषायत्वात्; तथा ह्युक्तं— "वासा घनं निम्बपटोलपत्रं तिक्ताऽमृताचन्दनवत्सकत्वक्। कलिङ्गदार्व्यौ दहनश्च पाठा भूनिम्बधात्र्याभयाविभीतम् ॥ श्यामा यवक्वाथमथाष्टभागं पिबेदिमं पूर्वदिने कषायम्। तैमिर्य्यकण्डू पटलार्बुदञ्च शुक्रं तथा सव्रणमव्रणञ्च ॥ निहन्ति दाहं सकलं सरागं नवान् निहन्त्यचिरगतांश्च रोगान् ॥" इति। अथ तैक्ष्ण्ये विकृतस्वरत्वम्। यवोऽत्र नेत्ररोगविहितत्वात् कथितः; तथा ह्युक्तं—"त्रिफला घृतं मधु यवाः पादाभ्यङ्गः शतावरी मुद्गाः। चक्षुष्यः सङ्क्षेपाद्वर्गः कथितो भिषग्भिरयम्" ॥ १२५।१२६ ॥

अपरमपि नेत्ररोगे प्रयोगमाह, अमृतेति।—अमृतादिक्वाथोऽयं सकलनेत्रामये प्रशस्तः। अमृता गुडूची। त्रिफला हरीतक्यादिकम्। पिप्पलीचूर्णं प्रक्षेपे। सक्षौद्रमिति—मध्वापि प्रक्षेपे साधुः, अत एव शीतलो हिमस्पर्शः, मध्वविरोधात्। नित्यमिति—सार्वकालीनमिदम् ॥ १२७ ॥

अथ व्रणेष्वपि क्षालनार्थं कषायमाह, अश्वत्थेति।—अश्वत्थादीनां पञ्चानामेव वल्कलो ग्राह्यः। अयं षडङ्गपानीयेन साध्यः। क्षालनं प्रक्षालनं व्रणस्य। इति क्वाथसमूहोऽभिहितः ॥ १२८ ॥

इदानीं तद्भेदान् प्रमथ्यादीनाह, तस्याः पूर्वं परिभाषां कथयति, प्रमथ्येति।—द्रव्यपलादिति—कल्कार्थं द्रव्यस्य पलप्रमाणम्। कल्कीकृतादिति—दृषदि पेषितात्,

---

* गूढार्थदीपिकायां पञ्चवल्कलक्वाथानन्तरं "मुखरोगे जातीपत्रादिक्वाथः सुगमः" इति पाठो दृश्यते; तेनैवमनुमीयते यत् एतदनन्तरं जातीपत्रादिक्वाथस्य उक्तिरासीत्,

सा यथा—

रक्तातीसारे मुस्तादिप्रमथ्या।—

मुस्तकेन्द्रयवैः सिद्धा प्रमथ्या द्विपलोन्मिता।
सुशीता मधुसंयुक्ता रक्तातीसारनाशिनी॥ १२०॥

यवागूसाधनविधिः।—

साध्यं चतुष्पलं द्रव्यं चतुःषष्टिपलेऽम्बुनि।
तत्क्वाथेनार्द्धशिष्टेन यवागूं साधयेद्घनाम्॥ १२१॥

सा यथा—

---

पेषणमेव जलेनानुक्तत्वात्। अष्टगुणिते तोये द्रव्यभागापेक्षयाऽष्टगुणपानीये। शृता क्वथिता। पलद्वयमित्यनेन चतुर्थांशावशेषितं ग्राह्यम्॥ १२९॥

अथ या प्रमथ्या सा कीदृशीति विवक्षायां सा यथेति ग्रहणेन तामेव प्रकटयन्नाह, मुस्तकेति।—इन्द्रयवः कुटजबीजम्। सिद्धेत्यनेन पूर्वं कल्किता पश्चात् क्वथितेत्यर्थः। द्विपलोन्मितेति पाननिमित्तम्। सुशीता हिमस्पर्शा, अत एव मधुप्रक्षिप्ता, प्रक्षेपद्रव्याणामपि परिमाणं पूर्ववत् ज्ञातव्यम॥ १२०॥

इदानीं यवागूपरिभाषामाह, साध्यमिति।—इयं द्रव्यक्वाथे तण्डुलादिभिः परिपाचिता यवागूशब्दवाच्या। चतुःषष्टिपलेऽम्बुनीति—द्रव्यभागात् षोड़शगुणं पानीयं देयमित्यर्थः। घनामित्यनेन शाल्यादिना साधयेत् यावत् द्रवरहिता स्यात्, अत एव तण्डुलादीनां परिमाणमनुमानतो निरूपणीयं, न तु अन्नप्रकृत्योक्ताया मानम (?) यथा—"पञ्चकोलेन संसिद्धा यवागूर्दीपनी तथा। बलामूलकषायेण साधिता ग्राहिणी मता॥" इति। अत्रापि मानं दोषाद्यपेक्षया अनुमानतो निरूपणीयम्। अत्र चतुःपलग्रहणं यत् तत् सामान्यं, विशेषतो न्यूनमपि दृश्यते ; तथा च तन्त्रान्तरे—"वृद्धवैद्याः पलं द्रव्यं ग्राहयन्त्याढ़केऽम्भसि। भेषजस्यातिबाहुल्यात् कदाचिद्रुचिर्भवेत्॥" इति॥ १२१॥

---

स च पाठः केषाञ्चित् प्रमादात् विलुप्त इति। अध्ययनार्थिनां बोधार्थं स प्रदर्श्यते,—"जातीपत्रामृताद्राक्षा-यासदार्वीफलत्रिकैः। क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत्॥" इति।

यहण्यामाम्रादियवागूः।—

आम्राम्रातकजम्बूत्वक्कषाये विपचेत् बुधः।
यवागूं शालिभिर्युक्तां तां भुक्त्वा ग्रहणीं जयेत्॥ १३२॥

यूषसाधनविधिः।—

* कल्कद्रव्यपलं शुण्ठी पिप्पली चार्द्धकार्षिकी।
वारिप्रस्थेन विपचेत् स द्रवो यूष उच्यते॥ १३३॥

स यथा—

त्रिदोषज्वरे सप्तमुष्टिकयूषः।—

कुलत्थयवकोलैश्च मुद्गैर्मूलकशुण्ठकैः।
शुण्ठीधन्याकयुक्तैश्च यूषः श्लेष्मानिलापहः॥ १३४॥

---

अथ सा यथेत्यनेन तस्याः स्वरूपमाह, आम्रेति।—आम्रो वृक्षविशेषो विख्यातः। + आम्रातकस्तद्भेदः, राजाम्र इति केचित। जम्बुः प्रसिद्ध एव, एषां त्वक् कल्की ग्राह्या। कषाय इति ग्रहणेन स्वरसादयोऽपि पञ्चकषायास्तैरपि कर्त्तव्या न दोषो व्यवहारात्; यतः, पञ्चकोलबलादीनां कल्करसेनैव साधिता बह्वो यवाग्वो दृश्यन्ते। बाहुल्यञ्च द्रव्यगुणावल्यामुक्तम्; यथा—"यैर्यैरेवौषधगणैर्यवागूः साधु साधिता। तांस्तानेवौषधगुणान् पुष्णाति विधियोजिता॥" इति। बुध इति ग्रहणेनान्नादिपरिमाणेन रन्धनविधौ दक्ष इत्यर्थः॥ १३२॥

सम्प्रति यूषमाह, अयं द्रव्यकृतयूषोऽपि विख्यात एव; कीदृशः? तत्परिभाषामप्यादावाह, कल्कद्रव्यपलमिति।—कल्कार्हं द्रव्यं, तच्च धान्यमूलकशुण्ठकादिकं, तथा शुण्ठी पिप्पली चार्द्धकार्षिकी प्रत्येकं तीक्ष्णत्वात्। केचित्तु शुण्ठीपिप्पलीचूर्णं पश्चात् प्रक्षेपे क्षिपन्ति। वारिप्रस्थेनेति—द्रवद्वैगुण्यात् द्वात्रिंशत्पलमितेन जलेन। स द्रवो द्रवप्रायः। अत्राप्यन्नपरिमाणादिकं यन्नोक्तं तदनुमानतो ग्राह्यम; यद्वा—जलानुसारतो रन्धनविधिदक्षसकाशात् दृष्टपरिपाकपरिपाट्या कुर्य्यादित्यर्थः॥ १३३॥

स यथेत्यनेन वक्ष्यमाणसप्तमुष्टिकयूषविधिं दर्शयन्नाह, कुलत्थेति।—अयं

---

* परिभाषेयं चक्रपाणिना कल्कसाध्ययवागूविषये पठिता।

+ आम्रातको गुड़पुष्पः, "आमड़ा" इति लोके।

सप्तमुष्टिक इत्येष सन्निपातज्वरान् जयेत्।
आमवातहरः कण्ठ-हृद्वक्त्राणां विशोधनः॥ १३५॥

पानीयसाधनविधिः।—

क्षुसं द्रव्यपलं साध्यं चतुःषष्टिपले जले।
अर्द्धशिष्टञ्च तद्देयं पाने भक्तादिसंविधौ॥ १३६॥

तत् यथा—

---

सप्तमुष्टिकसंज्ञको यूषः प्रसिद्ध एव। कुलत्थोऽन्नविशेषः। कोलं बदरफलम्। मूलकशुण्ठकैरिति—लघुमूलकशुण्ठैः, शुण्ठमत्र * नालग्रन्थिः; मूलकपोतिकेति केचित् गुणप्राबल्यात्; तथा हि—"कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी। सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका॥" इति। धन्याकं कुस्तुम्बुरु। सप्तमुष्टिक इत्यनेन कुलत्थादीनां मुष्टिसप्तकं ग्राह्यं तन्त्रान्तरदर्शनात्; यथा—"एकैकं मुष्टिमाहृत्य" इत्यादि; मुष्टिरन्तर्नखमुष्टिः, न तु मुष्टिः पलम्; अयमेव पक्षः वैद्यैरादृियते। † चक्रस्तु प्रत्येकमेषां पलं ग्राह्यं, सर्वसम्मतत्वात्। ननु सकलमेव द्रव्यमुचितमात्रयाऽन्वितं यत् क्वाथविधानेन यूषः क्रियते तदस्मत्सम्प्रदाये न मनोहरं, किन्तु व्यवहारात् कर्त्तव्यविधौ यवकुलत्थमुद्गा अन्यद्रव्यापेक्षया बहु देयाः, शुण्ठ्यादयो पश्चात् कटुकार्थं तावद्देयं, यावता कटुमात्रं स्यात्; एवमम्लार्थं बदरादीनां दानं, क्वाथो धान्यकमूलकशुण्ठयोः पृथक् पलपरिमितयोश्च दानमिति कर्त्तव्यविधिः साधुः। कण्ठहृद्वक्त्राणां विशोधन इति—कण्ठविशोधनः हृद्विशोधनः वक्त्रविशोधनश्च। विशोधनं कफस्येत्यर्थः॥ १३४।१३५॥

इदानीं पानादिकल्पनामाह, क्षुसमिति।—इयं पानादिकल्पनायां परिभाषा। क्षुसं कुट्टितम्। द्रव्यं व्याधिविहितम्। साध्यं क्वथितम्। तदिति—द्रवम्, अर्द्धावशेषितं जलमित्यर्थः। पाने इति—पानस्वरूपे, यथा वक्ष्यमाणं षडङ्गादिपानीयम्। भक्तादिसंविधाविति—यूषरसयवाग्वादिरूपे॥ १३६॥

---

* शुण्ठं नालग्रन्थिरिति व्याख्यानं न टीकाकृद्भिरादृतम्; मूलकशुण्ठकं शुष्कमूलकमिति वृद्धाः। मूलकपोतिका बालमूलकं, न तु मूलकशुण्ठकमिति।

† "चक्रः पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पलमानत्वेऽपि न दोषः इत्याह" इति तत्त्वचन्द्रिका।

पिपासाज्वरे षडङ्गपानीयम्।—

उशीरपर्पटोदीच्य-मुस्तनागरचन्दनैः।

जलं शृतं हिमं पेयं पिपासाज्वरनाशनम्॥ १३७॥

उष्णोदकविधिः।—

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा।

अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्॥ १३८॥

तत्र यथेति वाक्येन पानीयादिकार्थं प्रक्रियां प्रकटयति ग्रन्थकारः, उशीरेति।—अयं षडङ्गसंज्ञकः। उदीच्यं बालकम्। नागरं शुण्ठी। चन्दनं रक्तम्। जलं पानीयम्। शृतं क्वथितम्। हिमं शीतस्पर्शम्। पेयमिति वारंवारम्; यतः,—"मुहुर्मुहुश्च तट्क्षार्ट-हिक्काश्वासगरेषु च" (शार्ङ्ग० पूर्व० २ अ०) इति वचनात्। एषां योगो ज्वरादितो युक्तः; तथा हि—"षडङ्गादैः शृतं तोयं देयमादौ ज्वरस्य वै"॥ १३७॥

अथोष्णोदकविधिं दर्शयन्नाह, अष्टमेनेति।—यत् केवलमेव पानीयमष्टमांशादि-कल्पनया सिद्धं भवति तदुष्णोदकमिति संज्ञं वदेदिति। अंशशेषेणाष्टमादिभिः प्रत्येकमभिसम्बध्यते; तेन अष्टमांशेन चतुर्थांशेनार्द्धांशेनेत्यर्थः, अंशमत्र क्वथनाच्छिष्टम्। अथवेत्यनेन पक्षान्तरमाह, क्वथनेनैवेत्यादि।—क्वथनमिति—अत्र त्रिपादशेष-मित्यर्थः। एतत् क्रियाचतुष्टयं दोषापेक्षया अभिहितम्; तथा हि—"तत् पादहीनं विपाद्य तच्चैषमनिलापहम्। अर्द्धं चयकफहरं शेषं थाहि त्रिदोषजित्॥" इति। ननु यद्येवं, तर्हि सुश्रुतेन कथमेतद्विपरीतमुक्तम्;—* "तत् पादहीनं वातघ्नमर्द्धहीनन्तु पित्तजित। कफघ्नं पादशेषञ्च पानीयं दीपनं स्मृतम्॥" इति? सत्यम्; आद्यः पक्षो व्यवहारो, स च ज्वरादीनां दोषप्रकोपे प्रथमतः, द्वितीयस्तु षड्ऋतुषु दोषापेक्षयाऽभि-हितः; सुश्रुते उक्तञ्च—†"शारदश्चार्द्धपादोन पादहीनन्तु हैमकम्। शिशिरे च वसन्ते च ग्रैष्म पादावशेषितम्॥ विपरीतमृतुं दृष्टा वार्षिकञ्चाष्टभागिकम्॥" इति यद्विरोधपरिहारः कृत, तत् साधुभिर्विचारणीयः, अत्र विस्तरभयान्न लिखितः। ‡सिद्धमिति यत् ग्रहणं लघुक्रियाक्वथननिमित्तम्; यतः,—"यत् क्वाथ्यमानं निर्वेगं

* मुद्रितसुश्रुतसंहितासु नायं श्लोको दृश्यते।

† मुद्रितसुश्रुतसंहितासु नायं सार्द्धश्लोको दृश्यते।

‡ सिद्धमिति यत् ग्रहणं कृतं तत् क्वथननिमित्तं लघुपाकित्वबोधकम् इति पाठ-कल्पनं सङ्गतार्थकम्।

रात्रौ उष्णोदकपानस्य गुणाः।—

श्लेष्मघ्नं वातमेदोघ्नं बस्तिशोधनदीपनम्।
कासश्वासज्वरहरं पीतमुष्णोदकं निशि॥ १३९॥

क्षीरसाधनाविधिः।—

क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम्।
क्षीरावशेषं तत् पीतं शूलमामोद्भवं जयेत्॥ १४०॥

निष्फेनं निर्मलं तथा। शृतशीतं त्रिदोषघ्नं बाष्पान्तर्भावशीतलम्॥" इति, अन्यथा दोषकरः स्यात्; तथा हि—"धारापातेन विष्टम्भि दुर्जरं पवनाहतम्। शृतशीतं पुनस्तप्तं तत् सर्वं दोषलं स्मृतम्॥" इति। उष्णोदकं वर्द्धोदिति—ईषदुष्णम् उष्णोदकं कथितम्॥ १३८॥

अथोष्णोदकस्य निशि पीतस्य गुणमाह, श्लेष्मघ्नमिति।—एतदुष्णोदकं यदा निशि पीतं तदा श्लेष्मादिकान् हन्तीति। वातमेदोघ्नमिति—वातघ्नं मेदोघ्नञ्च। श्लेष्मामवात-मेदोघ्नमिति वा पाठान्तरम्। बस्तिशोधनं मूत्राशयशुद्धिकरम्। दीपनमग्नेः। पीत-मुष्णोदकमिति—ईषदुष्णं पीतम्। निशीति—निशामुखे शयनकाले वा, न तु सकलनिशायां मुहुर्मुहुः पानं, तत्र निषेधपरत्वात्; तथा हि—"यथा दिवा तथा रात्रौ यदि तोयं पिबेन्नरः। भवेत् तत्र रसाधिक्यं तच्छ्लेष्मादिदोषकोपनम्॥" इति सत्यम्; एष स्वस्थे प्रसङ्ग इति वर्त्तते व्यवहारात, आतुरे न कुत्रचित् प्रतिषेधः; तथा स्मृतं—"पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्। अतोऽत्यन्तनिषेधेन न क्वचित् वारि वार्य्यते॥" इति॥ १३९॥

इदानीं क्षीरपाकविधिमाह, क्षीरमिति।—क्षीरमत्र गव्यम्, अत्रानुक्तत्वात्। द्रव्यमिति—शुण्ठीवितुन्नकादिकमन्यतो दर्शनात्; तथा हि—"शुण्ठीवितुन्नकैरण्ड-शृतं शूलहरं पयः" इति। कर्षव्यतास्य द्रव्याणां भागैकं यथादोषापेक्षया परिमितं, क्षीरस्य भागाष्टकं, पानीयं द्वात्रिंशद्भागयुतम्, एतत् सकलं क्वाथ्य क्षीरावशेषं वस्त्रेण संस्राव्य पिबेत्। पानमानञ्चास्य क्वाथवत् बोद्धव्यं, दोषानुसारतो वा। आमोद्भवं शूलमिति—आमशूलं, न तु आमवातजनितपीडा, तत्र क्षीरस्य निषिद्ध-त्वात्; तदुक्तं—"दधिमत्स्यगुड़क्षीर-पीतकोमाषपिष्टकम्। वर्ज्जयेदामवातार्त्तो मांसमानूपजं तथा॥" इति। आमः अपरिपक्वोऽन्नरसः, तथा हि—"जठरानल-दौर्बल्यादविपक्वस्तु यो रसः। स आमसंज्ञको देहे सर्वदोषप्रकोपणः॥" इति। केचिदामशूलं परिणामजं शूलमामनन्ति, एतदपि सङ्गतम्। द्रव्यादिति सामान्य-

जीर्णज्वरे पञ्चमूलीक्षीरम्।—

* ( सर्वज्वराणां जीर्णानां क्षीरं भैषज्यमुत्तमम्।
श्वासात् कासाच्छिरःशूलात् पार्श्वशूलात् सपीनसात्॥
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः॥

जीर्णज्वरे त्रिकण्टकादिक्षीरम्।—

त्रिकण्टकबलाव्याघ्री-गुडनागरसाधितम्।
वर्चोमूत्रविबन्धघ्नं कफज्वरहरं पयः॥ )

यवागूकृशरयोः साधनविधिः।—

अथान्नप्रक्रियाऽत्रैव प्रोच्यते नातिविस्तरात्।
यवागूः षड्गुणजले सिद्धा स्यात् कृशरा घना॥

---

एवमन्येषामपि क्षीरयोगानां विधानमेव बोद्धव्यम्; यथा—†"वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः। आ-वारिनाशात् क्वथितं शुक्रोदावर्त्तनाशनम्॥" इति। एतदपि प्रसङ्गतो व्याचष्टे—अत्र वस्तिशुद्धिकराणि तृणपञ्चमूलीवीरतरादीनि। आवाप इह ‡ क्षीरशोधनार्थं कल्कः; तथा ह्युक्तं—"कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्। पित्तकृच्छ्रहरं पञ्च-मूलं वस्तिविशोधनम्॥ एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम्॥" इति॥ १४०॥

सम्प्रति यवाग्वन्नादिकान्नप्रक्रियामाह, अथान्नेति।—अथेति—अनन्तरम्। अन्न-प्रक्रियेति—यवागूविलेपीपेयादिरूपा। अत्रास्मिन् ग्रन्थे। नातिविस्तरात् सङ्क्षेप-भावात्, यतो विस्तरकथनं सर्वेषामप्यालस्यकरं भवति। तेषु पूर्वं यवागूविधिमाह, यवागूरित्यादि।—षड्गुणे जले पानीये या सिद्धा सा यवागूशब्दवाच्या; षड्गुण-मित्यत्रपरिमाणात्। ¶ एषा तण्डुलैरेव साध्या व्यवहारात्, तथा साध्या यथा

---

* प्रक्षिप्ताविमौ इति केचित्।

† वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः। आ-वारिनाशात् क्वथितं पीतवन्तं प्रकामतः॥ रमयेयुः प्रिया नार्यः शुक्रोदावर्त्तिनं नरम्॥" इति सुश्रुते पाठः।

‡ "आवापः क्षीरसाधनार्थं कल्कः" इति शिवदासः।

¶ "एषा तण्डुलैरेव" इति एवशब्दप्रयोगोऽत्र न समीचीनतया प्रतिभाति, लाजैनापि बहुस्थाने यवागूप्रस्तुतविधिदर्शनात्; यथा—"लाजपेया सुखजरा'

तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता ॥ १४१ ॥

विरलद्रवा भवति ; यतः,—"यवागूर्विद्रवा" इति वचनात्। अस्या भेदः कृशरेति नाम्ना कथिता, सा घना द्रवरहिता इत्यर्थः। इयमपि तण्डुलादिभिः साधिता भवति। अत्र मुद्गमाषैश्चेति चकारात व्यस्तं ग्राह्यं, तेन मुद्गसाधिता माषसाधिता वा। तिलान्यवोभयत्र योज्यानि। तन्त्रान्तरेऽपि तिलतण्डुलमाषकृता यवागूरेव कृशरा कथ्यते। केचिदनुक्तत्वात तिलमाषतण्डुलानामेव साम्यं मन्यन्ते, तन्न मनोहरम् ; किन्तु व्यवहारात तण्डुलाना भागद्वयं,माषस्य भागैकम्, अर्द्धभागिकं तिलानामिति सकलेभ्यो षड्गुणजलमित्यर्थः। यवागूरिति सामान्येन, अस्या बहवो भेदाः सन्ति ; तद्यथा—दुग्धतण्डुलयवागूः, घृततण्डुलयवागूः, मांसतण्डुलयवागूः, फलकन्दतण्डुलयवागूरित्येताः सर्वा यवाग्वो द्रव्यानुसारतो गुणकर्य्यः साधनीयाश्च भवन्ति ॥ १४१ ॥

इत्यादि। किञ्च तन्त्रान्तरे केवललाजैरेव प्रस्तुतविधिदर्शनाच ; तथा च चक्रपाणिदत्तः,—"मण्डादयो लाजोपादाना वेद्याः, न तु तण्डुलोपादानाः, तथा च मुनिः,—"अतः पिप्पलीशुण्ठीभ्यां युक्तो लाजाम्बुदाडिमैः। मण्डः सन्दीपयत्यग्निं वातञ्चाप्यनुलोमयेत् ॥" इति। तदुक्तं—"द्रव्यस्यार्द्धपलं दत्त्वा तोयस्य प्रस्थमावपेत्। अर्द्धशेषं गृहीत्वा तत् कर्षौ द्वौ दाडिमस्य च ॥ युक्तं विश्वाह्वसैन्धव-धान्यकैः शाणमात्रकैः। हिङ्गुर्षमात्रैर्लाजैश्च भूयः सन्धुपितश्च तत ॥ पिप्पलीजीरकाभ्याञ्च शाणैकेनावचूर्णितम्। पेयास्वेष विधिः कल्प्यो दाडिमादिकृतास्वपि ॥" इति। तथा—"लाजाम्बुसैन्धवकणा-धान्यनागरदाडिमैः। युक्तो विमर्दितः पूतो मण्डः संस्कृत उच्यते ॥" इत्यादि। किञ्च 'तथा साध्या" इत्याद्युक्तिरपि न द्वया, यतः तत्त्वचन्द्रिकायां—"द्रवसिक्थसमन्विता यवागूरिति यवाग्वाः सामान्यलक्षणम्" इति। "पेया सिक्थसमन्विता यवागूः" "यवागूः षड्गुणेऽम्भसि" इति च। अत्र तत्त्वचन्द्रिका—"तत्र यवागूशब्देन पेया विवक्षिता। पेया इति संज्ञाबलात् बहुद्रवत्वमल्पसिक्थत्वञ्च ज्ञेयम् ; तेन सिक्थसमन्विता यवागूः पेया इति पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वञ्च लक्षणतया बोद्धव्यम्" इति। अन्यच्च सुश्रुते—"विलेपी बहुसिक्था स्यात् यवागूर्विरलद्रवा" इति पाठः ; बहुसिक्था विरलद्रवा यवागूर्विलेपी इति तस्यार्थः। चक्रदत्तेऽपि—"यवागूर्बहुसिक्था स्यात् विलेपी विरलद्रवा" इति। एवञ्च चतुर्गुणजलसाधितायां विलेप्या एव विरलद्रवा इत्यादि व्याख्या सङ्गच्छते, न तु षड्गुणजलसाधितायाः पेयाऽपराख्याया यवाग्वा इति दिक्।

यवागूगुणाः।—

यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ॥ १४२ ॥

विलेप्याः साधनविधिः गुणाश्च।—

विलेपी घनसिक्था स्यात् सिद्धा नीरे चतुर्गुणे।
तर्पणी बृंहणी हृद्या मधुरा पित्तनाशिनी ॥ १४३ ॥

पेयायूषयोः साधनविधिः।—

द्रवाधिका स्वल्पसिक्था चतुर्दशगुणे जले।
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चित् घनस्ततः ॥ १४४ ॥

---

इदानीं तस्या गुणमाह, यवागूरित्यादि।—ग्राहिणी सङ्ग्राहिका अतीसारादीनाम्। बल्या बलकारिणी, ओजोवृद्धिकरीत्यर्थः। तर्पणी धातूनां तृप्तिजननी। वातनाशिनी चेति स्वभावात् ॥ १४२ ॥

अथ विलेपीविवरणं दर्शयन्नाह, विलेपीति।—या चतुर्गुणे नीरे पानीये सिद्धा निष्पन्ना सा विलेपीशब्दवाच्या, स्वरूपेण घनसिक्था भवति चतुर्गुणनीरत्वात्। चतुर्गुणमिति अत्र अन्नपरिमाणात्। इयमप्यत्र केवलं तण्डुलैः सिद्धेति रूढिः; असौ "गुलहणी" इति लोके कथिता। गुणमप्यस्या दर्शयन्नाह, तर्पणीत्यादि।—तर्पणी तृप्तिजनिका। हृद्या इति—आह्लादकारिणी। मधुरा मिष्टरसा, अत एव पित्तनाशिनी विहिता ॥ १४३ ॥

इदानीं पेयायूषावप्याह, द्रवाधिकेति।—या चतुर्दशगुणे जले सिद्धा भवति सा पेया ज्ञेया, स्वरूपेण च सा द्रवाधिका स्वल्पसिक्था। केचित् स भक्तमण्ड इति वदन्ति, मण्डस्तु सिक्थरहित इति प्रसिद्धः; तथा हि—"यवागूः षड्गुणे तोये संसिद्धा विरलद्रवा। चतुर्गुणाम्बुसंसिद्धा विलेपी घनसिक्थका ॥ पेया सिक्थान्विता तोये चतुर्दशगुणे कृता। मण्डश्चतुर्दशगुणे सिद्धस्तोये त्वसिक्थकः ॥" इति। यूषमप्याह—तत इति—तस्मात् पेयारूपद्रव्यात् यः किञ्चित् घनः सान्द्रो भवति स यूष इत्युच्यते। एष यूषः केवलमुद्गैः कृत इति वदन्ति इति केचित्; यतो मुद्गरस इति लोके। अत्रापि चतुर्दशगुणं जलं देयम् अन्नपरिमाणात्। यूषः इति सामान्येन, अस्य बहवो भेदाः सन्ति, ते चाष्टादशगुणे जले साध्या इति तन्त्रान्तरीयमतम्; तथा हि—"स्वाचितः साधितो यूषस्त्वष्टादशगुणे जले" इति ॥ १४४ ॥

पेयायूषयोः गुणाः ।—

पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा ।
यूषो बल्यस्ततः कण्ठ्यो लघुपाकः कफापहः ॥ १४५ ॥

भक्तस्य साधनविधिः गुणश्च ।—

जले चतुर्दशगुणे तण्डुलानां चतुष्पलम् ।
विपचेत् स्रावयेन्मण्डं स भक्तो मधुरो लघुः ॥ १४६ ॥

गुणमनयोर्वक्तुमाह, पेया लघुतरेत्यादि ।—लघुतरा अत्यर्थं लघुपाका । ग्राहिणी ग्राहिका अतिसारादीनाम । ननु द्रवमन्नमतीसारे निषिद्धम् ; यदुक्तं—"वर्जयेद्दैदलं शूली कुष्ठी मांसं क्षयी स्त्रियम् । द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी ॥" तत् कथं पेया अतीसारे विहिता ? उच्यते, अविहितद्रवान्ननिषेधार्थं वाक्यमिदं, पेयायवाग्वादि विहितमेव ; तथा चोक्तं सुश्रुते—*"कार्य्यं चानशनस्यान्ते प्रद्रवं लघुभोजनम्" इति । अत्र प्रद्रवं प्रकृष्टद्रवं, लघु यवाग्वादि ।. तथैव निषिद्धाचरणं भोजेनाप्युक्तं—"वर्णोदरस्थापनपातितानां ( ? ) प्रमेहिणां कुर्य्यतीसारिणाञ्च । द्रवं न दद्याद्यथवाऽपि कोष्णं स्वल्पं हितं भेषजसम्प्रयुक्तम् ॥" इति । यूषोऽपि बल्यो बलकरः । कण्ठ्यः कण्ठहितः । पाके लघुः कफापहश्च ; अत एवात्र मुद्गयूषः कृताकृतश्च कथितः ; तथा हि—"कफघ्नो दीपनो हृद्यः शुद्धानां प्राणिनामपि । उक्तः पथ्यतमश्चापि मुद्गयूषः कृताकृतः ॥" इति ॥ १४५ ॥

इदानीं भक्तविधिमाह, जले इति ।—तण्डुलानां चतुष्पलं कुडवमितं ग्राह्यं, चतुर्दशगुणे पानीये विपाच्य तद्द्रवं पानीयोऽवशिष्टः (?) स भक्त इति प्रसिद्धः । गुणोऽपि रसे मधुरः, पाके लघुरिति । एतत्तण्डुलपरिमाणं परिस्रुतार्थम् । ननु तन्त्रान्तरे भक्तं पञ्चगुणे साध्यमिति ; तथा हि—"शृतं पञ्चगुणे भक्तं विलेपीति चतुर्गुणे" इति ; तत् कथं चतुर्दशगुणमत्र जलम् ? उच्यते—भक्तं द्विविधं सुधौत-प्रस्रुतम् अधौतास्रुतञ्च, यत् सुधौतप्रस्रुतं, तत्र चतुर्दशगुणे जलं साध्यम् ; अधौता-स्रुतञ्च पञ्चगुणे इति भावः ; तथा चोक्तं—"सुधौतप्रस्रुतं चोष्णं विशदं गुणवन्मतम् । अधौतमस्रुतं शीतं गुरु रुच्यं कफप्रदम् ॥" इति ॥ १४६ ॥

* मुद्रितसुश्रुतसंहितासु पाठोऽयं नोपलभ्यते ।

मण्डस्य साधनविधिः गुणश्च।—

नीरे चतुर्दशगुणे सिद्धो मण्डस्त्वसिक्थकः।
शुण्ठीसैन्धवसंयुक्तः पाचनो दीपनः स्मृतः॥ १४७॥

अष्टगुणमण्डस्य साधनविधिः गुणश्च।—

धान्यत्रिकटुसिन्धूत्थ-मुद्गतण्डुलयोजितः।
भृष्टश्च हिङ्गुतैलाभ्यां स मण्डोऽष्टगुणः स्मृतः॥ १४८॥
दीपनः प्राणदो बस्ति-शोधनो रक्तवर्द्धनः।
ज्वरजित् सर्वदोषघ्नो मण्डोऽष्टगुण उच्यते॥ १४९॥

---

अधुना शुद्धमण्डमाह, नीरे इति।—चतुर्दशगुणे नीरे तण्डुलपरिमाणात् सिद्धो निष्पन्नः, असिक्थक इति—सिक्थो भक्तावयवः तेन रहित इत्यर्थः, य ईदृशः मण्डसंज्ञया प्रसिद्धः। एष यदा शुण्ठीसैन्धवचूर्णेन प्रक्षिप्तस्तदा पाचन आमादीनां, दीपनो जठराग्नेश्च स्मृतः कथित इत्यर्थः। अयमभृष्टतण्डुलैर्जनितः, अत एव शुद्ध-मण्डोऽभिहितः; यतो मण्डस्तन्त्रान्तरे विविधो दर्शितः; तद्यथा—"मण्डस्तु विविधो ज्ञेय एकादिविपरिस्रुतः। लाजैर्भृष्टैरभृष्टैश्च तण्डुलैः परिसंस्कृतः॥ चतुस्त्रिंशद्गुणो भक्तात् पूर्वः पूर्वो लघुर्हितः॥" इति॥ १४७॥

अथाष्टगुणमण्डमाह, धान्येति।—धान्यादिभिर्द्रव्यैः संस्कृतो हिङ्गुतैलाभ्यां सह भृष्टो भर्जितः स मण्डोऽष्टगुणसंज्ञः कथितः। अत्र तण्डुलमुद्गयोर्दानमन्नप्रकरणा-दवगन्तव्यम्; तथा च तन्त्रान्तरे—"सुतण्डुलानां प्रसृतिद्वयञ्च तदर्द्धमुद्गाः कटुकत्रयञ्च। कुस्तुम्बुरीसैन्धवहिङ्गुतक्रैरेभिः समस्तैः क्रियते च मण्डः॥" इत्यादि। अत्र यत् शार्ङ्गधरेण तैलग्रहणं कृतं तत् भर्जनार्थं तण्डुलमुद्गयोः। अन्यत्राप्युक्तं—"तण्डुलैरर्द्ध-मुद्गाढ्यैः किञ्चिद्भृष्टैः सुपाचितः। हिङ्गुसिन्धूत्थधनिका-तक्रत्रिकटुसंस्कृतः॥ ज्ञेयः सोऽष्टगुणो मण्डो ज्वरदोषत्रयापहः॥" इत्यादि। केचित् कर्त्तव्यविधौ चास्य कटुकत्रयचूर्णं पश्चात् प्रक्षेपे मनाक् देयमिति वदन्ति। "स मण्डः" इति स्थाने "स भक्तः" इत्यपरे पठन्ति; तन्मते तु ईषत् सिक्थयुत इत्यर्थः। सङ्गतोऽयं पाठः। अष्टगुण इति यत् प्रोक्तं तानाह, दीपन इत्यादि।—दीपनमग्नेः। प्राणदो बलकरः। बस्तिशोधनो बस्तिशुद्धिकरः, बस्तिर्मूत्राधारः, अत एव मूत्रलो विख्यातः। रक्तवर्द्धन इति—शोणितवृद्धिकरः। ज्वरजित् सर्वज्वरहरः प्रभावात्। सर्वदोषघ्न इति—वातपित्तकफानां प्रत्येकं हन्ता, न तु सन्निपातज्वरहरः अष्टसंज्ञत्वात्; तथा च

वाट्यमण्डस्य साधनविधिः गुणाश्च।—

सुकण्डितैस्तथा भृष्टैर्वाट्यमण्डो यवैर्भवेत्।
कफपित्तहरः कण्ठ्यो रक्तपित्तप्रसादनः ॥१५०॥

लाजमण्डस्य साधनविधिः गुणाश्च।—

लाजैर्वा तण्डुलैर्भृष्टैर्लाजमण्डः प्रकीर्त्तितः।
श्लेष्मपित्तहरो ग्राही पिपासाज्वरजिन्मतः ॥ १५१ ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां
शार्ङ्गधरसंहितायां चिकित्सास्थाने क्वाथ-
कल्पना नाम द्वितीयोऽध्यायः ॥२॥

---

तन्त्रान्तरे—"सुद्बोधनो वस्तिविशोधनश्च प्राणप्रदो रक्तविवर्द्धनश्च। ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥" १४८।१४९ ॥

इदानीं वाट्यमण्डमाह, सुकण्डितैरिति।—अयं वाट्यमण्डो दलितयवगोधूमादिकृतो व्यक्त एव, तथाऽपि किञ्चिद्व्याचष्टे, सुकण्डितैरिति—मूषलादिभिरुदूखले सङ्कुट्टितैः, तुषवर्जितैरित्यर्थः। तथा भृष्टैरिति—भर्जितैः; तथेति दहनेन यथा न दग्धैरित्यर्थः। ईदृशैः यवैः, यवोऽन्नविशेषः; बहुवचनत्वेन गोधूमादयो ग्राह्याः। स च कफपित्तहरः कफहरः पित्तहरश्च, संयोगहरो वा। कण्ठ्य इति—कण्ठरोगेभ्यो हितः। रक्तपित्तप्रसादन इति—प्रकर्षेण सादयति इति प्रसादनः कुपितास्रपित्तशान्तिकर इत्यर्थः, न तु रक्तपित्तप्रवृद्धिकरः; तथा हि—"वाट्यमण्डो लघुर्ग्राही शूलानाहास्रपित्तजित्" इति। केचिदिति व्याख्यानयन्ति—प्रकुपितं रक्तपित्तं निर्मलं करोति स्वप्रकृतिस्थितं करोतीत्यर्थः। अपरे "रक्तपित्तनिसूदनः" इति पठन्ति, तत् व्यक्तम् ॥ १५० ॥

अथ लाजमण्डमाह, लाजैरिति।—भृष्टशालिभवा लाजा इत्युच्यन्ते, तैः कृता यः साधितः स लाजमण्डः कथितः। साधनमत्र पूर्ववत् ज्ञातव्यम्। अथवा भृष्टैस्तण्डुलैश्च कृतो यः सोऽपि लाजमण्डसंज्ञितः। अथ गुणमाह, श्लेष्मपित्तहरः इत्यादि।—श्लेष्महरः पित्तहरश्च। ग्राही सङ्ग्राहकः। पिपासाज्वरजिन्मत इति—पिपासा पातुमिच्छा, ज्वर इति सामान्यग्रहणेनाष्टधा। अत्र लाजादीनां परिमाणं

# तृतीयोऽध्यायः ।

## फाण्टकल्पना ।—

### फाण्टस्य साधनविधिः मात्राविधिश्च ।—

क्षुण्णे द्रव्यपले सम्यक् जलमुष्णं विनिक्षिपेत् ।
मृत्पात्रे कुड़वोन्मानं ततस्तु स्रावयेत् पटात् ॥ १ ॥
तस्य चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम् ।
सितामधुगुड़ादींश्च क्वाथवत्तत्र निक्षिपेत् ॥ २ ॥

स यथा—

---

पूर्वमण्डवज्ज्ञातव्यम् । ननु यद्येवं तर्हि किमसौ पृथक् दर्शितः ? उच्यते—लाजमण्ड-संज्ञादिज्ञापनार्थं पृथगुक्तं, न दोषः ॥ १५१ ॥

इति श्रीवाक्यान्वयप्रकाशवैद्य-श्रीभावसिंहात्मजेनाढमल्लेन विरचितायां
शार्ङ्गधरदीपिकायां मध्यखण्डे चिकित्सितस्थाने
क्वाथकल्पना नाम द्वितीयोऽध्यायः ॥२॥

---

इदानीं फाण्टकल्पनां दर्शयितुमाह, क्षुण्णे द्रव्येति ।—अनेन फाण्टपरिभाषा अभिहिता। क्षुण्णे द्रव्यपले इति—सम्यक् क्षुण्णे अत्यन्तकुट्टिते, चूर्णसदृशे इत्यर्थः, उष्णमिति—अर्द्धविशोषितं, क्वथितमात्रमिति केचित्; विनिक्षिपेत् विशेषेण क्षिपेदिति यद्वचनेन द्रव्यस्य परिमाणादिकं सूचितम्; एतेनोक्तपरिमितं द्रव्यं जले निर्मथ्य विस्राव्यमित्यर्थः। तस्य द्रवरूपफाण्टस्य पर्यायवाचकशब्दश्चूर्णद्रवः प्रोक्तः। तन्मानमिति—पानार्थम्। अथ तत्प्रक्षेपार्थं द्रव्याण्याह, सितेत्यादि।—अत्र आदिशब्दात् क्षीरघृततैलमूत्रलवणक्षारहिङ्गुत्रिकटुकप्रभृतयो गृह्यन्ते, एतेषां प्रक्षेपमात्रं क्वाथवज्ज्ञातव्यम् ॥ १।२ ॥

वातपित्तज्वरे मधूकपुष्पादिः।—

* मधूकपुष्पं मधुकं चन्दनं सपरूषकम्।
मृणालं कमलं लोध्रं गाम्भारी नागकेशरम् ॥ ३ ॥
त्रिफला-सारिवा-द्राक्षा-लाजान् कोष्णजले क्षिपेत्।
सितामधुयुतः पेयः फाण्टो वाऽसौ हिमोऽथवा ॥४॥
वातपित्तज्वरं दाहं तृष्णामूर्च्छाऽरतिभ्रमान्।
रक्तपित्तं मदं हन्यान्नात्र कार्य्या विचारणा ॥ ५ ॥

---

स यथेत्यनेन तद्दर्शयति ग्रन्थकारः। इदानीं विवरणमस्माभिरपि लिख्यते, मधूकपुष्पमिति।—अथ मधूकपुष्पादिः फाण्टसंज्ञः हिमसंज्ञो वा कल्पनाद्वयभेदात्। अत्र मधूको वृक्षविशेषः, तस्य पुष्पाणि। मधुकं मधुयष्टी। चन्दनमत्र रक्तम्। परूषकमिति—फलविशेषः, "फलसा" इति लोके। † मृणालं कमलनालं, "भसीड" इति लोके। कमलं पुष्पविशेषः विख्यातः, तदभावे पद्मबीजमिति सर्वत्र। गाम्भारीति—गाम्भारीफलम्। त्रिफला इति—हरीतक्यादिकम्। ‡ सारिवा आस्फोता, "आस्फोई" इति शब्दवाच्या। लाजानिति—भृष्टधान्योद्भवान्; एतत् सर्वं समभागेन पलैकं ग्राह्यम्; समताऽत्रानुक्तत्वात्। कोष्ण इति—ईषदुष्णः। सिता मधु प्रक्षेपे प्रशस्तम्। हिमोऽपि परतो यदपेक्षमाणोऽस्तीति। अरतिरसौख्यम्। भ्रमश्चक्रारूढस्येव। मदं दुष्टपूगधुस्तूरकोद्रवादिजनितम्। अत्र विचारणा न कार्य्येति यत् ग्रहणं, तत् "अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः" इति वाक्यानुरोधात्; तथा चोक्तं—"नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन। सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत ॥" (सु० सू० ४०अ०) इति। अत एव वृद्धवैद्यव्यवहारेणानुसर्त्तव्य इति जनश्रुतिरित्यर्थः। केचित् प्रत्येकद्वितीयान्तद्रव्यग्रहणेन व्यस्तयोगानपि प्रशंसन्ति, एतदपि मनोहरं न दोषः, "नात्र कार्य्या विचारणा" इति वचनात् ॥ ३—५ ॥

---

* चक्रोक्तेनानेन योगेन सह अस्य किञ्चित् वैषम्यं दृश्यते, तत्र नीलोत्पलं सारिवाद्वयं पद्मकेशरं तथा तण्डुलोदकेन सह हिमकषायः कर्त्तव्य इति पाठः। अत्र कमलं नागकेशरं सारिवा तथा उष्णजलेन सह फाण्टो हिमो वा कर्त्तव्य इति।

† मृणालशब्देन उशीरम् इति व्याचष्टे शिवदासः।

‡ सारिवा अनन्तमूलं श्यामालता वा इति सर्वत्र दृश्यते। गूढार्थदीपिकाकारेणापि अनन्तमूलमित्येव व्याख्यातम्।

पित्तज्वरे आम्रादिः ।—

आम्रजम्बूकिसलयैर्वटशुङ्गप्ररोहकैः ।
उशीरेण कृतः फाण्टः सक्षौद्रो ज्वरनाशनः ॥
पिपासाच्छर्द्यतीसारान् मूर्च्छां जयति दुस्तराम् ॥६॥

दाहतृषादौ मधुकपुष्पादिः ।—

मधूकपुष्पगाम्भारी-चन्दनोशीरधान्यकैः ।
द्राक्षया च कृतः फाण्टः शीतः शर्करया युतः ॥
तृष्णापित्तहरः प्रोक्तो दाहमूर्च्छाभ्रमान् जयेत् ॥ ७ ॥

फाण्टभेदमन्थस्य साधनविधिः मात्रा च ।—

मन्थोऽपि फाण्टभेदः स्यात्तेन चात्रैव कथ्यते ।
जले चतुःपले शीते क्षुण्णं द्रव्यपलं क्षिपेत् ॥
मृत्पात्रे मन्थयेत् सम्यक् तस्माच्च द्विपलं पिबेत् ॥८॥

अथाम्रादिफाण्टमाह, आम्रजम्बूकिसलयैरिति ।—आम्रकिसलयैर्जम्बूकिसलयैश्च, किसलयं कोमलपत्रम्। वटशुङ्गप्ररोहकैरिति—वटवृक्षस्य * शुङ्गानि कोमलपल्लवानि, प्ररोहका वटावरोहाः, "बरोहा" इति लोके। उशीरस्तृणभेदः सुगन्धाढ्यः प्रसिद्धः। कर्त्तव्यताऽस्य पूर्ववत्। क्षौद्रमत्र प्रक्षेपे। दुस्तरामिति—अनिवार्य्याम् ॥ ६ ॥

इदानीं मधुमधूकपुष्पादिफाण्टं दर्शयन्नाह, मधूकपुष्पेति।—मधूकपुष्पं विख्यातं, "महुया" शब्दवाच्यम्। गाम्भारी काश्मरी, तस्याः फलानि। चन्दनमत्र रक्तचन्दनम्। उशीरं प्रसिद्धम्। धान्यकं कुस्तुम्बुरी। द्राक्षा फलोत्तमा। शीत इति स्पष्टार्थ; यद्वा—शीतो हिमकषायोऽयं कर्त्तव्यः, पूर्ववाक्यानुरोधात्। शर्करा चात्र प्रक्षेपे। तृष्णाहरः पित्तहरश्च, पित्तं प्रकुपितम् ॥ ७ ॥

इदानीं मन्थविधिमाह, मन्थ इति।—यतोऽयं मन्थः फाण्टस्य भेदो दर्शितः तद्वेदिभिः, तेन कारणेनात्र कल्पनया कथ्यते, आचार्य्येणेति शेषः। शीते जले इति ग्रहणेनैव फाण्टाद्भिन्नोऽयं कथितः। "जले चतुःपले" इत्यादिकोऽयं श्लोकः प्रक्षेपक इति वदन्ति केचित्, यतो बहुषु पुस्तकेषु न दृश्यते। जलमानन्तु द्रव्यानुमानतो बोद्धव्यं, यथा वक्ष्यमाणे शक्तुमन्थके ॥ ८ ॥

* शुङ्गम् अविकसितपत्रमुकुलम् इति शिवदासः।

स यथा—

मदात्यये खर्जूरादि:।—

खर्जूरदाडिमीद्राक्षा-तिन्तिडीकाम्लिकाऽऽमलै:।
सपरूषै: कृतो मन्थ: सर्वमद्यविकारनुत् ॥ ९ ॥

छर्द्यां मसूरप्रयोग:।—

क्षौद्रयुक्ता मसूराणां सक्तवो दाडिमाम्भसा।
मथिता वारयन्त्याशु छर्दिं दोषत्रयोद्भवाम् ॥ १० ॥

तृष्णादौ यवप्रयोग:।—

प्लावितै: शीतनीरेण सघृतैर्यवशक्तुभि:।
नातिसान्द्रद्रवैर्मन्थस्तृष्णादाहास्रपित्तहा ॥ ११ ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण विरचितायां
शार्ङ्गधरसंहितायां मध्यखण्डे चिकित्सितस्थाने
क्वाथादिकल्पना नाम तृतीयोऽध्याय: ॥३॥

---

स यथेति मन्थसूचकं वाक्यमिदम, अतस्तं दर्शयन्नाह, खर्जूरेति।—अत्र खर्जूरादीनां फलानि ग्राह्याणि। खर्जूरो वृहत् खर्जूरिका, तस्य फलानि, 'छतती' इति लोके। दाडिमी दाडिमीफलम्। तिन्तिडीकं विटपिविशेष:, तस्य फलानि अम्लानि भवन्ति। अम्लिका चिञ्चा, तस्या: फलानि प्रसिद्धानि। आमलमामलक-फलम्। परूषकं "फलुसा"शब्दवाच्यं ह्रस्वविटपं, तस्यापि फलै:, कृत इति—एषां परिपक्वफलै: संस्कारित इत्यर्थ:। सर्वं मद्यं दृष्टपूगकोद्रवारिष्टादिकं तज्जनितं विकारं मदात्ययादिकं, तं नाशयतीत्यर्थ:। एके चात्र शर्करां प्रक्षिपन्ति पानक-त्वात् ॥ ९ ॥

इदानीं मसूरादिमन्थविवरणमाह, क्षौद्रयुक्ता इति।—क्षौद्रयुक्ता मधुप्लाविता:। मसूरोऽन्नविशेष:, स च भर्जित: शक्तुनिमित्तत्वात्। दाडिमाम्भसा परिपक्वदाडिम-फलतोयेन मथिता निर्मथिता। दोषत्रयोद्भवामिति—व्यस्तां समस्तां वा ॥१०॥

अथ यवशक्तुमाह, प्लावितैरिति।—यवशक्तुभि: कृत्वा कृतो यो मन्थ: स तृष्णा-दाहास्रपित्तहा भवति। कीदृशै: ? शीतनीरेण शीतलपानीयेन प्लावितै: आलोडितै:। एके—"प्लावितै: शीतनीरेण" इत्यस्य स्थाने "प्लावितै: शर्करातोयै:" इति पठन्ति व्याख्यानयन्ति च। पुन: कीदृशै: ? सघृतै: उक्त(?)परिमाणघृतयुक्तै:। कथम्भूतै: ?

# चतुर्थोऽध्यायः ।

## हिमकल्पना ।—

शीतस्य साधनविधिः मात्राविधिश्च ।—

क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् ।
निशोषितं हिमः स स्यात्तथा शीतकषायकः ॥
तन्मानं फाण्टवज्ज्ञेयं सर्वत्रैवैष निश्चयः ॥ १ ॥

---

नातिसान्द्रद्रवैः नातिशयेन सान्द्रद्रवास्तैरिति, सान्द्रं कठिनं, द्रवं तोयसदृशम् ; तथा च तन्त्रान्तरे—"शक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः । नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥" इति । एके "नातिसान्द्रैर्द्रवैर्मन्थः" इति पठन्ति, तन्मते तु सान्द्रत्वं निषिद्धं द्रवत्वं प्रशस्तमिति ; तथा च मतान्तरे वाक्यद्वयमाह,— "गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्य्ययात्" । "न भक्तान्तरितान् न द्विः शक्तूनद्यान्न केवलान्" इति । द्रवेऽपि साफल्यमनुग्राहकेण दर्शयितुमाह, तत् यथा—"पीताः सन्तर्पणा हृद्याः सद्यो बलविवर्द्धनाः । वातातपाध्वव्यायाम-कर्षितानां श्रमापहाः ॥ मधुरा लघवः शीताः शक्तवो रक्तपित्तहाः ॥" इति । अयमपि शर्करादिसंयुक्तः कर्त्तव्यो व्यवहारात् ; उक्तञ्च—"शर्करेक्षुमधुद्राक्षा-युक्तः पित्त-विकारनुत् । द्राक्षामधुसमायुक्तः कफरोगहरः स्मृतः ॥ वर्गत्रयेणोपहितो मलदोषानु-लोमनः ॥" इति ॥ ११ ॥

इति श्रीवात्स्यान्वयप्रकाशवैद्य-श्रीभावसिंहात्मजेनाढमल्लेन विरचितायां
शार्ङ्गधरदीपिकायां मध्यखण्डे चिकित्सितस्थाने
फाण्टकल्पना नाम तृतीयोऽध्यायः ॥ ३ ॥

---

अथ हिमकल्पना निदर्शयन्नाह, क्षुण्णमिति ।—अयं हिमकषायोऽनया परिभाषया प्रथितो भवति, कथम् ? यथा—क्षुण्णं सम्यक् कुट्टितम् । षड्भिर्नीरपलैः इति—द्रव्यपरिमाणात् । निशोषितमिति—सकलनिशायामध्युषितं, तेन प्रातः संस्राव्य द्रवं ग्राह्यमित्यर्थः । एतस्य पर्य्यायनाम्ना शीतकषायः कथितः । तन्मानं फाण्टवत् ज्ञेयमिति

स यथा—

रक्तपित्ते आम्रादिः।—

आम्र-जम्बू च ककुभं चूर्णीकृत्य जले क्षिपेत्।
हिमं तस्य पिबेत् प्रातः सक्षौद्रं रक्तपित्तजित्॥ २॥

तृष्णादौ मरिचादिः।—

मरिचं मधुयष्टी च काकोडुम्बरपल्लवाः।
नीलोत्पलं हिमस्तज्जस्तृष्णाच्छर्दिनिवारणः॥ ३॥

वातपित्तज्वरे नीलोत्पलादिः।—

नीलोत्पलं बला द्राक्षा मधूकं मधुकं तथा।
उशीरं पद्मकञ्चैव काश्मरी च परूषकम्॥ ४॥
एष शीतकषायस्तु वातपित्तज्वरान् जयेत्।
सप्रलापभ्रमच्छर्दि-मोहतृष्णानिवारणः॥ ५॥

---

—तस्य परिमाणं पानार्थं फाण्टवत् ज्ञातव्यम्। मानग्रहणेनापि प्रक्षेपादयोऽपि फाण्टवत् ज्ञातव्याः। एष निश्चयः सर्वत्रैव नान्यत्॥ १॥

स यथेति वाक्येन हिमकषाययोगान् दर्शयति, आम्रेति।—तत्र यथा—अयम् आम्रादिकसंज्ञको हिमो मधुमिश्रितो रक्तपित्तनिवर्त्तकः। अत्र ककुभोऽर्जुनः, स च वृक्षविशेषः। आम्रादीनां त्वक्चूर्णमिति व्यवहारात्॥ २॥

अथ मरिचादिसंज्ञको हिमः कथ्यते, मरिचमिति।—अत्र काकोडुम्बरिका "कट्ग्वरी" शब्दवाच्या, "कट्वरी" शब्दवाच्या च, तस्य पत्राः। नीलोत्पलं नीलकमलं, तदभावे पद्मबीजमिति व्यवहारात्। तज्ज इति—मरिचादिद्रव्यैर्जातः। एके मरिचचूर्णं मनाक् प्रक्षेप्यमाहुः तीक्ष्णत्वात्॥ ३॥

अथ नीलोत्पलादिकं हिममाह, नीलोत्पलमिति।—नीलोत्पलमेव विख्यातं, तच्चेन्दीवरसंज्ञम्। बला प्रसिद्धा। मधूकं गुडपुष्प, लोके "महुआ" शब्दवाच्यम्। मधुकं यष्टीमधु। उशीरं तृणभेदः सुगन्धमूलम्। पद्मकं काष्ठविशेषः। काश्मरी गाम्भारी, तस्याः फलानि। परूषकं प्रसिद्धम्। शीतकषायो हिमकषायः कथितः। प्रलापोऽसम्बद्धभाषणम्। भ्रमश्चक्राढ़स्येवार्थसंवित्तिः। मोहो मूर्च्छाभेदः॥ ४।५॥

जीर्णज्वरे गुडूचीप्रयोगः।—

अमृताया हिमः पेयो जीर्णज्वरहरः स्मृतः ॥ ६ ॥

कासादौ वासाप्रयोगः।—

वासायाश्च हिमः कास-रक्तपित्तज्वरान् जयेत् ॥ ७ ॥

अन्तर्दाहादौ धन्याकप्रयोगः।—

प्रातः सशर्करः पेयो हिमो धन्याकसम्भवः।
अन्तर्दाहं तथा तृष्णां जयेत् स्रोतोविशोधनः ॥ ८ ॥

रक्तपित्तादौ धन्याकादिः।—

धन्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः।
रक्तपित्तज्वरं दाहं तृष्णां शोषञ्च नाशयेत् ॥ ९ ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण विरचितायां
शार्ङ्गधरसंहितायां मध्यखण्डे चिकित्सितस्थाने
हिमकल्पना नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

इदानीममृताटरूषकसंज्ञकौ हिमावाह, अमृताया इति।—अमृता गुडूची, अस्या वल्ली ग्राह्या। अत्रापरं मधु प्रक्षिपन्ति तन्त्रान्तरे दर्शनात्; तथा हि—"अमृतायाः कषायन्तु शीतं सम्यक् पलद्वयम्। मधुपादयुतं पीतं जीर्णज्वरहरं परम् ॥" इति। अपरश्च—वासा आटरूषकः, स चात्र पञ्चाङ्गो व्यवहारात् ॥ ६।७ ॥

प्रातरिति।—एष धन्याकहिमोऽन्तर्दाहादौ प्रशस्तः। धन्याकं कुस्तुम्बरु। स्रोतोविशोधन इति—मूत्रमार्गस्य शुद्धिकरः, मूत्रकृच्छ्रादिहर इत्यर्थः ॥ ८ ॥

धन्याकेति।—अयं धन्याकादिसंज्ञको हिमो रक्तपित्तादिकान् हन्तीति। अत्र धात्री आमलकीफलम्। वासा आटरूषकस्तस्या मूलं ग्राह्यम्। पर्पटः स्वनामख्यातः। एतत् सकलं समं तुलितं सङ्गृह्य हिमकषायः कर्त्तव्यः। अत्रापि शर्कराप्रक्षेपमाहुः पूर्वयोगानुसारात्। शोषं मुखशोषं, क्षयभेदं वा। एके योगद्वयमाहुः ॥ ९ ॥

इति श्रीवात्स्यान्वयप्रकाशवैद्य-श्रीभावसिंहात्मजेनाढमल्लेन विरचितायां
शार्ङ्गधरदीपिकायां मध्यखण्डे चिकित्सितस्थाने
हिमकल्पना नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः ।

## कल्ककल्पना ।—

कल्कस्य साधनविधिः पर्य्यायो मात्रा च ।—

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षेपाऽऽवापकल्कास्ते तन्मानं कर्षसम्मितम् ॥ १ ॥

कल्के प्रक्षेप्याणां मात्रा ।—

कल्के मधु घृतं तैलं देयं द्विगुणमात्रया ।
सितां गुड़ं समं दद्याद्द्रवा देयाश्चतुर्गुणाः ॥ २ ॥

स यथा—

अथेदानीं कल्ककल्पनां व्याख्यास्यामः, द्रव्यमित्यादि ।—द्वयमनेन प्रकारेण कल्कपरिभाषा कथ्यते । द्रव्यं व्याधिविहितम् । आर्द्रं सद्य उद्धृतम् । पक्षान्तर-कल्कविधौ शुष्कमपि द्रव्यं जलेन पिष्टं कल्कसंज्ञकं भवति । ते प्रक्षेपावापकल्का इति पर्य्यायवाचकशब्दैः कथिताः । तन्मानं कल्कपरिमाणं * कर्षमितं सार्द्धटङ्कद्वयम्, एतच्च भक्षणे मानमनुक्तानाम् ॥ १ ॥

अथात्र प्रक्षेपद्रव्याण्याह, कल्के मधु घृतमित्यादि ।—कल्के पूर्वोक्ते मधुघृततैलं द्विगुणमात्रया देयम् ; द्विगुणता कल्कादित्यर्थः । सितां गुड़ञ्च समं, समभागमपि कल्कात् । द्रवा इति—चर्वाम्बुजलक्षीराद्याश्चतुर्गुणा देयाः कल्कादपीत्यर्थः । कल्कः प्रक्षेपसंज्ञः प्रोक्तः, तस्मात् द्रवेषु प्रक्षेपको योज्य इति तात्पर्य्यार्थः । यथा अग्रे वक्ष्य-माणाः पिप्पलीवर्द्धमानादयो दृश्यन्ते ; अत एव कर्षपरिमाणं सामान्यं, विशेषतस्तु दोषाद्यनुरूपतः प्रमाणानि बोद्धव्यानि ॥ २ ॥

* "कर्षमितं सार्द्धटङ्कद्वयम्" इति यदुक्तं तत् प्रामादिकम् ; टङ्कशब्दो माषपर्य्यायः, टङ्कद्वयेन कोलो भवति, सार्द्धटङ्कद्वयेन माषद्वयाधिकं तोलकं, कर्षन्तु तोलकद्वयमिति सुधीभिर्विचार्य्यम् ।

पाण्डुरोगादौ पिप्पलीवर्द्धमानप्रयोगः।—

त्रिवृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्याऽथवा कणाः।
पिबेत् पिष्ट्वा दशदिनं तास्तथैवापकर्षयेत्॥ ३॥
एवं * विंशद्दिनैः सिद्धं पिप्पलीवर्द्धमानकम्।
अनेन पाण्डुवातास्र-कासश्वासारुचिज्वराः॥
उदरार्शःक्षयश्लेष्म-वाता नश्यन्त्यरोग्रहाः॥ ४॥

व्रणादौ निम्बपत्रप्रयोगः।—

लेपान्निम्बदलैः कल्को व्रणशोधनरोपणः।
भक्षणाच्छर्दिकुष्ठानि पित्तश्लेष्मकृमीन् जयेत्॥ ५॥

स यथेति वाक्येन तद्विधिं दर्शयति ग्रन्थकारः, त्रिवृद्ध्येत्यादिना।—अयं पिप्पली-वर्द्धमानप्रयोगो विधीयते। वृद्धिस्तु तावत् यावद्दशदिनमिति। तास्तथैवापकर्षयेदिति—ताः पिप्पल्यः, तथैवेति—वृद्धियुक्त्या अपकर्षयेत् ह्रासयेत्, यावद्दशदिनमिति। एवं विंशतिदिनैः कृत्वा पिप्पलीवर्द्धमानप्रयोगः सिद्धो भवति। एतेन किमुक्तं भवति? त्रिभिस्त्रिभिः परिवृद्धिः कृता यावद्दशदिनानि, वृद्धिस्तु प्रतिदिनमेव, ततस्तिस्र-स्तिस्रोऽपकर्षयेत् यावत् तिस्रः पिप्पल्य एव तिष्ठन्ति। एवं पञ्चवृद्धिरपकर्षश्च तथा सप्तवृद्धिरपकर्षश्च। अथवेति ग्रहणेन दशपिप्पलीनां वृद्धिरपकर्षश्च बोद्धव्यः, अन्यतो दर्शनात्; तद्यथा—"त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा दशभिरथ विवृद्धं पिप्पली-वर्द्धमानम्। इति पिबति पुमान् यस्तस्य न श्वासकास-ज्वरजठरगदार्शोवातरक्तक्षयाः स्युः॥" इति। पिष्ट्वा इत्यत्रापि क्षीरपिष्टा इति मन्यन्ते केचित्॥ ३।४॥

लेपादिति।—निम्बपत्राणि शिलापिष्टानि कृत्वा व्रणेषु लेपः कार्य्यः, पेषण-मत्र जलेन। लेपपरिमाणन्तु आर्द्रमाहिषचर्मोत्सेधम्; व्यवहारतस्तु व्रणानुकारि

* पिप्पलीवर्द्धमानस्य प्रयोग ऊनत्रिंशतिभिर्दिनैः सिध्यति इति चक्रपाणि-शिवदासादीनां मतं, यतः दशदिनं वर्द्धयित्वा एकादशदिनमारभ्य ह्रासकरणे ऊनविंशतिदिनान्येव भवन्ति। शार्ङ्गधरस्य "विंशद्दिनैः" इति पाठात् एकादशदिवसे-ऽपि दशमदिवसीयमात्रां स्थिरीकृत्य द्वादशदिवसमारभ्य ह्रासो मन्तव्यः। किञ्च यत्र पिप्पलीवर्द्धमाने सहस्रपिप्पलीप्रयोगः चरकादौ दृश्यते, तत्र दशवृद्धिप्रयोगः एव ऊनविंशतिदिनैः समाप्तो भवति, त्रि-पञ्च-षडादिवृद्धिप्रयोगास्तु तदधिकदिनेनापीति बोद्धव्यम्।

गृध्रस्यां महानिम्बप्रयोगः ।—

महानिम्बजटाकल्को गृध्रसीनाशनः स्मृतः ॥ ६ ॥

वातव्याधौ रसोनप्रयोगः ।—

शुद्धः कल्को रसोनस्य तिलतैलेन मिश्रितः ।
वातरोगान् जयेत्तीव्रान् विषमज्वरनाशनः ॥ ७ ॥

वातव्याधौ रसोनपिण्डः ।—

पक्वकन्दरसोनस्य गुलिका निस्तुषीकृताः ।
पाटयित्वा च मध्यस्थं दूरीकुर्य्यात्तदङ्कुरम् ॥ ८ ॥
तदुग्रगन्धनाशाय रात्रौ तक्रे विनिक्षिपेत् ।
अपनीय च तन्मध्याच्छिलायां पेषयेत्ततः ॥ ९ ॥
तन्मध्ये पञ्चमांशेन चूर्णमेषां विनिक्षिपेत् ।
सौवर्चलं यमानीञ्च भर्जितं हिङ्गु सैन्धवम् ॥ १० ॥

---

कुर्य्यात्, नात्र नियतप्रमाणम् । कार्य्यान्तरमाह, भक्षणादिति ।—निम्बपत्रकल्क-भक्षणादपि कुष्ठादयो विनश्यन्तीति प्रभावात् ॥ ५ ॥

अपरमपि योगमाह, महानिम्बेति ।—महानिम्बः कार्मुकः, "बकाइनि" इति लोके, तस्य जटा मूलम् । गृध्रसी वातरोगे पठिता, "राङ्गनी" इति लोके प्रसिद्धा ॥ ६ ॥

अन्यदप्याह, शुद्ध इति ।—रसोनः स्वनामख्यातः । शुद्ध इति—त्वगादि-रहितः । तिलतैलेन मिश्रित इति—रसोनकल्कात् द्विगुणितेन तिलतैलेन सम्प्लाव्य भक्षयेदित्यर्थः । वातरोगान् गृध्रस्यर्दितपक्षाघातप्रभृतीन् । तीव्रानिति—दुस्तरान् । विषमज्वराः सततकादयः ॥ ७ ॥

इदानीं द्वितीयरसोनकल्कं दर्शयितुमाह, पक्वेति ।—वृहत्संज्ञकोऽयं रसोन-कल्को यद्यपि सुगमत्वाऽपि केषाञ्चित् सुबोधार्थं किञ्चित् व्याचष्टे, पक्वकन्दरसोनस्ये-त्यादि ।—पक्वं कालान्तरेण परिणतम् । गुलिकाः कन्दस्यावयवविशेषाः, "पोथो" इति प्रसिद्धाख्याः । निस्तुषीकृता इति—त्वग्भिः सम्त्यक्ताः, पश्चात् पाटयित्वा द्विधा विदार्य्य । तदङ्कुरमिति—रसोनगुलिकामध्यस्थहरितवर्णाङ्कुरम् । तन्मध्या-दिति—तक्रमध्यात्, अपनीय समादायेत्यर्थः । अत्र रसोनकल्के वक्ष्यद्रव्याणां चूर्णं पञ्चमांशेन कृत्वा क्षिपेत्, पञ्चमांशमिति—रसोनकल्कात्, तेन रसोनकल्कं

कटुत्रिकं जीरकञ्च समभागानि चूर्णयेत्।
एकीकृत्य ततः सर्व्वं कल्कं कर्षप्रमाणतः॥ ११॥
खादेदग्निबलापेक्षी ऋतुदोषाद्यपेक्षया।
अनुपानं ततः कुर्य्यादेरण्डशृतमन्वहम्॥ १२॥
सर्व्वाङ्गैकाङ्गजं वातमर्द्दितञ्चापतन्त्रकम्।
अपस्मारमथोन्मादमूरुस्तम्भञ्च गृध्रसीम्॥
उरःपृष्ठकटीपार्श्व-कुक्षिपीडां क्रिमीन् जयेत्॥ १३॥

रसोनप्रयोगे अपथ्यानि।—

अजीर्णमातपं रोषमतिनीरं पयो गुडम्।
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम्॥ १४॥

---

भागचतुष्टयं, द्रव्यचूर्णं भागैकमिति। भर्जितं हिङ्गु अवीर्य्यक्लेदव्यवच्छेदार्थम्; तथा हि—"योगेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत्" इति। एवं सर्व्वत्र। कटुत्रिकं शुण्ठीमरिचपिप्पल्यः। कल्कं कर्षप्रमाणत इति—रसोनद्रव्यचूर्णमिलितं कल्कं, न तु केवलं कर्षप्रमाणम्, अत एव खादेदग्निबलापेक्षीति वचनेनात्र मात्राभावः सूचितः। एरण्डमूलक्वथितमत्रानुपानम्, उक्तपरिमाणं प्रत्यहमेव कुर्य्यात्। एकाङ्गजमिति—पक्षघातः। अपतन्त्रकं वातरोगे पठितलक्षणम्। पीडाशब्दः उरःप्रभृतिभिः प्रत्येकमभिसम्बद्धः, तेन उरःपीडा पृष्ठपीडा पार्श्वपीडा कटिपीडा कुक्षिपीडा इत्यर्थः। ननु सर्व्वाङ्गग्रहणेनैव सर्व्वे वातविकाराः प्राप्ताः, तत् कथं पृथक् ग्रहणम्? उच्यते—सर्व्वाङ्गेण सर्व्वशरीरप्रकुपितो वातोऽभिहितः, एकाङ्गेन अवयवाश्रितः, तस्मात् सर्व्वाङ्गप्रकुपितम् एकदेशप्रकुपितञ्चानिलं नाशयेदिति न दोषः॥ ८—१३॥

अस्य अपथ्यान्येव त्याज्यमाह, अजीर्णमित्यादि।—निरन्तरं सर्व्वकालम्। अजीर्णमन्नादिजनितम्। आतपञ्च घर्म्मसेवाम्। रोषं क्रोधम्। अतिनीरमत्यम्बुपानम्। *पयः क्षीरम्। गुडं प्रसिद्धम्। एतेन गुडोपलक्षितत्वात् सर्व्वेक्षुविकारास्त्याज्या इति वदन्ति॥ १४॥

* "पयो माहिषीपयः, तस्य वातकर्त्तृत्वात्, न गोपयः तस्य पथ्यवर्गे लिखितत्वात्" इति गूढार्थदीपिकापाठः न हृद्यतया प्रतिभाति, गोक्षीरमाधुर्य्यादिगुणसम्पन्नस्य माहिषीपयसः श्लेष्मकर्त्तृत्वात्।

रसोनप्रयोगे पथ्यानि।—

मद्यं मांसं तथाऽम्लञ्च रसं सेवेत नित्यशः॥ १५॥

ऊरुस्तम्भे पिप्पल्यादिः।—

पिप्पली पिप्पलीमूलं भल्लातकफलानि च।

एतत्कल्कञ्च सक्षौद्रं ऊरुस्तम्भनिवारणः॥ १६॥

परिणामशूले अपराजिताप्रयोगः।—

विष्णुक्रान्ताजटाकल्कं सिताक्षौद्रघृतैर्युतः।

परिणामभवं शूलं नाशयेत् सप्तभिर्दिनैः॥ १७॥

परिणामशूलादौ शुण्ठ्यादिः।—

शुण्ठीतिलगुड़ैः कल्को दुग्धेन सह योजयेत्।

परिणामभवं शूलमामवातञ्च नाशयेत्॥ १८॥

सेव्यमाह, मद्यमित्यादि।—मद्यं सुरासवप्रभृतिकम्। मांसं जाङ्गलिकं गुण-प्राधान्यात्। अम्लमम्लरसं, तच्च मातुलुङ्गादिकम्। रसं मांसजनितं प्रसङ्गमित्यर्थः (?)। नित्यशः प्रतिदिनम्॥ १५॥

इदानीमूरुस्तम्भे कल्कस्वरूपं योगमाह, पिप्पलीति।—एतेषां कल्क इति एत-त्कल्कः। पिप्पलीपिप्पलीमूले विख्याते। भल्लातकफलान्यत्र * निरस्थीनि योज्यानि। कुशाग्रेणा पिप्पल्यादीना क्वाथोऽपि प्रचरति; तथा हि—"पिप्पलीपिप्पलीमूल-भल्लातकशृतं पिबेत्। कल्को वा समधुर्देय ऊरुस्तम्भविनाशनः॥" इति॥ १६॥

परिणामशूलेऽपराजिताकल्कमाह, विष्णुक्रान्तेति।—विष्णुक्रान्ता अपराजिता प्रतीता, शतावरी वा। सितादयोऽप्यत्र पूर्वपरिमाणेन प्रक्षिप्ताः। सप्तदिनैरिति योगस्यास्य इष्टफलत्वं दर्शयति। परिणामशूलं पक्तिशूलं, तच्च शूलरोगे स्पष्टमेव॥१७॥

अपरमपि परिणामशूलाद्ये प्रयोगमाह, शुण्ठीति।—अत्रास्य कर्त्तव्यविधौ † शुण्ठीतिलाख्यः कल्कः कार्य्यः। गुड़मत्र द्वयोः सन्तुलितं, चतुर्गुणेन क्षीरेण सह

* भल्लातकानामस्थीन्यत्र सर्वत्र प्रयुज्यन्ते। शिवदासेनात्र किमपि न लिखितम्, अतो मतमस्य चिन्त्यम्।

† अत्र शिवदासव्याख्या—"नागरादिकल्कमुत्कारिकावत् यवागूवत् वा क्षीरेण साधयित्वा भक्षयेत्। शुण्ठीचूर्णं कर्षं १, पुरातनगुड़ं कर्षं १, तिलचूर्णं पल १, गव्यदुग्धं शराव २" इति।

रक्तार्शःसु अपामार्गप्रयोगः।—

अपामार्गस्य बीजानां कल्कस्तण्डुलवारिणा।
पीतो रक्तार्शसां नाशं कुरुते नात्र संशयः॥ १९॥

रक्तातीसारे बदर्य्यादिः।—

बदरीमूलकल्केन तिलकल्कश्च योजितः।
मधुक्षीरयुतः कुर्य्याद्रक्तातीसारनाशनः॥ २०॥

रक्तपित्तादौ लाक्षाप्रयोगः।—

कुष्माण्डकरसोपेतां लाक्षां कर्षद्वयं पिबेत्।
रक्तक्षयमुरोघातं क्षयरोगञ्च नाशयेत्॥ २१॥

---

सार्धयित्वा भक्षयेदिति भावः। अकारादयमपि सप्तदिनाभ्यन्तरे दृष्टफलः। उक्त-ञ्चान्यत्रापि—"नागरतिलगुडकल्कं पयसा संसाध्य यः पुमानश्नात्। क्षयं परिणति-शूलं तस्यापैति सप्तरात्रेण॥" इति॥ १८॥

अथ रक्तार्शसां प्रयोगं दर्शयन्नाह, अपामार्गस्येति।—अपामार्गः प्रसिद्धः। तण्डुलवारि तण्डुलक्षालनजलं, तच्च पुटपाके दर्शितम्, अनेन चतुर्गुणेनापामार्गस्य बीजानां कल्कः पेयः, न तु तेन मानेन पचितः, पेषणार्थन्तु परिमितं जलम्, एत-देव योज्यम्। नास्ति संशय इति—दृष्टफलत्वेनास्य प्रभावातिशयो वर्णितः॥१९॥

इदानीं रक्तातीसारे बदरीमूलकल्कमाह, बदरीमूलकल्केनेति तिलकल्कश्चेति।—कल्कद्वयग्रहणेन समं सम्मिश्रयित्वा कल्कः कार्य्य, इत्यस्मदीयसम्प्रदायः, तेन द्वयोः साम्येन कर्षैक,पेषणार्थं जलमवानुक्तत्वात,मधुक्षीरौ चौक्तपरिमाणेन प्रक्षेपे योज्यौ। केचिन्मधु क्षीरयुत इति पठन्ति, तत्र—क्षीरं छागोद्भवं व्याधिविहितत्वात्। अयमेव पक्षो व्यव-हारतो दृश्यते। गुणेनाप्युक्तम्—"छागं शोषज्वरश्वास-रक्तपित्तातीसारजित"इति॥२०॥

अथ रक्तपित्ते कुष्माण्डयोगमाह, कुष्माण्डकेति।—कुष्माण्डकः प्रसिद्धः, तस्य फलस्वरसेनैव * कर्षमात्रां लाक्षां पिष्ट्वा तेनैव चतुर्गुणेन सह पिबेत्। चतुर्गुणत्वादत्र पलमानम्, एष विधिः पानादिति वाक्ये दर्शितः। लाक्षाऽलक्तकस्य जननी। अत्रापि मधुप्रक्षेपं कुर्वन्ति वृद्धाः, कुतः? पूर्वयोगानुवृत्तेः॥ २१॥

---

* मूले "कर्षद्वयम्" इति पाठः, टीकायान्तु कर्षमात्रामिति। कर्षद्वयस्य चातुर्गुण्ये पलद्वयमानं भवति, कर्षस्य तु पलमानम् इति सुधीभिर्द्रष्टव्यम्।

रक्तप्रदरे तण्डुलीयप्रयोगः।—

तण्डुलीयजटाकल्कः सक्षौद्रः सरसाञ्जनः।
तण्डुलोदकसम्पीतो रक्तप्रदरनाशनः॥ २२॥

अतीसारादौ अङ्कोठप्रयोगः।—

अङ्कोठमूलकल्कश्च सक्षौद्रस्तण्डुलाम्बुना।
अतीसारहरः प्रोक्तस्तथा विषहरः स्मृतः॥ २३॥

विषे वन्ध्याकर्कोटकादिप्रयोगत्रयम्।—

वन्ध्याकर्कोटिकामूलं पाटलाया जटाऽथवा।
घृतेन बिल्वमूलं वा द्विविधं नाशयेद्विषम्॥ २४॥

सन्निपाते अभयादिः।—

अभयासैन्धवकणा-शुण्ठीकल्कस्त्रिदोषहा॥ २५॥

अग्निमान्द्यादौ पथ्यादिः।—

पथ्यासैन्धवशुण्ठीभिः कल्को दीपनपाचनः॥ २६॥

---

रक्तप्रदरेऽप्याह, तण्डुलीयेति।—तण्डुलीयः शाकविशेषः "चौराइ" इति भाषा-ख्यातः, तस्य जटा मूलम्। कल्पयताऽत्र—तण्डुलीयजटा रसाञ्जनञ्च माषेण कर्ष-परिमितं ग्राह्यं, तदनु जलेन सम्पिष्य मधुयुक्तश्चतुर्गुणेन तण्डुलजलेन सह पातव्यः। तण्डुलजलं पूर्वं व्याख्यातम्। रसाञ्जनं स्वनामख्यातं, तच्च दार्वीक्वाथसमुद्भवमिति प्रसिद्धम्। रक्तप्रदरः स्त्रीरोगे पठितः॥ २२॥

अथ विषहरणार्थं योगवरमाह, अङ्कोठमूलेति।—अङ्कोठो वृक्षविशेषस्तस्य मूलम्। क्षौद्रमत्र प्रक्षेपे साधु। तण्डुलाम्बुनेति चतुर्गुणेन, चतुर्गुणता च कल्क-द्रव्यात्। विषोऽत्र स्थावरः। विषनिमित्तन्तु जलेनैव पेय इति सम्प्रदायः॥२३॥

अपरमप्याह, वन्ध्येति।—एतत् योगत्रयं घृतेन सह पेयं, तच्च द्विविधं विषं नाशयति इति, द्विविधं स्थावरजङ्गमात्मकम्। केचित् वन्ध्याकर्कोटकीमूलकल्केन नस्यमाहुः; तथा हि—"वन्ध्याकर्कोटकीमूलं छागीमूत्रेण भावितम्। नस्यं काञ्जिक-सम्पिष्टं विषोपहतचेतसः॥" इति। एवं बिल्वमूलमञ्जनार्थम् इति वदन्त्यन्ये॥२४॥

अथैकेन श्लोकेन योगद्वयमाह, अभयेति।—अभयादीनां चतुर्णां समतुलितानां मिलित्वा कर्षेण कल्कस्त्रिदोषनिर्हरति। अभया हरीतकी। कणा पिप्पली। अपरः,

क्रिमिरोगे चित्रदादिः।—

चित्रत् पलाशबीजानि पारसीकयमानिका।
काम्पिल्लकं विडङ्गञ्च गुडश्च समभागिकम्॥
तक्रेण कल्कमेतेषां पिबेत् क्रिमिगणापहम्॥ २७॥

रक्तार्शःसु तिलप्रयोग-नागकेशरप्रयोगौ।—

नवनीततिलैः कल्को जेता रक्तार्शसां स्मृतः।
नवनीतसितानाग-केशरैश्चापि तद्विधः॥ २८॥

ग्रहण्यां शुण्ठ्यादि हृहतीप्रयोगश्च।—

पीतो मसूरयूषेण कल्कः शुण्ठीशलाटुजः।

—पथ्यादिभिः द्रव्यैः कल्को दीपनपाचनो भवति। अत्रापि समता द्रव्याणां, भक्षणमानन्तु पूर्ववत्। दीपनमग्नेः। पाचनमामादीनाम्॥ २५।२६॥

क्रिमिरोगे कल्कमाह, चित्रदिति।—चित्रदादीनां सगुडानां द्रव्याणां साम्येन मिलितानां कर्षप्रमाणेन कल्कं कृत्वा चतुर्गुणेन तक्रेण सह आलोड्य पिबेत्, एतच्च क्रिमिसमूहानुद्धरतीति। चित्रत् निःसृता। पलाशबीजानि प्रसिद्धानि। पारसीकयमानिकेति—पारस्यदेशभवा पारसी खुरासानिशब्दवाच्या। काम्पिल्लको रेचनकः, "कबीला" शब्देन विख्यातः। अयं योगः कोष्ठगतक्रिमिनाशनाय मुक्तः। एके चित्रदादीनां गुडः साम्य इति वदन्ति; तेन गुडस्यैको भागः शेषद्रव्याणां भागैकमित्यर्थः सत्यम्। तन्मते तु गुडं प्रथमतो भक्षयित्वा पश्चात् चित्रदादीनां कल्कं तक्रेण सह पिबेदिति। तथा च तन्त्रान्तरे प्रयोगान्तरमपि दृश्यते, तद्यथा—"पारसीकयमानी पीता पर्युषितवारिणा प्रातः। गुडपूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु॥" ॥२७॥

अथ रक्तार्शसामपि योगद्वयमाह, नवनीतेति।—अवोक्तपरिमाणेन तिलकल्को द्विगुणितेन नवनीतेन सम्प्लाव्य भक्ष्यः, असौ रक्तार्शसां जेता कथित इत्यर्थः। रक्तार्शसामिति बहुवचनत्वेनान्येषामप्यर्शसां प्रशमः। अपरोऽपि—नवनीतसितानागकेशरैश्च युक्त्या कल्कस्तद्विधोऽयं भवति। सिता शर्करा। तद्विध इति—रक्तार्शसां हन्ता इत्यर्थः। नवनीतत्यागेनापि योगोऽयं प्रचरति; तेन सिता नागकेशरयोः साम्येन माषाष्टकं भक्ष्यं प्रत्यहं प्रयोगात्॥ २८॥

अथ ग्रहण्यां योगद्वयं दर्शयन्नाह, पीत इति।—शुण्ठीशलाटुजः कल्क उक्तपरि-

जयेत् मङ्क्षु हणीं तद्वत्कल्केण ब्रहतीभवः ॥ २९ ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण विरचितायां शार्ङ्गधर-
संहितायां मध्यखण्डे चिकित्सितस्थाने कल्ककल्पना
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

# षष्ठोऽध्यायः ।

## चूर्णकल्पना ।—

चूर्णलक्षणं तस्य पर्य्यायो मात्रा च ।—

अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ।
तत् स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसम्मिता ॥ १ ॥

चूर्णे गुडादीनां द्रवाणाञ्च मात्रानिर्देशः ।—

चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत् ।

---

माषेण कृतश्चतुर्गुणेन मसूरयूषेण सह पिबेत् । शलाटु बिल्वफलम् । मसूरयूषविधिस्तु क्वाथकल्पनायां कथित एव । अपरोऽपि—बृहतीभवो बृहत्कण्टकारिकामूलकल्कः । अत्रापि चतुर्गुणं तक्रं कल्कात्ज्ञातव्यम् । तद्वदिति—ग्रहणीनाशकर. ॥ २९ ॥

इति श्रीभावसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां
मध्यखण्डे चिकित्सितस्थाने कल्ककल्पनाऽध्यायः पञ्चमः ॥ ५ ॥

इदानीं चूर्णकल्पनां व्याख्यास्यामः । प्रथमतस्तल्लक्षणमाह, अत्यन्तेति ।—अत्यन्तशुष्कमिति—सूर्य्यांशुभिः शोषितद्रव्यांशम् । यद्द्रव्यमिति—पुष्पफलपत्रत्वङ्मूल-निर्य्यासादिसंज्ञम । सुपिष्टमिति—अतिशयेन चूर्णितं, शिलायामिति शेषः । वस्त्रगालितं वस्त्रपूतम् । तत्तु चूर्णं रजः क्षोद इति पर्य्यायनामभ्यां संज्ञितम् । तन्मात्रेति—भक्षणार्थे मानं * कर्षसम्मिता ज्ञेया इत्यनुक्तप्रयोगेषु ॥ १ ॥

---

* "कर्षसम्मिता बलवांस्येत्, अल्पबले एकटङ्कात् वर्द्धयितव्या" इति गु० दी० ।

चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् ॥ २ ॥
लिह्याच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः।
पिबेच्चतुर्गुणैरेव चूर्णमालोड़ितं द्रवैः ॥ ३ ॥

दोषभेदेन अनुपानानां मात्रानिर्देशः।—

चूर्णावलेहगुटिका-कल्कानामनुपानकम्।
वातपित्तकफातङ्के त्रिद्व्येकपलमाहरेत् ॥ ४ ॥

अनुपानस्य गुणः।—

यथा तैलं जले क्षिप्तं क्षणेनैव प्रसर्पति।
अनुपानबलादङ्गे तथा सर्पति भेषजम् ॥ ५ ॥

---

इदानीमविशेषोक्तेषु शर्करागुड़योर्मानपूर्वकं प्रक्षेपविधिमाह, चूर्णे इति।—गुडमात्र्यं चूर्णांशात्। शर्कराऽपि द्विगुणिता चूर्णपरिमाणादित्यर्थः। चूर्णेष्विति बहुवचनत्वेन गुटिकालेहादिष्वपि भर्जितं हिङ्गु बोद्धव्यम्।* सर्वैरित्यतो घृताद्यैरिति यत् पुनर्ग्रहणं कृतं तत् तोयक्षीरमद्यमूत्रादीनां व्यवच्छेदार्थं, यत एतैः सह चूर्णस्य पानमुक्तमेतस्यार्थे, लेहस्तु मधुघृततैलादीनां प्रशस्तः। पिबेदित्यादौ चतुर्गुणता चूर्णभागात्। द्रवैरिति—तोयक्षीरमद्यमूत्रादिभिः ॥ २।३ ॥

अथ चूर्णादीनामनुपानमात्रां दर्शयन्नाह, चूर्णावलेहेति।—अनुपानकमिति—अनु पश्चात् पानम्, औषधभक्षणोपरि यत् पीतं तदनुपानकमित्यर्थः। "वातपित्त-कफातङ्के त्रिद्व्येकपलमाहरेत्" इत्यनुक्रमो ज्ञेयः। आतङ्को रोगः, तेन वातातङ्के त्रिपलं, पित्तातङ्के द्विपलं, कफातङ्के पलैकमिति तात्पर्यार्थः। अनुक्तेष्वनुपानेषु जलानुपानं प्रशस्तम्; तथा हि—"सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम्" (सु० सू० ४६ अ०) इति। सुश्रुतेऽपि—"सर्वानुपानेषु वरं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम्। लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्वरसाश्च दृष्टाः ॥" (सु० सू० ४६ अ०) इति ॥४॥

अथानुपानस्य प्रयोजनं निर्देष्टुमाह, यथेति।—भेषजं भिषजा संस्कृतं द्रव्यं तथा अङ्गे सर्पति, कुतः? अनुपानबलात् अनुपानशक्तितः। दृष्टान्तमाह, यथा तैलमित्यादि।—सुगमम् ॥ ५ ॥

*"सर्वैरित्यतः" इत्यत्र "सर्वैः द्रवैरित्युक्त्वाऽपि" इति पाठकल्पनमुचितम्।

भावनार्थं द्रवपरिमाणनिर्देशः।—

द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत्।
भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः॥ ६॥

स यथा—

सर्वविधज्वरे आमलकादि।—

आमलं चित्रकं पथ्या पिप्पली सैन्धवस्तथा।
चूर्णितोऽयं गणो ज्ञेयः सर्वज्वरविनाशनः॥ ७॥
* ( भेदी रुचिकरः श्लेष्म-जेता दीपनपाचनः॥ )

कासज्वरादौ पिप्पलीप्रयोगः।—

मधुना पिप्पलीचूर्णं लिहेत् कासज्वरापहम्।
हिक्काश्वासहरं कण्ठ्यं प्लीहघ्नं बालकोचितम्॥ ८॥

अथ चूर्णार्थं भावनापरिमाणमाह, द्रवेणेति।—सामान्येन सर्वं तोया-दिकम्, अन्यदपि यद्द्रवीकृतं तदपि ग्राह्यं न दोषः। प्लुतमिति—प्लावितं, यथा सन्यस्तरसस्तरूपस्तद्दिति। भिषग्वरैरित्यनेन युक्त्या कर्त्तव्य इति भावः॥ ६॥

स यथेत्यनेन चूर्णानि दर्शयति ग्रन्थकारः, आमलमिति।—आमलादिकोऽयं गणः सर्वज्वरविनाशनो भवति। आमलमिति—आमलफलम। पथ्या हरीतकी। एतत् सकलं साम्यमनुक्तत्वात्। सर्वज्वरमिति—अष्टविधं, व्यवहारतस्तु विषमज्वरेषु प्रायशः प्रचरति। भेदी रुचिकरः इत्यादिपदद्वयं केचित् पठन्ति॥ ७॥

मधुनेति।—अयं मधुपिप्पलीयोगः कासज्वरादीन् हन्ति, विशेषेण बाला-नामुचितः। बालकेति सामान्येन त्रैविध्यं सूचयति, तद्यथा—आ-षोडशात् बालः, स त्रिविधः, क्षीरपः, क्षीरान्नादः, अन्नाद इति॥ ८॥

* टीकाकृतोऽयं प्रक्षिप्त इति दीपिकाकारः।

मेहादौ त्रिफलाप्रयोगः।—

* एका हरीतकी योज्या द्वौ च योज्यौ विभीतकौ।
चत्वार्य्यामलकान्येवं त्रिफलैषा प्रकीर्त्तिता ॥ ९ ॥
त्रिफला मेहशोथघ्नी नाशयेद्विषमज्वरान्।
दीपनी श्लेष्मपित्तघ्नी कुष्ठहन्त्री रसायनी ॥
सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयान् जयेत् ॥ १० ॥

अग्निमान्द्यादौ त्रिकटुप्रयोगः।—

पिप्पली मरिचं शुण्ठी त्रिभिस्त्र्यूषणमुच्यते।

---

अथ त्रिफलाचूर्णमाह, एकेति।—उक्तपरिमाणेन मेहादिकान् हन्तीति। यदा सैव त्रिफला सर्पिर्मधुभ्यामवलीढा तदा नेत्रामयान् जयेदिति। अवलेहस्तु सायमुपयोज्यः; तथा ह्युक्तम्—"ऊर्द्ध्वजत्रुगरोगघ्नो सायं स्यादवलेहिका" इति। कीदृशमुक्तपरिमाणम्? तमाह, एका हरीतकीत्यादि।—एतत् गणनापरिमाणं त्रिफलायाः कथितं, न तु तुलनायां विषममानं, यतः गुडकसङ्ख्यामानेनैव समत्वमस्याः; कुतः? द्विकार्षिकी हरीतकीति वाक्यानुरोधात्; तथा हि—"नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता। हरीतक्याः फले यत्र द्वयं तत् श्रेष्ठमुच्यते ॥" इति। नवादिगुणोऽपि प्रसङ्गतो लिख्यते, यथा—"नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाऽम्भसि। निमज्जेत् या प्रशस्तत्वात् गुणकृत् सा प्रकीर्त्तिता ॥" इति। विभीतकमपि कर्षापर्य्यायनामभ्यां कथितमिति प्रसिद्धिः, उक्तं निघण्टौ—"विभीतकः कर्षफलो वासन्तोऽक्षः कलिद्रुमः" इति; तेन द्वे विभीतकफले कथिते। आमलकमपि कोलसंज्ञं वदन्ति, कोलस्त्वर्द्धकर्षस्य पर्य्यायनामेति, तेन चत्वार्य्यामलकानि भवन्ति; एतेन त्रिफलायास्तुलनासाम्यमपि दर्शितं, गणनायाश्च विषमत्वमिति, न तु तस्या भागेषु विषमता, यतो दृश्यते हि वृद्धवैद्यानां व्यवहारोऽयमेव। यद्यपि त्रिफला द्वितीयाऽप्यस्ति, तथाऽपि सर्व्वत्रैवाविशेषोक्तौ त्रिफलाशब्देन हरीतक्यादिकमेव गृह्यते; यदुक्तं—"द्राक्षाकाश्मर्य्यखर्ज्जूर-फलानीति फलत्रिका। इयं प्रोक्ता च द्वितीया त्रिफला चरकादिभिः ॥" इति ॥ ९।१० ॥

* "शार्ङ्गधरस्य उक्तभागवृद्ध्या लिखिता त्रिफला केवलं चूर्णकार्य्यविषया अनुपानगुणविषया च, अन्यथा नवायसचूर्णादौ विरोधः स्यात्, यतः केवलत्रिफला-क्वाथे चूर्णे च भागवृद्धिर्दृश्यते" इत्यादि गू० दी०।

दीपनं श्लेष्ममेदोघ्नं कुष्ठपीनसनाशनम् ॥
जयेदरोचकं सामं मेहगुल्मगलामयान् ॥ ११ ॥

अथ चव्यादौ पञ्चकोलम्।—

पिप्पलीचव्यविश्वाह्वा-पिप्पलीमूलचित्रकैः।
पञ्चकोलमिति ख्यातं रुच्यं दीपनपाचनम् ॥
आनाहप्लीहगुल्मघ्नं शूलश्लेष्मोदरापहम् ॥ १२ ॥

त्रिजातकचातुर्जातके।—

त्रिगन्धमेलात्वक्पत्रैश्चतुर्जातं सकेशरैः।
त्रिगन्धं सचतुर्जातं रूक्षोष्णं लघु पित्तकृत् ॥
वर्ण्यं रुचिकरं तीक्ष्णं विषश्लेष्मामयान् जयेत् ॥ १३ ॥

अथ त्र्यूषणचूर्णमाह, पिप्पलीति।—इदमपि त्रिकटुकपर्य्यायनाम्ना कथितम्। त्रयाणां साम्यमित्यनुक्तत्वात्। सामनिति—अरोचकं दोषं वा। मेहगुल्मगलामयानिति—मेहामयान् गुल्मामयान् गलामयान् ॥ ११ ॥

पञ्चकोलमप्याह, पिप्पलीति।—अत्र चव्यं गजपिप्पलीमूलम्। विश्वाह्वा शुण्ठी। पिप्पलीमूलं पिप्पलीजटा। चित्रकः स्वनामख्यातः। अत्रापि पञ्चानां समत्वम्। रुच्यं रुचिकरम्। दीपनमग्नेः। पाचनमामादीनाम्। आनाह उदराध्मानः। (ऊषकादिगणः,—"ऊषकं सैन्धवं हिङ्गु काशीशद्वयगुग्गुलुः। शिलाजतु तुत्थकञ्च ऊषकादिरुदाहृतः॥ ऊषकादिः कफं हन्ति गणो मेदोविशोधनः। अश्मरीशर्करामूत्रकृच्छ्रघ्नः कफगुल्मनुत ॥" इति। अयमपि पाठः क्वचित्) ॥ १२ ॥

इदानीं त्रिगन्ध-चातुर्जातकचूर्णमाह, त्रिगन्धमिति।—एलात्वक्पत्रैः कृत्वा त्रिगन्धं कथितम्। चातुर्जातन्तु सकेशरैरेलात्वक्पत्रैरेव प्रोक्तम्। * एला सूक्ष्मैला। त्वक् गुडत्वक्। पत्रं पत्रकम्। केशरं नागकेशरम्। रूक्षोष्णमिति वीर्य्यतः लघुपाकित्वात्। वर्ण्यं कान्तिकरम्। तीक्ष्णं मरिचादिवत् ॥ १३ ॥

* एलया सर्व्वत्रैव स्थूलैला गृह्यते वैद्यैः। त्रिजातचातुर्जातयोः स्थूलैलैव, न तु सूक्ष्मैला।

जीवनीयगणः।—

काकोली क्षीरकाकोली जीवकर्षभकौ तथा।
मेदा चान्या महामेदा जीवन्ती मधुकं तथा॥ १४॥
मुद्गपर्णी माषपर्णी जीवनीयो गणस्त्वयम्।
जीवनीयगणः स्वादुर्गर्भसन्धानकृद्गुरुः॥ १५॥
स्तन्यकृत् बृंहणो वृष्यः स्निग्धः शीतस्तृषापहः।
रक्तपित्तं क्षयं शोषं ज्वरदाहानिलान् जयेत्॥ १६॥

अष्टवर्गः।—

द्वे मेदे द्वे च काकोल्यौ जीवकर्षभकौ तथा। *

जीवनीयगणमाह, काकोल्यादि।—अत्र जीवनीयगणे काकोली क्षीरकाकोली च स्वनामतः प्रसिद्धा। किञ्चिदनयोर्ज्ञापनार्थं लक्षणमप्याह, तद्यथा—काकोली मधुरा चर्वणतः। क्षीरप्राया वर्णतः शुक्ला च क्षीरकाकोली अत्यन्तक्षीरयुक्ता। एतद्द्वयं विटपविशेषेण ( ? ) दक्षिणोत्तरेऽतीव प्रसिद्धम्। जीवकर्षभकाविति—जीवकस्य ऋषभकस्य तौ; जीवको मधुररसः कूर्चविटपः कूर्चशीर्षकः। ऋषभकोऽपि कूर्चकः सहस्रच्छिद्रो विषाणीति। एतद्द्वयमपि दक्षिणदेशे प्रचरति। मेदा चान्या महामेदा इति—मेदा स्वल्पपर्णी मेदोगन्धा अल्पवच्चसंज्ञकः, स च काष्ठविशेषो नखच्छेद्यो देशान्तरादवगन्तव्यः। महामेदाऽप्यच्छिद्रान्विता काष्ठविशेषः, स च दक्षिणोत्तरपथे पर्वतेषु प्रसिद्धः, तत्र देवमणिरिति प्रसिद्धः। जीवन्ती शाकविशेषः, सा चोत्तरापथे पर्वतेषु वन्दाकस्य शाखाऽस्ति तत्रैवोत्पद्यते। मधुकं मधुयष्टीति * जलजातवल्लीविशेषः, मधुरा अत्र गतः, असौ विख्याता सर्वत्रैव। मुद्गपर्णी माषपर्णी चेति द्रव्ययुग्मं निजनाम्ना प्रसिद्धं, मुद्गवत् पर्णं यस्याः सा मुद्गपर्णी, एवं माषपर्णीति। मुद्गपर्णीति—क्षुद्रा वनमुद्गा मार्जारमोटिनीति। माषपर्णी च कृष्णनाला हयपुच्छकाकारा पर्वतोद्भवा मधुरा च। एभिरयं जीवनीयगणसंज्ञः स्वादुर्मधुररसः। गर्भसन्धानकृदिति—वन्ध्यागर्भकरः प्रभावात्। स्तन्यकृदिति—क्षीरवृद्धिकरः। बृंहणो धातुवृद्धिकरः। वृष्यः शुक्रवृद्धिकरः॥ १४—१६॥

अष्टवर्गमप्याह, द्वे मेदे इति।—अमी गुणैः कृत्वा जीवनीयगणसाम्यः,

* यद्यपि स्थलज-जलजभेदेन मधुकद्वयं दृश्यते, तथाऽपि जीवनीयगणोक्त-मधुकशब्देन वैद्याः स्थलजमेव गृह्णन्ति, न तु जलजम्।

ऋद्धिर्वृद्धी च तैः सर्वैरष्टवर्ग उदाहृतः ॥
अष्टवर्गो बुधैः प्रोक्तो जीवनीयसमो गुणैः ॥ १७ ॥

पञ्चलवणम्।—

सिन्धु सौवर्चलञ्चैव विड़ं सामुद्रकं गड़म्।
एकद्वित्रिचतुःपञ्च-लवणानि क्रमाद्विदुः ॥ *१८ ॥
तेषु मुख्यं सैन्धवं स्यादनुक्ते तत् प्रयोजयेत्।
सैन्धवाद्यं रोमकान्तं ज्ञेयं लवणपञ्चकम् ॥ १९ ॥
मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम्।
वीर्य्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् ॥ २० ॥

स चाष्टभिर्द्रव्यैर्मिलितः ; तद्यथा—"द्वे मेदे द्वे च काकोल्यौ जीवकर्षभकौ तथा। ऋद्धिश्च वृद्धिश्च द्वे—"। अत्र ऋद्धिवृद्धी तु नाम्ना प्रसिद्धे। तयोश्चिह्नमिति यस्य गृहे ऋद्धिवृद्धी स्तः तस्य वसुवृद्धिर्भवतीति प्रसिद्धिः। अयश्च सुश्रुतगणसङ्ग्रहे जीवनीयाष्टकसंज्ञः। चरकयोगे तत् पूर्वोक्तं जीवनीयदशकमिति ॥ १९ ॥

लवणपञ्चकमाह, सिन्ध्विति।—अयं लवणपञ्चकसंज्ञको गणः। सिन्धु सैन्धवं, तच्च सिन्धूद्भवमित्यर्थः। सौवर्चलं प्रसिद्धं, तदेव निर्गन्धं कालालवणमित्युच्यते। विड़ं कृत्रिमं, तच्च प्रसारणीकल्कभक्तलवणसंयोगादग्निदाहेन निर्वृत्तं विड़मिति ख्यातम्। सामुद्रकमिति—दक्षिणसमुद्रसमीपे भवं सामुद्रकं, तच्च गडलवणात्किञ्चित् विमलतरं ज्ञेयम्। गड़ं तच्च रोमकं, तच्च शाकम्भरीदेशोत्पन्नम्। एकद्वित्रिचतु-पञ्चेति लवणकमो व्यस्तसमस्तग्रहणार्थं सूचितः, यथा "द्वौ क्षारौ लवणत्रयम्" इत्यादिवचनात्। त्रिलवणं सैन्धवसौवर्चलविड़मित्यर्थः। एवमन्यदपि बोध्यम्। तेषु मुख्यं सैन्धवं स्यादित्यनेनानुक्तेऽप्येषु मुख्यं लवणं, तच्च सैन्धवं योज्यमिति भावः। ननु "सैन्धवाद्यं रोमकान्तं ज्ञेयं लवणपञ्चकम्" पुनः किमर्थं कृतम्? उच्यते, आदौ सैन्धवस्य अन्ते रोमकस्य च ग्रहणं तन्त्रान्तरेऽपि नियतं, मध्ये क्वचिद्विपरीतमिति ; तथा च सुश्रुते, * "सैन्धवसामुद्रविड़सौवर्चलरोमकाणि पञ्च मुख्यानि" इति मतद्वयाभिप्रायेण पुनर्ग्रहणं न दोषः। पूर्वमतन्तु चरके प्रतीतम्। मधुरं परिपाकात्। सुश्रुते तु यथापूर्वं स्वादूनि, स्वादुरस गुणः ; यतः रसेषु गुणसंज्ञा इति

* मुद्रितसुश्रुतसंहितायाम्—"सैन्धवसामुद्रविड़सौवर्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि—" इत्यादि पाठो दृश्यते।

क्षारद्वयम्।—

स्वर्जिका यावशूकश्च क्षारयुग्ममुदाहृतम्।
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥ २१ ॥
अन्ये क्षाराश्च गुल्मार्शो-ग्रहणीरुक्छिदः सराः।
पाचनाः कृमिपुंस्त्वघ्नाः शर्कराश्मरिनाशनाः ॥ २२ ॥

सर्वविधज्वरे सुदर्शनचूर्णम्।—

त्रिफला रजनीयुग्मं कण्टकारीयुगं शटी।
त्रिकटु ग्रन्थिकं मूर्वा गुडूची धन्वयासकः ॥ २३ ॥
कटुका पर्पटी मुस्तं त्रायमाणा च वालकम्।
निम्बः पुष्करमूलञ्च मधुयष्टी च वत्सकम् ॥ २४ ॥
यमानीन्द्रयवो भार्गी शिग्रुबीजं सुराष्ट्रकम्।
वचा त्वक् पद्मकोशीरं चन्दनातिविषाबलाः ॥ २५ ॥
शालपर्णी पृश्निपर्णी विडङ्गं तगरं तथा।

---

केचित्। अपरं तु लवणेषु मधुरत्वमणुरससंज्ञकमामनन्ति। सृष्टविण्मूत्रमिति—ससकम्। सूक्ष्ममिति—रोमकूपादिप्रवेशकत्वात्। तीक्ष्णं मरिचादिवत्॥ १८—२०॥

अथ क्षारयुग्मं दर्शयन्नाह, स्वर्जिकेति।—तत्र स्वर्जिका प्रसिद्धा, "साजी" शब्दवाच्या। यावशूको यवक्षारः। वह्निसमौ उष्णवीर्य्यत्वात्। यावशूकश्चेति चकारात् टङ्कणक्षारमपि क्षारत्रितयग्रहणयोग्यम्; यथा "क्षारत्रोणि रसेन्द्रशुद्ध-ममृतम्" इत्यादि वचनात्। अन्ये क्षाराश्चेति।—अन्येति—मुष्ककपाटलाऽपामार्ग-गोजिह्विकाकदलीसुधाप्रभृतयः। गुल्मार्शोग्रहणीरुक्छिदः इति—अत्र रुक्शब्दो गुल्मादिभिः प्रत्येकमभिसम्बध्यते, तेन गुल्मरुक् अर्शोरुक् ग्रहणीरुगिति। सराः स्रंसकाः। कृमिघ्नाः पुंस्त्वघ्नाश्च, पुंस्त्वं वीर्य्यम्॥ २१।२२॥

इदानीं सुदर्शनचूर्णं निदर्शयन्नाह, त्रिफलेति।—रजनीयुग्ममिति—हरिद्राद्वयम्। कण्टकारीयुगमिति—लघुकण्टकारी वृहत्कण्टकारी च। शटी कर्चूरभेदः। ग्रन्थिकं पिप्पलीमूलम्। मूर्वा चोरस्नायुः। त्रायमाणा स्वनामख्याता। वत्सकः कुटजः। शिग्रुबीजं शोभाञ्जनं, श्वेतमरिचमिति प्रसिद्धम्। सुराष्ट्रकं मृत्तिकाविशेषः, "फट्किरी" इति लोके। केचित् सुराष्ट्रकमित्यस्य स्थाने सदंष्ट्रकमिति पठन्ति, तत्र—सदंष्ट्रको

चित्रको देवदारु च चव्यं पत्रं पटोलजम् ॥ २६ ॥
जीवकर्षभकौ चैव लवङ्गं वंशलोचना ।
पुण्डरीकञ्च काकोली पत्रकं जातिपत्रकम् ॥ २७ ॥
तालीशपत्रञ्च तथा समभागानि चूर्णयेत् ।
सर्वचूर्णस्य चार्द्धांशं कैरातं निक्षिपेत् सुधीः ॥ २८ ॥
एतत् सुदर्शनं नाम चूर्णं दोषत्रयापहम् ।
ज्वरांश्च निखिलान् हन्यान्नात्र कार्य्या विचारणा ॥२९॥
पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान् विषमज्वरान् ।
सन्निपातोद्भवांश्चापि मानसानपि नाशयेत् ॥ ३० ॥
शीतज्वरैकाहिकादीन् मोहं तन्द्रां भ्रमं तृषाम् ।
श्वासं कासञ्च पाण्डुञ्च हृद्रोगं हन्ति कामलाम् ॥ ३१॥
त्रिकपृष्ठकटीजानु-पार्श्वशूलनिवारणम् ।
शीताम्बुना पिबेद्धीमान् सर्वज्वरनिवृत्तये ॥ ३२ ॥

---

गोक्षुरः। त्वक् वराङ्गकम् इति लोके। चन्दनं श्वेतम्। पद्मकं काष्ठविशेषः। शालपर्णी पृश्निपर्णी कण्टकद्वयशब्दवाच्यम्। तगरं स्वनामख्यातम्। पटोलपत्रम्। जीवकर्षभकौ स्वनाम्ना प्रसिद्धौ। पुण्डरीकं कमलम्। तालीशपत्रं प्रसिद्धम्। शेषं सुबोधम्। एतत् सकलं भागमात्रं गृहीत्वा चूर्णं कर्त्तव्यम्। कैरातो भूनिम्बः, तच्च समस्तचूर्णस्य द्वौ भागौ कैरातचूर्णस्य चैको भाग इति। केचित् सर्वचूर्णस्य चार्द्धांशमित्यनेन सर्वचूर्णस्यैको भागः भूनिम्बस्य भागैक इति व्याख्यानयन्ति। अपरे तु चार्द्धांशमित्यनेनार्द्धस्य अंशं चतुर्थांशं, तेन समानिति व्याख्यानयन्ति च। अंशश्चतुर्थांश इति प्रसिद्धः एतेनाष्टमांशं कैरातमित्यर्थः। एतद्व्याख्यानद्वयमसङ्गतं, कुतः? सर्वजना सम्मतत्वात्। दोषत्रयापहमिति—प्रकुपितदोषत्रयम्, व्यस्तं समस्तं वा। निखिलानिति—अष्टधा। ननु पृथग्द्वन्द्वागन्तुजांश्चेति यत् पुनर्ग्रहणं कृतं, तत् व्यर्थं, निखिलानित्यनेनैव लभ्यते? उच्यते—पौनरुक्त्यन्तु ज्वराणां यत् तदस्य ज्वरनाशकत्वे विशिष्टत्वं दर्शितम्, अत एव नात्र कार्य्यापि विचारणेति ग्रहणं कृतम्; यद्वा—सर्वज्वरेष्वयं प्रायशः प्रचरति नान्येषु, तेन पुनर्ज्वरग्रहणं कृतं न दोषः। ऐकाहिकादीनिति—आदिशब्दात् तृतीयकचातुर्थकादयः। शूलशब्दस्त्रिकादिकप्रत्येकमभिसम्बध्यते; तत्र

सुदर्शनं यथा चक्रं दानवानां विनाशनम्।
तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम् ॥ ३३ ॥

कासादौ त्रिफलादि।—

कासश्वासज्वरहरी त्रिफला पिप्पलीयुता।
चूर्णिता मधुना लीढा भेदिनी चाग्निबोधिनी ॥ ३४ ॥

कासादौ कट्फलादि।—

कट्फलं मुस्तकं तिक्ता शटी शृङ्गी च पौष्करम्।
चूर्णमेषाञ्च मधुना शृङ्गवेररसेन वा ॥ ३५ ॥
लेह्यं ज्वरहरं कण्ठ्यं कासश्वासारुचीर्जयेत्।
वायुशूलं तथा कुष्ठिं क्षयञ्चैव व्यपोहति ॥ ३६ ॥

कासादौ द्वितीयकट्फलादि।—

*( कट्फलं पौष्करं शृङ्गी मुस्ता त्रिकटुकं शटी।
समस्तान्येकशो वाऽपि सूक्ष्मचूर्णानि कारयेत् ॥

त्रिकं वातस्थानम्। यथा सुदर्शनं विष्णुचक्रं दानवविनाशनं भवति, तथा सर्वज्वराणामिदमपि नाशनं, तस्मात् सुदर्शनम् इति संज्ञा ॥ २३—३३ ॥

अथापराणि चूर्णान्याह, कासेति।—अत्र त्रिफला समतुलिता ग्राह्या। पिप्पलीयुतेति—पिप्पली एकद्रव्यभागापेक्षया। मधु यथावलेहयोग्यम्। चूर्णमानन्तु दोषबलापेक्षया ॥ ३४ ॥

कट्फलमिति।—अयं कट्फलादिसंज्ञकश्चूर्णगणः। तत्र तिक्ता कटुरोहिणी। शृङ्गी कर्कटाख्या। पौष्करं पुष्करमूलं, तदभावे कुष्ठं ग्राह्यम्। शृङ्गवेररसेनेति—आर्द्रकरसेन चतुर्गुणेन सह पानमुक्तं व्यवहारात्, न तु लेह्यम्। लेहनस्य मधुना द्विगुणेनेत्यर्थः। वायुशूलमिति—वातजनितशूलम्। एके "पायुशूलम्" इति पठन्ति, तत्र—गुदगतवातपीडामित्यर्थः। ननु वातादेव सकलशूलस्योपपत्तिरिति; अतः "न वातेन विना शूलम्" इत्यादिवचनं, तत् कथमत्र पृथक् वातशूलग्रहणम्? उच्यते—वायुशूलं वातप्रायशूलं, न पित्तकफादिप्रायं, यस्मात् "शूलान्यष्टौ बुधा जगुः" ( शा० पू० ७५० ) इति ॥ ३५।३६ ॥

* प्रक्षिप्तोऽयम्।

आर्द्रकस्वरसक्षौद्रैर्लिह्यात् कफविनाशनम्।
शूलानिलारुचिच्छर्दि-कासश्वासक्षयापहम्॥)

कासादौ तृतीयकट्फलादि।—

*(कट्फलं पौष्करं कृष्णा शृङ्गी च मधुना सह।
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्॥)

बालस्य कासादौ शृङ्ग्यादि।—

शृङ्गीं प्रतिविषां कृष्णां चूर्णितां मधुना लिहेत्।
शिशोः कासज्वरच्छर्दि-शान्त्यै वा केवलां विषाम्॥३७॥

बालस्य कासे यवक्षारादि।—

†(यवक्षारविषाशृङ्गी-मागधीपौष्करोद्भवम्।
चूर्णं क्षौद्रयुतं लीढं पञ्चकासान् जयेच्छिशोः॥)

आमातीसारे शुण्ठ्यादि।—

शुण्ठीप्रतिविषाहिङ्गु-मुस्ताकुटजचित्रकैः।
चूर्णमुष्णाम्बुना पीतमामातीसारनाशनम्॥ ३८॥

---

शृङ्गीमिति।—एतत् शृङ्ग्यादिचूर्णं बालरोगेऽतीव प्रशस्तम्। शृङ्गी कर्कटाख्या। प्रतिविषा शुक्लकन्दा। कृष्णा पिप्पली। वेत्यनेन योगान्तरमाह, केवलां विषामिति।—एकामतिविषां मधुना सहावलिह्य बालो ज्वरेभ्यो विमुक्तः स्यादित्यर्थः। तथा च तन्त्रान्तरे—"शृङ्गीं‡ सकृष्णाऽतिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम्। कासज्वरच्छर्दिभिरर्दितानां समाक्षिकाञ्चातिविषामथैकाम्॥" इति। बालानामतीसारेऽपि मुस्तान्वितोऽयं योगः प्रचरति। § चतुर्भद्रीति तत्र चौहर्षदिति शब्दवाच्यः। तथा हि—"घनकृष्णाऽरुणाशृङ्गी-चूर्णं क्षौद्रेण संयुतम्। शिशोर्ज्वरातिसारघ्नं कासं श्वासं वमिं जयेत्॥" इति॥ ३७॥

अतीसारे शुण्ठ्यादिचूर्णमाह, शुण्ठीति।—हिङ्गु चात्र भर्जितं देयम्। कुटज-

* प्रक्षिप्तोऽयम्।

† प्रक्षिप्तोऽयम्। चक्रदत्ते यवक्षारस्थाने धन्वयासयोगेनायं योगो दृश्यते, तथा च—"पौष्करातिविषाशृङ्गी-मागधीधन्वयासकैः" इत्यादि।

‡ "सकृष्णा" इत्यत्र "समुस्ता" इति पाठः चक्रसङ्ग्रहे।

§ योगोऽयं चक्रसङ्ग्रहे "बालचातुर्भद्रिका" इति नाम्ना पठितः।

आमातीसारे हरीतक्यादि।—

हरीतकी प्रतिविषा सिन्धु सौवर्चलं वचा।
हिङ्गु चेति कृतं चूर्णं पिबेदुष्णेन वारिणा ॥
आमातीसारशमनं ग्राहि चाग्निप्रबोधनम् ॥ ३९ ॥

अतीसारे लघुगङ्गाधरचूर्णम्।—

मुस्तमिन्द्रयवं बिल्वं लोध्रं मोचरसं तथा।
धातकीं चूर्णयेत्तक्र-गुडाभ्यां पाययेत् सुधीः ॥ ४० ॥
सर्वातीसारशमनं निरुणद्धि प्रवाहिकाम्।
लघुगङ्गाधरं नाम चूर्णं सङ्ग्राहकं परम् ॥ ४१ ॥

अतीसारे वृद्धगङ्गाधरचूर्णम्।—

मुस्तारलुकशुण्ठीभिर्धातकीलोध्रबालकैः।

---

मवेन्द्रयवं, पाचनत्वात्। उष्णाम्बुनेति—चतुर्गुणितोष्णपानीयेन सहालोड्य विलोड्य तु (?) फाण्टवद्गृह्य पिबेत्, चूर्णकल्पनायां कथितत्वात् ॥ ३८ ॥

अपरमप्याह, हरीतकीति।—सिन्धु सैन्धवम्। हिङ्गु चात्र भर्जितं देयम्। पानमानन्तु पूर्ववत्। अयं योगो ग्रहण्यामपि प्रशस्तः। एके हरीतकीत्यागेनापि योगमेनं कुर्वन्ति; तदुक्तमेव परिभाषाध्याये—"व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत् त्यजेत्" (शा० पू० १ अ०) इत्यादिवचनात् ॥ ३९ ॥

इदानीं गङ्गाधरसंज्ञकं चूर्णद्वयमाह, मुस्तमित्यादि।—एतल्लघुगङ्गाधरं नाम चूर्णं सङ्ग्राहकं परं विख्यातम्। अत्र बिल्वं बिल्वपेशिका। मोचरसः शाल्मलीनिर्यासः। धातकी धातकीकुसुमानि। अत्र तक्रोपलक्षितत्वात् मथितमपि ग्राह्यम्, अन्यत्र दर्शनात् "मथितगुडसम्प्रयुक्तम्" इति। ननु मथिततक्रयोः को भेदः? उच्यते, * "सजलं गोरसं घोलं मस्तु तस्यार्द्धवारिकम्। तक्रं विभागभिन्नन्तु केवलं मथितं स्मृतम् ॥" इति। कल्पना चास्य—मुस्तादिचूर्णं कार्षिकं मथितचतुर्गुणेन गुडकर्षेण च सह विमर्दितं पीतम्। पक्वातीसारे योगोऽयम् ॥ ४०।४१ ॥

---

* भावप्रकाशे—"ससरं निर्जलं घोलं मथितन्त्वसरोदकम्। तक्रं पादजलं प्रोक्तमुदश्वित्त्वर्द्धवारिकम् ॥" इति, तथा सुश्रुते "मन्थनादिपृथग्भूतस्नेहमर्द्धोदकञ्च यत्। नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे। यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥" इति पाठः।

बिल्वमोचरसाभ्याञ्च पाठेन्द्रयववत्सकैः ॥४२॥
आम्रबीजं प्रतिविषा लज्जालुरिति चूर्णितम्।
क्षौद्रतण्डुलपानीयैः पीतैर्याति प्रवाहिका ॥ ४३ ॥
सर्वातिसारग्रहणी प्रशमं याति वेगतः।
वृद्धगङ्गाधरं चूर्णं सरिद्वेगस्य रोधकम् ॥४४॥

अतीसारे अजमोदादिचूर्णम्।—

अजमोदा मोचरसं सशृङ्गवेरं सधातकीकुसुमम्।
गोदधिमथितयुक्तं गङ्गामपि वाहिनीं रुन्ध्यात् ॥४५॥

ग्रहण्यां मरिचादिचूर्णम्।—

तक्रेण यः पिबेन्नित्यं चूर्णं मरिचसम्भवम्।
चित्रसौवर्चलोपेतं ग्रहणी तस्य नश्यति ॥
उदरप्लीहमन्दाग्नि-गुल्मार्शोनाशनं भवेत् ॥४६॥

ग्रहण्यां कपित्थाष्टकचूर्णम्।—

अष्टौ भागाः कपित्थस्य षड्भागा शर्करा मता।
दाड़िमं तिन्तिड़ीकञ्च श्रीफलं धातकी तथा ॥ ४७ ॥
* अजमोदा पिप्पली च प्रत्येकं स्युस्त्रिभागिकाः।
मरिचं जीरकं धान्यं ग्रन्थिकं वालकं तथा ॥ ४८ ॥

---

अम्बर्ष्ठापि, मुस्तेति।—अरलुको वृक्षविशेषः स्वनामप्रसिद्धः। वत्सकः कुटजत्वक्। आम्रबीजमिति—आम्रफलास्थिमज्जा। लज्जालुर्विख्याता। अत्रापि द्विगुणितेन क्षौद्रेण विमृद्य चतुर्गुणेन तण्डुलजलेन पेयम्। सरिद्वेगस्य रोधकमिति—नदीप्रवाहावरोधकत्वेनोत्कृष्टप्रभावयुक्तम्, अत एव गङ्गाधरसंज्ञा ॥ ४२—४५ ॥

अथ ग्रहण्या प्रयोगमाह, तक्रेणेति।—इदं मरिचाद्यं नाम चूर्णं ग्रहण्यां प्रशस्तम्। मरिचचित्रकसौवर्चलं समचूर्णं शाणद्वयं चतुर्गुणेन तक्रेण सह पिबेत्। नित्यमित्यनेन सेव्यमिदं महारोगोपयुक्तत्वात् ॥ ४६ ॥

इदानीं कपित्थाष्टकं नाम चूर्णं दर्शयन्नाह, अष्टाविति।—दाड़िममत्राम्लम् "अनारदाना" शब्दवाच्यम्। तिन्तिड़ीकं स्वनामप्रसिद्धम्। अम्लफलमित्यन्ये।

* चक्रपाणिः "अजमोदा" स्थाने "विड्गम्" इति पठति।

सौवर्चलं यमानी च चातुर्जातं सचित्रकम्।
नागरञ्चैकभागाः स्युः प्रत्येकं सूक्ष्मचूर्णितम्॥ ४९॥
कपित्थाष्टकसंज्ञं स्याच्चूर्णमेतद्गलामयान्।
अतीसारं क्षयं गुल्मं ग्रहणीञ्च व्यपोहति॥ ५०॥

अथ चूर्णाद्दाडिमाष्टकम्।—

दाडिमी द्विपला ग्राह्या खण्डात् दशपलानि च।
त्रिगन्धस्य पलञ्चैकं त्रिकटु स्यात् पलत्रयम्॥ ५१॥
एतदेकीकृतं सर्वं चूर्णं स्यात् दाडिमाष्टकम्।
रुचिकृद्दीपनं कण्ठ्यं ग्राहि कासज्वरापहम्॥५२॥

---

श्रीफलं बिल्वम्। अत्रापि तिन्तिडीकस्थाने वृक्षाम्लमिति, धान्यकस्थाने च तिन्तिडीकमिति केचित्। चातुर्जातमिति—त्वक्पत्रैलं नागकेशरमित्यर्थः। कपित्थविधावपि कपित्थफलमष्टभागिकमेकद्रव्यभागापेक्षया, द्रव्यन्तु एकभागसंज्ञितम् (?)। शर्कराः षड्भागाः, दाडिमादीनि पिप्पलीपर्यन्तानि प्रत्येकं त्रिभागिकं, मरिचादि-नागरान्तं भागकं प्रत्येकमिति भावः। एतत् किमुक्तम्? कपित्थं कर्षाष्टकं, सिता षट्कर्षप्रमिता, दाडिमादिषट्द्रव्यमष्टादशकर्षमितं, मरिचादित्रयोदशद्रव्यं त्रयोदशकर्षमित्यर्थः। अस्य षाडवसंज्ञा तन्त्रान्तरे, कुतः? "लवणाम्लसितायुक्तं चूर्णं स्यात् षाडवं मतम्" इत्यादिवचनात्। कपित्थाष्टकसंज्ञाऽस्य रूढिः॥ ४९—५०॥

दाडिमीति।—अयं लघुगुरुभेदेन दाडिमाष्टकसंज्ञको योगोऽतीसारादीनां प्रशमनः। खण्डाद्दशपलानीति—सम्मिलितचूर्णात् पलद्वयन्यूना द्विगुणा शर्करा देया-ऽतोच्चत्वात्। त्रिगन्धस्य पलमेकं मिलितमित्यर्थः। त्र्यूषणस्यापि पलत्रयं प्रत्येकं पलमित्यर्थः। "खण्डाद्दशपलानि च" इत्यत्र स्थाने "खण्डादष्टपलानि च" इति केचित् पठन्ति, तन्मते चूर्णसमं खण्डमिति व्याधिविहितत्वात्, अयं पक्षः प्रचरति। भाव्यार्थे त्रिगन्धस्य प्रत्येकं पलं ग्राह्यम्। * दाडिमाष्टकमिति—अष्टमं द्रव्यमत्र दाडिमं, तेन दाडिमाष्टकं प्रोक्तम्॥ ५१।५२॥

* दाडिमादीनि अष्टौ द्रव्याणि अत्र विद्यन्ते, तेनैवास्य दाडिमाष्टकसंज्ञा; गूढार्थदीपिकायामपि इयमेव व्याख्या दृश्यते, यथा—"दाडिमादीनि अष्टौ द्रव्याणि यत्र तत् दाडिमाष्टकम्" इति।



अतीसारादौ वृहद्दाडिमाष्टकम्।—

दाड़िमस्य पलान्यष्टौ शर्करायाः पलाष्टकम्।
पिप्पली पिप्पलीमूलं यमानी मरिचं तथा ॥ ५३ ॥
धान्यकं जीरकं शुण्ठी प्रत्येकं पलसम्मितम्।
कर्षमात्रा तुगाक्षीरी त्वक्पत्रैलाश्च केशरम् ॥५४॥
प्रत्येकं कोलमात्राः स्युस्तच्चूर्णं दाड़िमाष्टकम्।
अतीसारं क्षयं गुल्मं ग्रहणीञ्च गलग्रहम् ॥
मन्दाग्निं पीनसं कासं चूर्णमेतद्व्यपोहति ॥ ५५ ॥

वातग्रहण्यां पिप्पल्यादिचूर्णम्।—

* ( पिप्पली वृहती व्याघ्री यवक्षारकलिङ्गकाः।
चित्रकं सारिवा पाठा शटी लवणपञ्चकम् ॥
तच्चूर्णं पाययेद्दध्ना सुरयोष्णाम्बुनाऽपि वा।
मारुतग्रहणीदोष-शमनं परमं हितम् ॥ )

अर्शोरुकादौ लवङ्गादिचूर्णम्।—

लवङ्गं शुद्धकर्पूरमेलात्वङ्नागकेशरम्।
जातीफलमुशीरञ्च नागरं कृष्णजीरकम् ॥५६॥

---

द्वितीयं दाड़िमाष्टकमाह, दाडिमस्येति।—एतद्वृहद्दाड़िमाष्टकसंज्ञं चूर्णमतीसारादीन् हन्ति। अत्र तुगाक्षीरी वांशी, तदभावे तवक्षीरं ग्राह्यम्; तवक्षीरं कर्चूरकृतः प्रकारः, सा कर्षप्रमाणा। त्वक् वराङ्गम्। पत्रं पत्रकम्। एला † सूक्ष्मैला। केशरं नागकेशरम्, एतच्चतुष्टयं ‡ कोलमात्रम्; कोलं कर्षार्द्धं, तेन सम्मिलितं टङ्काष्टकमित्यर्थः। शेषं सुगमम्। गलग्रहं गलरोगम्। अस्याष्टकसंज्ञा पलाष्टकेन बोद्धव्या, न तु द्रव्यसङ्ख्यया ॥५३—५५॥

अथ लवङ्गाद्यं चूर्णं दर्शयन्नाह, लवङ्गमिति।—शुद्धकर्पूरमिति—शुद्धञ्च तत्

---

* प्रक्षिप्तोऽयम्।

† एला स्थूलैला इत्येव सर्वत्र प्रचरति न तु सूक्ष्मैला।

‡ "चातुर्जातं द्विकार्षिकम्" इति चक्रपाठव्याख्यायां 'द्विकार्षिकमिति प्रत्येकं निर्देशस्य द्रव्यप्रधानत्वात्" इति शिवदासः। तत्रास्य दाड़िमाष्टक इति संज्ञा।

Uttarpara Library

कृष्णागुरुस्तुगाक्षीरी मांसी नीलोत्पलं कणा।
चन्दनं तगरं बालं कक्कोलञ्चेति चूर्णयेत् ॥५७॥
समभागानि सर्वाणि सर्वेभ्योऽर्द्धा सिता भवेत्।
लवङ्गाद्यमिदं चूर्णं राजार्हं वह्निदीपनम् ॥५८॥
* रोपणं तर्पणं वृष्यं त्रिदोषघ्नं बलप्रदम्।
हृद्रोगं कण्ठरोगञ्च कासं हिक्काञ्च पीनसम् ॥ ५९ ॥

---

कर्पूरश्चेति पक्वकर्पूरमित्यर्थः, अतिलघुत्वात्; तथा हि—"पक्वस्तु त्रिविधः प्रोक्तः स्वच्छो निर्दलसत्तथा। दृढश्च पीतवर्णश्च विशेषाल्लघुता गतः॥" इति। केचित्तु शुद्ध-शब्देन नात्युत्कृष्टं गृह्णन्ति, तच्च ईशावास इति संज्ञितम्; तथा ह्युक्तम्—"ईशा-वासो हिमसंज्ञः पोताश्रय इति त्रिधा। अपक्वे कथ्यते भेदः कर्पूरे तु भिषग्वरैः॥" स्वरूपेणापि—"ईशावासो भृशं श्वेतो हिमसञ्ज्ञस्तु पाण्डुरः। श्वेतः पोताश्रयश्च—" इति। एवं गुणेनापि "रसवीर्य्यविपाकतः। प्रभावेणापि ते प्रोक्ताः पूर्वं पूर्वं गुणाधिकाः॥" प्रकृष्टत्वेनापि—"तत्रापि यो न च स्फुटः स्फाटिकाभः स उत्तमः" इति। कृष्णजीरकमिति पाश्चात्यं, खुरासानीति लोके। कृष्णागुरुः अगुर्विति प्रसिद्धम्। तुगाक्षीरी वांशी। मांसी जटाख्या। नीलोत्पलोपलक्षितत्वात् पद्मबीजं ग्राह्यम् (?)। कणा पिप्पली। चन्दनं श्वेतम्। तगरं स्वनामख्यातम्। बालं बालकम्। कक्कोलफल-द्रव्यं निजनामप्रसिद्धं, तच्च द्विविधं, मरिचकक्कोलं चोरकक्कोलञ्चेति। एतत् सकलं द्रव्यं समभागं चूर्णयितव्यं, सर्वेभ्यः सिताऽर्द्धा भवेत्, † तेन सकलचूर्णस्य भागैकं, सितायाश्च भागैकं, चूर्णसमाना सितेत्यर्थः। एके सिताऽर्द्धा भवेदित्यनेन सम्मिलित-चूर्णस्य द्वौ भागौ सितायाः एको भाग इति व्याख्यानयन्ति; एतदयुक्तं व्यवहारात्। राजार्हमिति—प्रभुयोग्यम्, अतिसुगन्धत्वात् बहुलगुणकरत्वाच्च। रोपणं शरीरस्थैर्य-करं व्रणरोपणञ्च। तर्पणं धातूनां तृप्तिजनकम्। वृष्यं शुक्रवृद्धिकारि। बलम्

* "रोपणम्" इत्यत्र "रोचनम्" इति पाठो युक्तः, लवङ्गादिचूर्णे व्रणरोपण-प्रसङ्गाभावात्, तन्त्रान्तरे "सुरोचनम्" इति पाठदर्शनाच्च।

† यद्यपि अर्द्धशब्दः समांशवाची, तथाऽपि वैद्यके "सर्वेभ्योऽर्द्धा" इत्यादि प्रयोगस्थले समांशबोधकत्वेनार्द्धशब्दः कैरपि टीकाकारैर्न व्याख्यातः। "सर्वतुल्या" "सर्वसमा" इत्यादि प्रयोगे एव तादृशी व्याख्या दृश्यते। अन्यादर्शे "सिताऽष्टभागं" तथा शुद्धकर्पूरस्थाने चन्द्राह्व इति च पाठो दृश्यते।

यक्ष्माणं तमकं श्वासमतीसारमुरःक्षतम्।
प्रमेहारुचिगुल्मादीन् ग्रहणीमपि नाशयेत्॥ ६०॥

ग्रहण्यां जातीफलादिचूर्णम्।—

जातीफललवङ्गैला-पत्रत्वङ्नागकेशरैः।
कर्पूरचन्दनतिलैस्त्वक्क्षीरीतगरामलैः॥ ६१॥
तालीशपिप्पलीपथ्या-स्थूलजीरकचित्रकैः।
शुण्ठीविड़ङ्गमरिचैः समभागविचूर्णितैः॥ ६२॥
यावन्त्येतानि सर्वाणि कुर्य्यात् भङ्गाञ्च तावतीम्।
सर्वचूर्णसमा देया शर्करा च भिषग्वरैः॥ ६३॥
कर्षमात्रं ततः खादेन्मधुना प्लावितं सुधीः।
अस्य प्रभावात् ग्रहणी-कासश्वासारुचिक्षयाः॥
वातश्लेष्मप्रतिश्यायाः प्रशमं यान्ति वेगतः॥६४॥

बीजसम्प्रदानमित्यर्थः। तमकः श्वासभेदः। उरःक्षतं क्षयरोगे पठितम्। अस्याग्रे कर्पूराद्यं नाम चूर्णं केचित् पठन्ति, तच्च बहुपुस्तकेषु न दृश्यते, क्षेपकोऽयम् इति मन्यमानैरस्माभिर्न लिखितः। कर्पूराद्यः क्वचिल्लिखितः,—"सकर्पूरञ्च कक्कोलं जातीफलदलं समम्। लवङ्गनागमरिच-कणाशुण्ठीविवर्द्धितम्॥ चूर्णं सितासमं ग्राह्यं रोचनं वह्निकारकम्। वैस्वर्य्यश्वासगुल्मार्शः कण्ठामयभयापहम्॥ प्रयुक्तमन्नपानेषु भिषजा रोगिणां हितम्॥" इति कर्पूराद्यं चूर्णम्। अथ लघु-लवङ्गादिचूर्णं तन्त्रान्तरे—"लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षसमा-नमीषाम्। पलार्द्धमेकं मरिचस्य दद्यात् पलानि चत्वारि महौषधस्य॥ सितासमं चूर्णमिदं प्रसह्य रोगानिमानाशु बलान्निहन्ति। कासज्वरारोचकगुल्ममेह-श्वासाग्नि-मान्द्यग्रहणीविकारान्॥" इति। * लघुलवङ्गादिचूर्णम्॥ ५६—६०॥

इदानीं जातीफलाद्यं नाम चूर्णं दर्शयन्नाह, जातीफलेति।—अत्र चन्दनं श्वेतं, मुख्यत्वात्। तिलैरिति—कृष्णतिलानि निस्तुषाणि ग्राह्याणि। त्वक्क्षीरी वांशी। तगरं प्रसिद्धम्। आमलमामलकफलम्। पथ्या हरीतकी। स्थूलजीरकं कृष्ण-जीरकः; एतत् सकलं समभागं गृहीत्वा चूर्णितम्। अस्य भागमेकं भङ्गाया भागैक-

* चक्रदत्ते समशर्करचूर्णनाम्ना पठितोऽयं योगः कासे।

अथैव्यादौ महाषाडवम्।—

मरिचं नागपुष्पाणि तालीशं लवणानि च।
प्रत्येकमेकभागाः स्युः पिप्पलीमूलचित्रके॥ ६५ ॥
त्वक् कणा तिन्तिड़ीकञ्च जीरकञ्च द्विभागिकम्।
धान्याम्लवेतसौ विश्वं भद्रैला बदराणि च ॥६६॥
अजमोदा जलधरः प्रत्येकं स्युस्त्रिभागिकाः।
सर्वौषधिचतुर्थांशं दाड़िमस्य फलं भवेत्॥ ६७ ॥
द्रव्येभ्यो निखिलेभ्यश्च सिता देयाऽर्द्धमात्रया।
महाषाड़वसंज्ञं स्याच्चूर्णमेतत् सुरोचनम् ॥६८॥
अग्निदीप्तिकरं हृद्यं कासातीसारनाशनम्।
हृद्रोगकण्ठजठर-मुखरोगप्रणाशनम्॥ ६९ ॥

---

मिति, तेन सकलचूर्णसमाना भङ्गा देया इति। भङ्गाऽत्र भर्जिता देया, व्यवहारात्। सर्वचूर्णसमा देया शर्करा चेति—तेन द्वयोः साम्या शर्करेत्यर्थः। एतत् सिद्धं यथोचितमात्रं मधुना प्राश्य भक्ष्यं, नात्र कर्षमात्रं नियतं, यतः,—"मात्राया नास्त्यवस्थानम" इत्यादिवचनात्॥ ६१—६४ ॥

अथ महाषाडवसंज्ञकं चूर्णमाह, मरिचमिति।—नागपुष्पाणीति—नागकेशरम्। लवणानीति बहुवचनत्वेन पञ्चलवणं ग्राह्यं, तच्च—"सिन्धु सौवर्चलञ्चैव विड़ं सामुद्रकं गडम" इति। अस्मत्सम्प्रदाये लवणानीत्यनेन सैन्धवमेव ग्राह्यमास्यत्, स्वजात्युत्कृष्टत्वेन बहुवचनपठनम्। त्वक् तज्शब्दवाच्यम्। अत्र मरिचादिलवणान्तं प्रत्येकं टङ्कैकम्। पिप्पलीमूलादिजीरकान्तं प्रत्येकं टङ्कद्विमितम्। अम्लवेतसं स्वनामप्रसिद्धम्। विश्वं शुण्ठी। भद्रैला बृहदेला। बदराणि बदरफलानि। अजमोदाऽत्र यमानी, एवं सर्वत्रान्तःपरिमार्जने, बहिःपरिमार्जने तु अजमोदा अजमोदैव; तथा हि—"अन्तःसम्मार्जने प्रायशाजमोदा यमानिका। बहिःसम्मार्जने योज्या त्वजमोदैव निश्चितम्॥" इति। अथाजमोदायमान्यो यतः, तत्र यमान्येव द्विगुणा अन्तःपरिमार्जने। जलधरो मुस्तम्। धान्यादिजलधरान्तं प्रत्येकं टङ्कत्रयमिति। एतत्सकलचूर्णस्य चतुर्थांशं दाड़िमफलं, तेन माषाधिकद्वयटङ्कमित्यर्थः। दाड़िमफलमत्राम्लं, यथोक्तं "अनारदाना"

विसूचिकां तथाऽऽमानमर्शोगुल्मकृमीनपि ।
छर्दिं पञ्चविधां श्वासं चूर्णमेतदपोहति ॥ ७० ॥

उदरादौ नारायणचूर्णम् ।—

चित्रकं त्रिफला व्योषं जीरकं हवुषा वचा ।
यमानी पिप्पलीमूलं शतपुष्पाऽजगन्धिका ॥ ७१ ॥
अजमोदा शटी धान्यं विडङ्गं स्थूलजीरकम् ।
हेमाह्वा पौष्करं मूलं चागी लवणपञ्चकम् ॥ ७२ ॥

शब्दवाच्यं, षाड़वत्वात् । समस्तद्रव्येभ्यः सिता शर्करा षड्भागिका देया * तेन सकलचूर्णसाम्यमित्यर्थः, सकलचूर्णसाम्यं कियत्प्रमाणम ? † टङ्काधिककुडवमानमिति भावः । महाषाडवमिति "लवणाम्लसितायुक्तः षाडवः परिकीर्त्तितः" इति पाठान्तरम् इति । ननु "चूर्णे गुड़ः समो देयः शर्करा द्विगुणा भवेत्" ( शार्ङ्ग० मध्य० ६ अ० ) इति नियमेन कथमत्र चूर्णसमतुलिता सिता ? उच्यते—अयमपि शोषोऽग्निमान्द्ये प्रधानतमः, अग्निसादो हि प्रायेण श्लेष्माधिकः स्यात्, श्लेष्मणि च मधुरो बहुतरो न युक्त इत्यदोषः । यद्वा—द्विगुणमानमनुक्तेषु उक्तेषु तु "यदुक्तं तत्तथैव च" इति ॥ ६५—७० ॥

इदानीं नारायणचूर्णं प्रकटयन्नाह, चित्रकमिति ।—त्रिफला हरीतक्यादिकम् । व्योषं त्रिकटुकम् । हवुषेति खनामतः प्रसिद्धा ; केचित्तु 'हब' शब्दवाच्यं

* अत्रापि षड्शब्दस्य समांशार्थकत्वं न वैद्यमनोरमम्, एतत्तु प्रागेव प्रदर्शितम् ।

† सकलचूर्णसाम्यं टङ्काधिककुडवमानमिति पाठः मुद्राकरप्रमादविजृम्भितः टीकाकारप्रमादविजृम्भितो वा इति मन्ये, यतः मरिचादिकलवणान्तैः द्रव्यैः टङ्कपरिमितैः मिलित्वा एकचत्वारिंशत टङ्का भवन्ति, चतुर्थांशेन सपादटङ्कटङ्केन दाड़िमफलेन सह मिलित्वा पुनः सपादैकपञ्चाशट्टङ्काः जायन्ते, एवञ्च तत्समानतायाः शर्करायाः मानमपि सपादैकपञ्चाशट्टङ्का एव । टङ्कस्तु माषापरपर्य्यायः, स च तोलकार्द्धः, तत्तश्च सपादैकपञ्चाशट्टङ्कैः माषकाधिकं सार्द्धपञ्चविंशतितोलकं जायते, टङ्काधिककुडवेन तु सार्द्धद्वात्रिंशत्तोलकं भवति । वस्तुतस्तु सर्वद्रव्येभ्यः षड्भागायाः शर्करायाः सार्द्धपञ्चमाषकाधिकं द्वादशतोलकं मानं भवतीति सुधीभिर्द्रष्टव्यम् ।

कुष्ठश्चेति समांशानि विशाला स्याद्द्विभागिका ।
त्रिवृद्द्विभागा विज्ञेया दन्त्या भागत्रयं भवेत् ॥ ७३ ॥
चतुर्भागा सातला स्यात् सर्वाण्येकत्र चूर्णयेत् ।
पाचनस्नेहनाद्यैश्च स्निग्धकोष्ठस्य रोगिणः ॥ ७४ ॥
दद्याच्चूर्णं विरेकाय सर्वरोगप्रणाशनम् ।
हृद्रोगे पाण्डुरोगे च कासे श्वासे भगन्दरे ॥ ७५ ॥
मन्दाग्नौ च ज्वरे कुष्ठे ग्रहण्याञ्च गलग्रहे ।
दद्याद्युक्तानुपानेन तथाऽऽध्माने सुरादिभिः ॥ ७६ ॥
गुल्मे बदरनीरेण विड्भेदे दधिमस्तुना ।
उष्णाम्बुभिरजीर्णे च वृक्षाम्लैः परिकर्त्तिषु ॥ ७७ ॥

कुष्ठेति । अजगन्धिका श्वेतयमानी, वनयमानी वा; वनतुलसीति केचित् । अजमोदाऽपि वक्त्रपरिमार्जनत्वात् यमानी, तेन यमान्या भागद्वयम् । क्षाराविति—द्वौ क्षारौ, तेन स्वर्जिका यवक्षारश्चेति । लवणपञ्चकं प्रसिद्धम् । एतत् सर्वं समांशमितम् । विशालेन्द्रवारुणी, सा द्विभागिका एकद्रव्यभागापेक्षया । त्रिवृद्विशोधितः द्विभागा, अत्रापि द्रव्यैकभागापेक्षया । दन्ती च प्रसिद्धा, तस्या भागत्रयं द्रव्यैकमानादपि बोद्धव्यम् । सातला चर्मकषा, लोके सेहुण्डभेद इति, विमर्देनापि यथातत्त्वकथनेन लिखितः, सा च द्रव्यैकभागापेक्षया चतुर्भागा । पाचनस्नेहनाद्यैरिति—पाचनं दोषाणां पाचनं व्याधिबाधकम्, स्नेहनं स्नेहपानादिकम्, आदिशब्दात् स्वेदादिकञ्च; एतेन कृतपूर्वं पाचनाद्यैः कृत्वा स्निग्धकोष्ठस्य रोगिण एतच्चूर्णं विरेकाय दद्यादित्यर्थः, तथा हि—"वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत् । स्निग्धाय स्विन्नगात्राय दद्यात् स्नेहविरेचनम् ॥" (च० चि० १३।८०) इति । ननु "विवर्जयेत् स्नेहपानमजीर्णी चोदरी ज्वरी" (सु० चि० ३१।५०) इति वचनात् स्नेहो निषिद्धः, "नैव स्वेद्या ओदरी नातिसारी" इत्यनेन स्वेदस्यापि निषेधः कृतः, तत् कथं स्नेहस्वेदोपदेशः? उच्यते—स्वतन्त्रयोः स्नेहस्वेदयोर्निषेधो बोद्धव्यः, न तु शोधनाङ्गभूतयोरनयोः, अन्यथा दोषहरणस्य दुष्करत्वात् । दद्यात् युक्तानुपानेनेति—युक्तानुपानमेव कथ्यते; तद्यथा—आध्माने सुरादिभिरिति, आदिग्रहणाद् आसवारिष्टसीधुमाध्वीकादिभिः । गुल्मे बदरनीरेणेति—बदरक्वाथेनेत्यर्थः । विड्भेदे दधिमस्तुनेति—दधि च मस्तु च; यद्वा—दध्नो मस्तु नामाञ्जलिकं, यत् मस्तु

उष्ट्रीदुग्धेनोदरेषु तथा तक्रेण वा गवाम् ।
प्रसन्नया वातरोगे दाड़िमाम्बुभिरर्शसि ॥ ७८ ॥
द्विविधे च विषे दद्यात् घृतेन विषनाशनम् ।
चूर्णं नारायणं नाम दुष्टरोगगणापहम् ॥ ७९ ॥

सप्तविधं भवेत्, तद्यथा—"स्वाद्वम्लमत्यम्लकमन्दजातं तथा * मृतक्षीरभवं सरश्च । असारमेवं दधि सप्तधाऽस्मिन् वर्गे स्मृता मस्तुगुणास्तथैव ॥" ( सु० सू० ४५अ० ) इति । प्रसङ्गतोऽस्यार्थं प्रकटयन्नाह, स्वाद्वम्लमित्यादि ।—स्वादु दधि, अम्लं दधि, अत्यम्लं दधि, मन्दजातम् अत्यम्लं दधि (?) मन्दजातं दधि एभ्यो जातमित्यर्थः, तथा मृतक्षीरभवमिति—विनष्टदुग्धजातम् । † सर इति—दध्न उपरि घनो भागः स्नेहबहुलः सर इति प्रसिद्धः । असारं सारवर्जितम्, उद्धृतस्नेहस्य दध्नो विनिर्मितमित्यर्थः, इति सप्तविध मस्तु दर्शितम् । अन्ये कूर्चिकादधितक्र-भेदेन मस्तु द्विविधमिति पठन्ति । उष्णाम्बुभिः सह पेयमिति व्यवहारः ; उष्णाम्बुभिरिति बहुवचनत्वेनाम्लमांसरसयूषादिकं ग्राह्यं, तच्च यथादोषमुपयोगमिति योज्यम् । वस्तौरिति—अस्य क्वाथेनेत्यर्थः । परिकर्त्तिकायामिति—गुदं परिकर्त्तनमिव वेदनावद्भिरिति परिकर्त्तिका कथ्यते । उष्ट्रीदुग्धेन गवां तक्रेण वा उदरेषु इति—सर्वोदरेष्वित्यर्थः । प्रसन्नया वातरोगे इति—प्रसन्ना सुरामण्डः प्रसिद्धः ; तथा चोक्तं—"प्रसन्ना स्यात् सुरामण्डः तस्मात् कादम्बरी घना । जगल-स्तदधः प्रोक्तो जगलान्मेदको घनः ॥ बक्कसो हृतसारः स्यात् सुराबीजन्तु किण्वकम् ॥" इति । गुणेनापि प्रसन्नामाह—"गुल्मार्शोऽम्कट्वरोचकवातनुत" इति । "प्रसन्नया वातरोगे" इत्यत्र "रास्नया वातरोगेषु" इति वा पाठः, तत्र रास्नाक्वाथेन सहेत्यर्थः । दाडिमाम्बुभिरर्शसीति—दाडिमफलस्वरसैः कपित्थफलरसैर्वा । द्विविधे च विषे इति—स्थावरजङ्गमात्मके । विष्णुसंहितायामुक्त नारायणस्तु यद्वा—विष्णोर्वीर्य्योत्पन्नत्वात् नारायणमन्त्रं, यथा विष्णुतेजसा दैत्यगणाः पलायन्ते तथैवास्य प्रभावेण दुष्टा रोगगणा नश्यन्तीति तात्पर्य्यार्थः ॥ ७१—७९ ॥

* सुश्रुते "मृतक्षीरभवम्" इति पाठः ।

† सरजातं मस्तु इति तु न सङ्गच्छते, यतः दधिनिःसृतं जलं मस्तु, सरात्तु जलं न निर्गच्छतीति । दुग्धस्य सरजातदध्नो मस्तु इति तु भवितुमर्हति ।

अजीर्णादौ हपुषाद्यं चूर्णम्।—

हपुषा त्रिफला चैव त्रायमाणा च पिप्पली।
हेमचोरी त्रिवृच्चैव मातला कटुका वचा ॥ ८० ॥
नीलिनी सैन्धवं कृष्णं लवणञ्चेति चूर्णयेत्।
उष्णोदकेन मूत्रेण दाडिमत्रिफलारसैः ॥ ८१ ॥
तथा मांसरसेनापि यथायोग्यं पिबेन्नरः।
अजीर्णं प्लीह्नि गुल्मेषु शोफार्शोविषमाग्निषु ॥
हलीमकामलापाण्डु-कुष्ठाध्मानोदरेष्वपि ॥ ८२ ॥

शूलादौ पञ्चसमं चूर्णम्।—

शुण्ठी हरीतकी कृष्णा त्रिवृत् सौवर्चलं तथा।
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ॥ ८३ ॥
ज्ञेयं पञ्चसमं चूर्णमेतच्छूलहरं परम्।
आध्मानजठरार्शोघ्नमामवातहरं स्मृतम् ॥ ८४ ॥

आध्मानादौ नाराचचूर्णम्।—

कर्षमात्रा भवेत् कृष्णा त्रिवृता स्यात् पलोन्मिता।
खण्डात् पलञ्च विज्ञेय चूर्णमेकत्र कारयेत् ॥ ८५ ॥

---

अथ हपुषाद्यं चूर्णं दर्शयन्नाह, हपुषेति।—हपुषा स्वनामख्याता, सा च अश्वत्थदलपत्रविशेषः। त्रायमाणा लोकतः प्रसिद्धा। हेमचोरी स्वर्णचीरी, कङ्कुष्ठमिति केचित्, धोळ इति लोके। त्रिवृन्निशोथः। मातला सेहुण्डभेदः। लवणमत्र सौवर्चलं, सौवर्चलसममन्यत् वा इत्यन्ये, यदुक्तं —"न कालालवणे गन्धः सौवर्चलसमो गुणः।" (च० सू० अन्नपान०) इति मूत्रेणेति—गोमूत्रेण मुख्यत्वात्। दाडिमत्रिफलारसैरिति—क्वथितैः। मांसरसः, मद्यभेदाद्वा। यथायोग्यमिति व्याध्यनुरूपम्। विषमाग्निष्विति—विषमतीक्ष्णमन्दादिष्वपि। हलीम हलीमकम् ॥ ८०—८२ ॥

आध्मानादौ पञ्चसमचूर्णं दर्शयन्नाह, शुण्ठीति।—अत्र कृष्णा पिप्पली। अर्शांसीति। अन्यत् सुबोधम् ॥ ८३-८४ ॥

कर्षोन्मितं लिह्येतत् क्षौद्रेणाध्माननाशनम् ।
गाढविट्कोष्ठरुक्फान् पित्तशूलञ्च नाशयेत् ॥८६॥

यकृत्प्लीहादौ लवणत्रितयाद्यं चूर्णम् ।—

लवणत्रितयं क्षारौ शतपुष्पाद्वयं वचा ।
अजमोदाऽजगन्धा च हवुषा जीरकद्वयम् ॥ ८७ ॥
मरिचं पिप्पलीमूलं पिप्पली गजपिप्पली ।
हिङ्गु च हिङ्गुपत्री च शटी पाठोपकुञ्चिका ॥ ८८ ॥
शुण्ठी चित्रकचव्यानि विडङ्गञ्चाम्लवेतसम् ।
दाडिमं तिन्तिडीकञ्च त्रिवृद्दन्ती शतावरी ॥ ८९ ॥
इन्द्रवारुणिका भार्गी देवदारु यमानिका ।
कुस्तुम्बुरुस्तुम्बुरूणि पौष्करं बदराणि च ॥ ९० ॥
शिवा चेति समांशानि चूर्णमेकत्र कारयेत् ।
भावयेदार्द्रकरसैर्बीजपूररसैस्तथा ॥ ९१ ॥

---

इदानीं नाराचकं नाम चूर्णं निवर्शयन्नाह, कर्षमात्रेति ।—कर्षोन्मितमात्र भक्षणार्थम् । क्षौद्रन्तु यावता अवलेहः स्यात् तावन्मात्रम् । एतच्च प्रातरेव भक्ष्यं विरेकार्थत्वात् ; तथा ह्युक्तं—"खण्डपलं त्रिवृतासमरूपकल्याकर्षचूर्णितं श्लक्ष्णम् । प्राग्भोजने च मधुना विडालपदकं लिहेत् प्राज्ञः ॥" इति । गाढविट्कमानवद्ध-पुरीषमित्यर्थः ॥ ८५-८६ ॥

अथ त्रिलवणाद्यं चूर्णं दर्शयन्नाह, लवणत्रितयमिति ।—अयं त्रिलवणाद्यो योगस्तुर्णसंज्ञकः । अत्र त्रिलवणञ्च सैन्धवसौवर्चलविड्संज्ञम् । क्षाराविति—द्वौ क्षारौ, तेन स्वर्जिकाक्षारो यवक्षारश्च । शतपुष्पाद्वयमिति—लघुस्थूलभेदेन, एका "सौंफ" इति प्रसिद्धा, अपरा "सोया" शब्दवाच्या । अजगन्धा बर्वरिका । हवुषा त्रिजटानामख्याता । जीरकद्वयमिति—पीतकृष्णभेदेन प्रतीतम् । हिङ्गुपत्री विटपविशेषः, तस्याः पत्राणि हिङ्गुगन्धसदृशानि भवन्ति, सा द्विविधा, एका चाढ्यपत्रिका तन्वी, अपरा वेणुपत्रिका हिङ्गुलफला । उपकुञ्चिका जीरकभेदः, "कलौंजी" शब्दवाच्यः । कुस्तुम्बुरु धान्यकम् । तुम्बुरु स्वनामप्रसिद्धम् । पौष्करं कुष्ठम् । बदराणि बदरफलानि । शिवा हरीतकी । शेषं सुबोधम् । एतत्

तत् पिबेत् सर्पिषा जीर्णे मद्येनोष्णोदकेन वा।
कोलाम्भसा वा तक्रेण दुग्धेनोष्णेन मस्तुना ॥ ९२ ॥
यकृत्पृष्ठकटीशूलं गुदकुक्षिहृदामयम्।
अर्शोविष्टम्भमन्दाग्निगुल्मप्लीहोदराणि च ॥ ९३ ॥
हिक्काध्मानश्वासकासान् जयेदेतन्न संशयः।
एतैरेवौषधैः सम्यक् घृतं वा साधयेत् सुधीः ॥ ९४ ॥

शूलादौ तुम्बुर्वादि चूर्णम्।—

तुम्बुरूणि त्रिलवणं यमानी पुष्कराह्वयम्।
यवक्षाराभयाहिङ्गुविडङ्गानि समानि च ॥ ९५ ॥
त्रिवृत्त्रिभागा विज्ञेया सूक्ष्मचूर्णानि कारयेत्।
पिबेदुष्णेन तोयेन यवक्वाथेन वा पिबेत् ॥
जयेत् सर्वाणि शूलानि गुल्माध्मानोदराणि च ॥ ९६ ॥

---

सकलं समभागेन श्लक्ष्णचूर्णीकृतं चार्द्रकरसैर्बीजपूररसैश्च प्रत्येकं भावयेत्; रसैरिति बहुवचनत्वेन सप्त वारान् भावयेदिति भावः; तथा चोक्तं—"बीजपूरार्द्रकरसेनासप्तधा भावितम्" इति। घृतसाधने तु चतुर्गुणो रसो देयः स्नेहपरिमाणात्, चतुर्गुणता च प्रत्येकम्। तत् पिबेत् सर्पिषा जीर्णे इति—अन्ने जीर्णे सति पिबेदित्यर्थः, अन्यथा रोगोत्पत्तिभयात्; तथा हि—"औषधशेषे भुक्तं पीतं तथौषधं सशेषेऽन्ने। न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च॥" इति। कोलाम्भसा बदरक्वाथेन। "वा"ग्रहणात् कुलत्थयूषेण क्षारनिस्रुतेन टाङ्कमांसेन [illegible]ापेक्षया पिबेदिति तात्पर्यार्थः। यकृत्पृष्ठकटीशूलमिति—यकृच्छूलं पृष्ठशूलं कटिशूलञ्चेति। गुदकुक्षिहृदामयमिति—आमया गुदादिभिः सह प्रत्येकमभिसम्बध्यते। एतैरेवौषधैः घृतमपि साधयेत् सुधीरिति—स्नेहयुक्त्या विपचेदित्यर्थः॥ ८७—९४॥

अथ तुम्बुर्वाद्यं चूर्णं दर्शयन्नाह, तुम्बुरूणीति।—अयं तुम्बुर्वादिको योगः अष्टविधशूलेषु प्रशस्तः। तत्र तुम्बुरूणि फलविशेषाः प्रसिद्धाः। त्रिलवणं सैन्धवं सौवर्चलं विडम्। पुष्कराह्वयं पुष्करमूलं, तदभावे कुष्ठम्। अभया हरीतकी। हिङ्गु च भर्जितम्। एतत् सकलं समभागम्। त्रिवृत् त्रिभागेति एकद्रव्यभागापेक्षया। यवक्वाथेनेति—यवोऽत्र वितुषः॥ ९५।९६॥

ग्रहण्यां चित्रकादि ।—

चित्रकं नागरं हिङ्गु पिप्पली पिप्पलीजटा ।
चव्याजमोदा मरिचं प्रत्येकं कर्षसम्मितम् ॥ ९७ ॥
स्वर्जिका च यवक्षारः सिन्धु सौवर्चलं विड़म् ।
सामुद्रकं रोमकञ्च कोलमात्राणि कारयेत् ॥ ९८ ॥
एकीकृत्याखिलं चूर्णं भावयेन्मातुलुङ्गजैः ।
रसैर्दाड़िमजैर्वाऽपि शोषयेदातपेन च ॥ ९९ ॥
एतच्चूर्णं जयेद्गुल्मं ग्रहणीमामजां रुजम् ।
अग्निञ्च कुरुते दीप्तं रुचिकृत् कफनाशनम् ॥ १०० ॥

अग्निमान्द्ये वड़वानलचूर्णम् ।—

सैन्धवं पिप्पलीमूलं पिप्पली चव्यचित्रकम् ।

चित्रकाद्यं चूर्णमाह, चित्रकमिति ।—अत्र नागरं शुण्ठी । पिप्पलीजटा पिप्पलीमूलम् । चित्रकादि मरिचान्तं द्रव्यं कर्षप्रमाणं प्रत्येकं, स्वर्जिकादि रोमकान्तं कोलमात्रं प्रत्येकमित्यर्थः । कोलं कर्षार्द्धसंज्ञम् । रोमकं गड़लवणम् । एतत् सर्वं चूर्णीकृत्य * मातुलुङ्गदाड़िमफलोद्भवैः रसैः पृथक् भावयेत् । मातुलुङ्गो वीजपूरकः । वा-ग्रहणादेतच्चूर्णं मातुलुङ्गदाड़िमरसेनाप्लाव्य गुटिकाः कार्य्याः ग्रन्थान्तरदर्शनाच्च ; तथा हि—"चित्रकं पिप्पलीमूलं द्वौ क्षारौ † लवणत्रयम् । व्योषं हिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥ गुटिका मातुलुङ्गस्य दाड़िमस्य रसेन वा । कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥" (च० चि० ग्रहणी०) इति ॥९७—१००॥

अथ वड़वानलचूर्णमाह, सैन्धवमिति ।—चव्यमिति—विटपविशेषः निक-

* "मातुलुङ्गदाड़िमफलोद्भवैः रसैः" इत्यादि यदुक्तं, तन्न समीचीनं, यतः वा-शब्दोऽत्र विकल्पार्थकः, न तु समुच्चयार्थकः ; तेन मातुलुङ्गरसेन अथवा दाड़िमरसेन मर्द्दयेत् इत्येवास्यार्थः । टीकायां "वा-ग्रहणात्—" इत्यादि यदुक्तं, तदपि प्रामादिकं, वा-ग्रहणात् एतत् चूर्णं मातुलुङ्गरसेन दाड़िमरसेन वा आप्लाव्य इत्येव युक्तः पाठः, ग्रन्थान्तरीयश्लोकोऽपि तादृशार्थक एव ।

† "लवणत्रयम्" इत्यत्र चरके चक्रदत्ते च "लवणानि च" इति पाठः, स च सर्व्वविद्वत्सम्मतः ।

शुण्ठी हरीतकी चेति क्रमवृद्धानि चूर्णयेत् ॥
वड़वानलनामैतच्चूर्णं स्यादग्निदीपनम् ॥ १०१ ॥

आमवातादौ अजमोदादिचूर्णम्।—

अजमोदा विडङ्गानि सैन्धवं देवदारु च।
चित्रकं पिप्पलीमूलं शतपुष्पा च पिप्पली ॥१०२॥
मरिचञ्चेति कर्षांशं प्रत्येकं कारयेत् बुधः।
कर्षास्तु पञ्च पथ्याया दश स्युर्वृद्धदारकात् ॥१०३॥
नागराच्च दशैव स्युः सर्वाण्येकत्र चूर्णयेत्।
पिबेत् कोष्णजलेनैव चूर्णं श्वयथुनाशनम् ॥ १०४ ॥
आमवातरुजं हन्ति सन्धिपीड़ाञ्च गृध्रसीम्।
कटिपृष्ठगुदस्थाञ्च जङ्घयोश्च रुजां जयेत् ॥ १०५॥
तूनीप्रतूनीविश्वाची-कफवातामयान् जयेत्।
समेन वा गुड़ेनास्य वटकान् कारयेद्भिषक् ॥ १०६ ॥

श्वासादौ शुण्ठ्यादिचूर्णम्।—

( शुण्ठी सौवर्चलं हिङ्गु दाड़िमञ्चाम्लवेतसम्।
चूर्णमुष्णाम्बुना पेयं श्वासहृद्रोगशान्तये ॥ )

---

नामप्रतीतः, यस्य फलं गजपिप्पली इति। क्रमवृद्ध्या वृद्धिं कृत्वा योज्य, वृद्धिस्तु आदिद्रव्याद्बोध्या; तद्यथा - सैन्धवमेकभागं, पिप्पलीमूलं द्विभागिकं, पिप्पली त्रिभागा, अजाजी भागचतुष्टयं, चित्रकं पञ्चभागं, शुण्ठी षड्भागा, हरीतकी सप्तभागेन क्रमवृद्धिः। अत्यन्ताग्निकरत्वात् वडवानलसंज्ञम् ॥ १०१ ॥

अथ अजमोदाद्यं चूर्णमपि दर्शयन्नाह, अजमोदेति।—अथ अजमोदादिनामको योगश्चूर्णरूपो गुटिकारूपश्च। अजमोदादिमरिचान्तं सर्वद्रव्यं प्रत्येकं कर्षमात्रम्। पथ्या हरीतकी, तस्याश्च पञ्चकर्षमिता। वृद्धदारकं दशकर्षम्। नागरं शुण्ठी चैव दशकर्षमिता। एतत् सकलं चूर्णं कृत्वा उचितमात्रया कोष्णजलेन पानं विधेयम्। वा अथवा पश्चात्तरमपि, इदमेव चूर्णं गुडमिश्रितं गुडसमानं कृत्वा भक्षणेन गुडमात्रमेव चूर्णदानं। अत्रापि कोष्णजलानुपानं विधेयम्। कटिपृष्ठगुदस्थानोत्थं च रुजामित्यन्वयः। जङ्घयोरूर्वोः अत्रापि रुजाम्। तूनी प्रतूनी वातरोगे पठिता। विश्वाची च ॥ १०२—१०६ ॥

गुल्मादौ हिङ्ग्वादिचूर्णम्।—

हिङ्गु पाठाऽभया धान्यं दाडिमं चित्रकं शटी।
अजमोदा त्रिकटुकं हवुषा चाम्लवेतसम्॥ १०७॥
अजगन्धा तिन्तिडीकं जीरकं पौष्करं वचा।
क्षारद्वयं * पञ्चलवणानि विचूर्णयेत्॥ १०८॥
प्राक् भोजनस्य मध्ये वा चूर्णमेतत् प्रयोजयेत्।
पिबेद्वा जीर्णमद्येन तक्रेणोष्णोदकेन वा॥ १०९॥
गुल्मे वातकफोद्भूते हृद्रोगेऽष्ठीलिकासु च।
हृद्वस्तिपार्श्वशूलेषु शूले च गुदयोनिजे॥ ११०॥
मूत्रकृच्छ्रे तथाऽऽनाहे पाण्डुरोगेऽरुचौ तथा।
हिक्कायां यकृति प्लीह्नि श्वासे कासे गलग्रहे॥
ग्रहण्यर्शोविकारेषु चूर्णमेतत् प्रशस्यते॥ १११॥
भावितं मातुलुङ्गस्य बहुशः स्वरसेन वा।
कुर्य्याच्च गुटिका वह्नीर्वातश्लेष्मामयापहाः॥ ११२॥

अधुना हिङ्ग्वाद्यं चूर्णमाह, हिङ्ग्विति।—अत्र हिङ्गु भर्जितं योज्यम्। पाठा प्रसिद्धा, तस्या मूलम्। अभया हरीतकी। दाडिमं दाडिमफलबीजानि। हवुषा अम्बुवातिरूपाविशेषो विख्यातः। † अजगन्धा बर्बरिका। तिन्तिडीकमम्लफलं प्रसिद्धम्। पुष्करं पुष्करमूलम्। क्षारद्वयमिति—यवक्षारः स्वर्जिकाक्षारः; पञ्चलवणानि सैन्धवप्रभृतिकानि। ‡ प्राग्भोजनस्येति—प्रातःकाले, मध्ये वा भोजनमिश्रम्। जीर्णमद्यनेति—जीर्णं पुरातनं गुणाधिकत्वात्, तथा हि—"नवं मद्यमभिष्यन्दि गुरु दोषकरं परम्। जीर्णं च सर्वदोषघ्नं लघु वातकफापहम्॥" इति। कल्पनान्तरमाह—अथवा एतच्चूर्णं मातुलुङ्गस्य रसेन वा बहुधा भावयित्वा गुटिकाः कार्य्याः, ताश्च वातश्लेष्मामयापहा भवन्ति। बहुश इति—सप्तवारान्। वह्नीरिति—द्विशाणप्रमिताः॥ १०७—११२॥

* "पञ्चलवणानि" इत्यत्र चरकवाग्भटचक्रदत्तेषु "लवणे द्वे च" इति पाठः।

† "अजगन्धा चैवयमानी" इति शिवदासः।

‡ "भोजनस्य प्राक् परिणामे भोजनाव्यवहितपूर्वकाले वा" इति शिवदासः।

चरोचकादौ यमानीषाडवः।—

यमानी दाड़िमं शुण्ठी तिन्तिड़ीकाम्लवेतसौ।
बदराम्लञ्च कुर्वीत चतुःशाणमितानि च॥ ११३॥
* सार्द्धद्विशाणं मरिचं पिप्पली दशशाणिका।
त्वक्सौवर्चलधान्याकं जीरकं द्विद्विशाणकम्॥ ११४॥
चतुःषष्टिमितैः शाणैः शर्करामत्र योजयेत्।
चूर्णितं सर्वमेकत्र यमानीषाड़वाभिधम्॥ ११५॥
चूर्णं जयेत् पाण्डुरोगं हृद्रोगं ग्रहणीं ज्वरम्।
छर्दिशोषातिसारांश्च प्लीहानाहविबन्धताम॥
अरुचिं शूलमन्दाग्निमर्शोजिह्वागलामयान्॥ ११६॥

कासादौ तालीशादिचूर्णम्।—

तालीशं मरिचं शुण्ठी पिप्पली वंशरोचनम्।
एकद्वित्रिचतुःपञ्च-कर्षैर्भागान् प्रकल्पयेत्॥ ११७॥

---

अथ यमानीषाडवसंज्ञकं चूर्णमाह, यमानीति।—यमानी प्रसिद्धा। दाड़िमं दाड़िमफलबीजानि। तिन्तिड़ीकं प्रसिद्धम्। बदराम्लमिति—बदरं प्रसिद्धम्, अम्लं वृक्षाम्लं वृक्षभेदः, स च फलाम्लः, यद्वा—बदराम्लेनाम्लबदरं ग्राह्यत्वात्। चतुःशाणमितानीति प्रत्येकम्। सार्द्धद्विशाणं मरिचमिति—तेन दशमाषक-मित्यर्थः। त्वगादिजीरकान्तं प्रत्येकं द्विशाणम्। "त्वक्सौवर्चलधान्याकम्" इत्यस्य स्थाने "कपित्थमथ धान्यकम्" इति पठन्ति, तथापि अत्र सौवर्चलम्; षाडवाभिध-मिति प्रसिद्धेः; यतः—"लवणाम्लसमायुक्तः षाडवः परिकीर्त्तितः" इति। शोषो मुखशोषः क्षयभेदो वा। आनाह उदरावृत्तिः। विबन्धो वातादीनामप्रवृत्तिः। जिह्वागलामयानिति—जिह्वामयान्, गलामयानित्यर्थः॥ ११३—११६॥

तालीशादिचूर्णमाह, तालीशमिति।—तालीशं स्वनामख्यातम्। वंशरोचनं तवक्षीरी। एतेन द्रव्यपञ्चकमादद्यात् कर्षैकैकेन वर्द्धितं ग्राह्यं, तेन तालीशं
कर्षद्वयं, पिप्पली चतुःकर्षा, वंशी पञ्चकर्षा

* पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च" इति चक्रपाठः। "पिप्पलीनां शतमिति पाठान्तरमात् एव मरिचस्यापि शतद्वयम्" इति शिवदासः।

एलात्वचोस्तु कर्षार्द्धं प्रत्येकं भागमाचरेत्।
द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः॥ ११८॥
तालीशाद्यमिदं चूर्णं रोचनं पाचनं स्मृतम्।
कासश्वासज्वरहरं छर्द्यतीसारनाशनम्॥ ११९॥
शोषाध्मानहरं प्लीहाग्रहणीपाण्डुरोगजित्।
पक्त्वा वा शर्करां चूर्णं क्षिपेत् स्याद्गुटिका ततः॥१२०॥

अथादौ सितोपलादिचूर्णम्।—

सितोपला षोड़श स्यादष्टौ स्याद्वंशरोचना।
पिप्पली स्याच्चतुष्कर्षा स्यादेला च द्विकार्षिकौ॥१२१॥

---

मतेति। एलात्वचोस्तु कर्षार्द्धमिति—एला * क्षुद्रैला, त्वक् वराङ्गं, कर्षार्द्धमिति—माषद्वयमित्यर्थः। प्रत्येकमिति—पृथगित्यर्थः। शर्करा च द्वात्रिंशत्कर्षतुलिता देया, एतेन सकलचूर्णात् द्विगुणा शर्करा भवति तौल्यत्वात् (?)। वेति पक्षान्तरेण पक्षान्तरमाह,—समं अनेन शर्करां पक्त्वा तत्र चूर्णं प्रक्षिप्य गुटिका कार्या लघुतरत्वात्; तथा हि—"कल्पयेद्गुडिकाश्चैतच्चूर्णं पक्त्वा सितोपलाम्। गुडिका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा स्मृता॥" (च० चि० राजयक्ष्मा०) इति। एतदपि वांशीं विना पच्यते; तथा च तन्त्रान्तरे—"तालीशं मरिचं शुण्ठी पिप्पल्येकांशकोत्तरा। त्वगेलार्द्धांशके दद्यात् शर्करा कुडवं भवेत्॥" (हा०) इत्यादि। अन्यत्रापि—"तालीशमरिचनागरकणाः कर्षोन्नताः क्रमात्। त्वगेले चार्द्धांशे कुडवं सिता गुडिका विपाच्य कृता॥" ( [illegible] ) इति केचित् पठन्ति। किन्तु वंशरोचना देयेति; तथा सुश्रुते—"विधियुक्ते मरिचस्थाने वंशरोचनयाऽन्वितम्" इति ग्रन्थान्तरदर्शनात्। तद्यथा—"वांशीपिप्पलिशुण्ठीना † तालीशीवचयोस्तथा। भागवृद्धिः क्रमाद्दद्यात् त्वगेले चापि चार्द्धके॥ कणात् त्वष्टगुणा चात्र प्रदेया सितशर्करा॥" इत्यादि॥ ११७—१२०॥

अथ सितोपलादिचूर्णमाह, सितोपलेति।—सितोपला शर्कराभेदः, षोडशेति

---

* एलाशब्देन क्षुद्रैलामेव व्यवहरन्ति वैद्याः सर्वत्र।

† "तालीशीवचयोः" इति पाठो न युक्तः, तालीशमरिचयोः क्रमात् द्व्यंशभागप्रसङ्गात्। "कणातालीशयोस्तथा" इति पाठस्तूत्तमं सङ्गतम्। "कणात् त्वष्टगुणा" इत्यत्र "कणातोऽष्टगुणा" इति पाठस्त्वयं सङ्गतम् इति।

एकः कर्षस्त्वचः कार्य्यश्चूर्णयेत् सर्वमेकतः।
सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत्॥ १२२॥
श्वासकासक्षयहरं हस्तपादाङ्गदाहजित्।
मन्दाग्निं सुप्तजिह्वत्वं पार्श्वशूलमरोचकम्॥
ज्वरमूर्द्धगतं रक्तपित्तमाशु व्यपोहति॥ १२३॥

गुल्मादौ भास्करलवणम्।—

सामुद्रलवणं कार्य्यमष्टकर्षमितं बुधैः।
पञ्च सौवर्चलं ग्राह्यं विड़ं सैन्धवधान्यकात्॥ १२४॥
पिप्पली पिप्पलीमूलं कृष्णजीरकपत्रकम्।
नागकेशरतालीशमम्लवेतसकं तथा॥ १२५॥
द्विकर्षमात्राण्येतानि प्रत्येकं कारयेद् बुधः।
मरिचं जीरकं विश्वमेकैकं कर्षमात्रकम्॥ १२६॥
दाड़िमं स्याच्चतुष्कर्षं त्वगेले चार्द्धकार्षिके।
एतच्चूर्णीकृतं सर्वं लवणं भास्कराभिधम्॥ १२७॥

—षोडशकर्षमिता। वंशरोचना अष्टौ स्यादिति—अष्टकर्षमिता, शेषमकर्षद्व-यात। अन्त्यात द्विगुणितत्वाभावनिर्देशोऽयम्; तथा चोक्तं—"सितोपला तुगाक्षीरी पिप्पली बहुला त्वचः। अन्त्यादूर्ध्वं द्विगुणितं लेहयेन् मधुसर्पिषा॥" (च० चि० राजयक्ष्मा०) इति। बहुला * सूक्ष्मैला। मधु सर्पिश्चात्र लेहवत् पावनतम्। हस्तपादाङ्गदाहजिदिति—तेन हस्तदाहं, पाददाहं, अङ्गदाहञ्चेति। सुप्तजिह्वत्वमिति—जिह्वारोगे पठितम्॥ १२१—१२३॥

इदानीं लवणभास्करं नाम चूर्णं प्रकटयन्नाह, सामुद्रलवणमिति।—दाक्षिण-समुद्रसमीपे भवं सामुद्रं लवणं, तच्च समटोअह्वाख्यम्, अष्टकर्षं पलद्वयम्। पञ्च सौवर्चलं ग्राह्यमिति—सौवर्चललवणं पञ्चकर्षं ग्राह्यमित्यर्थः। विड्लवणाद्यम्ल-वेतसान्तं द्विगुणकर्षप्रमाणं प्रत्येकम्। विड्लवणं कृत्रिमं, तच्च प्रसारणीकल्कभस्म-लवणसंयोगादग्निदाहेन निर्मितमित्येके। सिन्धुभवं सैन्धवम्। कृष्णजीरकं पाचाख्यं, तच्च खुरासानशब्दवाच्यम्। मरिचादिविश्वान्तं द्रव्यत्रयं कर्षं प्रत्येकमित्यर्थः। 'जीरक-

* अत्रापि स्थूलैव गृह्यते, न तु सूक्ष्मा।

ऊर्द्ध्ववातादौ व्याघ्र्यादि चूर्णम्।—

( व्याघ्रीजीरकधात्रीणां चूर्णं मधुयुतं लिहेत्।
ऊर्द्ध्ववातमहाश्वास-तमकैर्मुच्यते क्षणात्॥ )

कुष्ठादौ पञ्चनिम्बादि चूर्णम्।—

मूलं पत्रं फलं पुष्पं त्वचं निम्बात् समाहरेत्।
सूक्ष्मचूर्णमिदं कुर्य्यात् पलपञ्चदशोन्मितम्॥ १२३॥
लोहभस्म हरीतक्यौ चक्रमर्द्दकचित्रकौ।
भल्लातकं विडङ्गानि शर्करा ऽऽमलकं निशा॥ १२४॥
पिप्पली मरिचं शुण्ठी वाकुची कृतमालकः।
गोक्षुरश्च पलोन्मानमेकैकं कारयेद्बुधः॥ १२५॥
सर्व्वमेकीकृतं चूर्णं भृङ्गराजेन भावयेत्।
अष्टभागावशिष्टेन खदिरासनवारिणा॥ १२६॥
भावयित्वा च संशोष्य कर्षमात्रं ततः पिबेत्।
खदिरासनतोयेन सर्पिषा पयसाऽथवा॥ १२७॥

अधुना पञ्चनिम्बचूर्णं दर्शयन्नाह, मूलमिति।—मूलमित्यादिना निम्बस्य पञ्चाङ्गं कथितं, मूलं जटा, पत्रं पलाशं, फलमामबीजं, पुष्पं कुसुमं, त्वक् वल्ली। समाहरेदिति—सम्यक् प्रकारेण आहरेदिति यदुक्तं तत् कालविशेषं सूचयति, तथा ह—"पुष्पकाले च पुष्पाणि फलकाले फलानि च। सङ्ग्राह्यं पिचुमर्दस्य त्वङ्मूलानि दलानि च॥" इति। पत्रं मूलस्थाने सारमिति पठन्ति व्याख्यानयन्ति च, तत्र सारं मध्यभागाख्यं काष्ठविशेषम्; उक्तमन्यत्रापि—"काले त्वग्दल-सारबीजकुसुमैर्निम्बस्य तुल्यांशकैः" इत्यादि। पलपञ्चदशोन्मितमिति—मिलितपञ्चाङ्गं पञ्चदशपलपरिमितं ग्राह्यमित्यर्थः; तेन प्रत्येकं त्रिपलमितं भवति। लोहभस्मेति—मृतलोहचूर्णम्। चक्रमर्दकः प्रपुन्नाडबीजानि, आमलकमामलकीफलम्। निशा हरिद्रा। कृतमालको राजवृक्षः। एतल्लोहभस्मादि-गोक्षुरकान्तं पृथक् पलमानं ग्राह्यं, तेन निम्बचूर्णसमं भवति; एतत् सकलं चूर्णीभूतं द्रव्यं भृङ्गराजरसेन भावितं कृत्वा पश्चादष्टभागावशेषेण खदिरक्वाथेन भाव्यं, तत्पश्चादसनक्वाथेन चेति, असनः पीतशालो वृक्षविशेषः; पश्चात् संशोष्य

मासेन सर्वकुष्ठानि विनिहन्ति रसायनम्।
पञ्चनिम्बमिदं चूर्णं सर्वरोगप्रणाशनम्॥ १३८॥

वाजीकरणे शतावर्यादिचूर्णम्।—

शतावरी गोक्षुरश्च बीजञ्च कपिकच्छुजम्।
गाङ्गेरुकी चातिबला बीजमिक्षुरकोद्भवम्॥ १३९॥
चूर्णितं सर्वमेकत्र गोदुग्धेन पिबेन्निशि।
न तृप्तिं याति नारीभिर्नरश्चूर्णप्रभावतः॥ १४०॥

कर्षपरिमितं वक्ष्यमाणानुपानेन सह पिबेदित्यर्थः। अनुपानान्याह—खदिरासन-तोयेनेति—खदिरकाष्ठक्वथितेन असनकाष्ठक्वथितेन वेत्यर्थः, अथवा सर्पिषा पयसा च, अत्र दोषापेक्षा बोद्धव्या। रसायनमिति—जराव्याधिनाशकत्वेन रसायनं कथितम्। पञ्चनिम्बमिति—निम्बस्यास्थिपुष्पादिपञ्चकमेव निम्बपञ्चकं कथितम्; तथा हि—"निम्बपत्रं तथा पुष्पं त्वङ्मूलफलमुच्यते। पञ्चनिम्बमिति ख्यातं नामतः शास्त्रकोविदैः॥" इति। सर्वरोगप्रणाशनमिति—सर्वरोगा भगन्दरप्रमुखाः; तथा ह्युक्तं—"भगन्दरश्लीपदवातरक्तनाडीव्रणशीर्षरोगान्। सर्वान् प्रमेहान् प्रदरांश्च सर्वान् दंष्ट्राविषं मूलविषं निहन्ति॥ स्थूलोदरः सिंहकृशोदरः स्यात् सुश्लिष्टसन्धिर्मधुनोपयोगात्। समोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु॥ जीवेच्चिरं व्याधिजराविमुक्तः शुभे रतश्चन्द्रसमान-कान्तिः॥" इति॥ १३३—१३८॥

इदानीं वाजीकरणचूर्णद्वयमाह, शतावरीत्यादि।—कपिकच्छुजं बीजमिति—वानरीबीजम्। गाङ्गेरुकीति—नागबला, "गुड़सकरी" इति भाषाख्या। अतिबला कङ्कतिका। बीजमिक्षुरकोद्भवमिति—इक्षुरः कोकिलाक्षः, "तालमखाना" इति भाषा; एतत् सर्वं चूर्णीकृतमुक्तमानपरिमितञ्च चतुर्गुणेन गोदुग्धेन सह पिबेत्। निशि रात्रौ। वाजीकरणमिति—वाजीवात्यर्थमैथुनसामर्थ्यात् वाजीकरणं, किंवा वाजः शुक्रं तदस्यास्तीति वाजी, अवाजी वाजी क्रियते येन पुरुषस्तद्वाजी-करणम्; तदुक्तं—"येन नारीषु सामर्थ्यं वाजीवल्लभते नरः। येन वाऽप्यधिकं बीजं वाजीकरणमेव तत्॥" इति। तच्च त्रिविधं—प्रवर्तकं स्तम्भकं प्रवर्तकस्तम्भकञ्च। उक्तञ्च तन्त्रान्तरे—"शुक्रवृद्धिकरं किञ्चित् किञ्चित् शुक्रप्रवर्तकम्। स्रुतिवृद्धिकर

वाजीकरणे अश्वगन्धादिचूर्णम्।—

अश्वगन्धा दशपला तस्मात्तो वृद्धदारकः।
चूर्णीकृत्योभयं विद्वान् घृतभाण्डे निधापयेत् ॥ १४१ ॥
कर्षैकं पयसा पीत्वा नारीभिर्नैव तृप्यति।
अगत्वा प्रमदां भूयात् बलीपलितवर्जितः ॥ १४२ ॥

वाजीकरणे मुसल्यादिचूर्णम्।—

( मुसलीकन्दचूर्णन्तु गुडूचीसत्त्वसंयुतम्।
वानरीगोक्षुराभ्याञ्च शाल्मलीशर्कराऽऽमलैः॥
आलोड्य घृतदुग्धेन पाययेत् कामवर्द्धनम्॥ )

पाण्डुरोगादौ नवायसचूर्णम्।—

चित्रकस्त्रिफला मुस्तं विडङ्गं त्र्यूषणानि च।
समभागानि कार्य्याणि नव भागा हतायसः॥ १४३ ॥
एतदेकीकृतं चूर्णं मधुसर्पियुतं लिहेत्।
गोमूत्रमथवा तक्रमनुपानं प्रशस्यते ॥ १४४ ॥
पाण्डुरोगं जयत्युग्रं हृद्रोगञ्च भगन्दरम्।
शोथकुष्ठोदरार्शांसि मन्दाग्निमरुचिं क्रिमीन् ॥ १४५ ॥

---

किञ्चित् विविधं वृष्यमुच्यते॥" इति। वृष्यन्तु वाजीकरणसंज्ञम्, तथा च दुर्बलस्यापि च्युतिकरं, वीर्यादि वृद्धिकरं, भाषा जनकः प्रवर्त्तकश्च ॥ १३९।१४० ॥

द्वितीयवाजीकरणचूर्णमाह, अश्वगन्धेति।—सुबोधम्। कामशक्ति एहीन ॥ १४१।१४२ ॥

अथ नवायसं चूर्णमाह, चित्रक इति।—चित्रकश्चित्रकमूलत्वक्। त्रिफला हरीतक्यादि। त्र्यूषणं कटुत्रयम्। एतान्चित्रकादित्र्यूषणान्तं नवद्रव्यं प्रत्येकं समभागम्। नव भागा हतायस इति—हतायसो मृतलौहस्य एकद्रव्यभागापेक्षया नव भागा ग्राह्याः, तेनैकद्रव्यमितानां चित्रकादीनां चूर्णेन समभागचूर्णमित्यर्थः। मधुसर्पिषौ चात्र विषमपरिमाणयुक्ते ग्राह्ये ॥ १४३—१४५ ॥

...धिसाधनीये स्वाहा" इत्युत्पाटनमन्त्रः ।

...कुमारीजीवनीये स्वाहा" इति पानमन्त्रः ।

...ग्र्श:सु काशीशाद्यं तैलम् ।—

कासीसं लाङ्गली कुष्ठं शुण्ठी कृष्णा च सैन्धवम् ।
मनःशिलाऽश्वमारश्च विडङ्गं चित्रको द्रुमः ॥ ४४ ॥
दन्ती कोशातकीवीजं हेमाह्वा हरितालकम् ।
कल्कैः कर्षमितैरेतैस्तैलप्रस्थं विपाचयेत् ॥ ४५ ॥
स्नुह्यर्कपयसी दद्यात् पृथक् द्विपलसम्मिते ।
चतुर्गुणं गवां मूत्रं दत्त्वा सम्यक् प्रसाधयेत् ॥ ४६ ॥
कथितं खरनादेन तैलमर्शोविनाशनम् ।
क्षारवत् पातयत्येतदर्शांस्यभ्यङ्गतो भृशम् ॥
वलीन दू...त्येतत् क्षारकर्मकरं स्मृतम् ॥ ४७ ॥

कथितामत्यर्थः । अत्र क्वाथस्वरसकल्कार्थं यत् शतावरीमूलं प्रोक्तं तदनेनैव "...त्पाटनम् ; कुतः ? बन्ध्याऽपत्यादिकरणार्थं, तद्यथा—वक्ष्यमाणेनोङ्कारपूर्व-भागे...कामिन्त्र्य कृत्वा उत्तराभिमुखी भूत्वा खादिरशङ्कुना खादिरकाष्ठ-...दिके खनेत् । पश्चात् ओङ्कारबाहुतैनैकादशाक्षरमन्त्रेणोत्पाटनं कुर्य्यात् ; ...मन्त्र...य कथितः । अथ पानमन्त्रमाह, ओङ्कारयुतेन दशाक्षरेण मन्त्रेण ...मिति । एते मन्त्रा मूले प्रसिद्धाः, ते तत्र एव ज्ञातव्याः । शतावरी ...योषधिरित्यनेन याः सर्वाः शतावरीसदृश्यः ओषध्यस्ताः सर्वा एवमेव ग्राह्या ...र्थः ॥ ३५—४३ ॥

इदानीम् अपराणि क्षुद्रतैलान्याह । तत्रादौ कासीसाद्यं दर्शयन्नाह, कासीसमिति । —कासीसं द्रव्यविशेषः भस्मवदल्पमल, तद्भेदः पुष्पकासीसं किञ्चित् पीतम् । लाङ्गली कलिकारिका । कृष्णा पिप्पली । अश्वमारः करवीरकः । द्रुमः कुटजो दर्व्वीविशेषः । कोशातकी जालिनी, तस्या बीजमिति । हेमाह्वा स्वर्णक्षीरी, स तु रक्तक्षीर-सेहुण्डभेदः, यस्य मूलं "चोक" इति प्रसिद्धम् । तैलप्रस्थमिति—चतुष्कुडवम् । स्नुह्यर्कपयसी इति—स्नुही सेहुण्डः, अर्कः प्रसिद्धः, तयोः पयसी पृथक् द्विपलमितेन

अथाकारकरभादिचूर्णम्।—

आकारकरभः शुण्ठी कक्कोलं कुङ्कुमं कणा।
जातीफलं लवङ्गञ्च चन्दनञ्चेति कार्षिकान्॥ १४६॥
चूर्णानि मानतः कुर्यादहिफेनं पलोन्मितम्।
सर्वमेकीकृतं चूर्णं माषैकं मधुना लिहेत्॥ १४७॥
शुक्रस्तम्भकरं चूर्णं पुंसामानन्दकारकम्।
नारीणां प्रीतिजननं सेवेत निशि कामुकः॥ १४८॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्येण विरचितायां
शार्ङ्गधरसंहितायां मध्यखण्डे चिकित्सितस्थाने
चूर्णकल्पना नाम षष्ठोऽध्यायः॥ ६॥

---

अथाकारकरभादिचूर्णं दर्शयन्नाह, आकारकरभ इति।—"अकरकरहा" इति लोके प्रसिद्धः। कक्कोलं विख्यातम्। कणा पिप्पली। चन्दनं श्वेतम्। एतत् सर्वं कर्षोन्मितं प्रत्येकमिति। अहिफेनं पलोन्मितमिति—अहिफेनम् आफूः, "अफीम" इति लोके, पलोन्मितं पलप्रमाणं, तेन पूर्वचूर्णभागद्वयम् * अहिफेनस्य भागैकमित्यर्थः, शर्करारहितत्वात्। कुत्रचित् सितासहितमपि पठ्यते, तत्र अहिफेनपूर्वद्रव्यचूर्णसाम्यम्; तदुक्तं—"जातीफलाकरकरहाटलवङ्गशुण्ठीकक्कोल-कुङ्कुमकणाहरिचन्दनानि। एतैः समानमहिफेनममेन तुल्या सिता निधाय मधुना वटकं विदध्यात्॥ माषद्वयोन्मितमम् निशि भक्षयित्वा मिष्टं पयः कदुष्णमाहिममाशु पीत्वा। कुर्वन्तु कामुकजना न तु बिन्दुपातं चरितानि तानि चरितानि कलावतीनाम्॥" इति॥ १४६—१४८॥

इति श्रीवाक्यान्वयप्रकाशवैद्य-श्रीभारतसिंहात्मजेन [illegible] विरचितायां शार्ङ्गधर-
दीपिकायां मध्यखण्डे चिकित्सितस्थाने चूर्णकल्पनानाम षष्ठोऽध्यायः॥ ६॥

---

* अहिफेनशोधनं गूढार्थदीपिकायां यथा—"तस्य शोधनम् आर्द्रकद्रवेण गुडूची-पत्रद्रवेण वा निम्बद्रवेण वा निम्बूकद्रवेण भावनाभिः सप्तभिर्वा शोषयित्वा शोषयित्वा देयम्" इति।

# सप्तमोऽध्यायः।

---

## वटकादिकल्पना।—

वटकपर्य्यायाः।—

वटकाश्चाथ कथ्यन्ते तन्नाम गुटिका वटी।
मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते॥ १॥

वटकादीनां प्रस्तुतविधिः।—

लेहवत् साध्यते वह्नौ गुडो वा शर्करा तथा।
गुग्गुलुर्वा क्षिपेत् तत्र चूर्णं तन्निर्मिता वटी॥ २॥
कुर्य्यादवह्निसिद्धेन क्वचित् गुग्गुलुना वटीम्।
द्रवेण मधुना वाऽपि गुटिकां कारयेत् बुधः॥ ३॥

वटकादिषु शर्करादीनां मात्रा।—

सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः।
चूर्णाच्चूर्णसमः कार्य्यो गुग्गुलुर्मधु तत्समम्॥
द्रवञ्च द्विगुणं देयं मोदकेषु भिषग्वरैः॥ ४॥

---

इदानीं गुटिकाः कथ्यन्ते वटकाश्चेति।—अथेति—चूर्णकल्पनानन्तरं वटका गुटिकादिसंज्ञाः, अत एव तन्नाम गुटिकावटीप्रभृतयो ज्ञातव्याः। तन्नामेति—तस्य वटकस्य नाम पर्य्यायवाक्यं गुटिकादिकमित्यर्थः॥ १॥

अथ तेषां कर्त्तव्यविधिमाह, लेहवत् साध्यते इति।—यथा अवलेहार्थं गुडादिकं साध्यते तथैवात्र गुडः, शर्करा, गुग्गुलुर्वाऽपि पक्तव्यः, पाके सति चूर्णं प्रक्षिप्य वटकादीन् कुर्य्यादिति भावः। पक्षान्तरमाह, क्वचिदिति—न सर्वत्र, अवह्निसिद्धेन कुट्टितेन गुग्गुलुना वटकाः कार्य्याः। गुडादिकेनापि क्वचिदिति सम्प्रदायः (?), अथवा द्रवेण तोयक्षीरादिना मधुना क्षौद्रेणापि सम्पाद्य गुटिकां कारयेत् बुधः पण्डितः, अत्रापि वह्निं विनेति सम्बन्धः॥ २।३॥

इदानीमनुक्तेषु, गुडशर्करादीनां मानमाह, सितेति।—सिता शर्करा चतुर्गुणा देया चूर्णादित्यर्थः। गुडोऽथ द्विगुणः, अत्रापि चूर्णभागादिति भावः। गुग्गुलुश्च चूर्णसमः चूर्णभागसमान इत्यर्थः। मधु तत्सममिति—मधु क्षौद्रं, तत्समं चूर्णसमम्। द्रवं क्षीरतोयादिकं द्विगुणं चूर्णभागादित्यर्थः। चूर्णमत्र सकलद्रव्याणाम्। भिषग्वरैरिति पक्षेण स्वबुद्ध्या वा यथायोग्यमवधारयेदिति साम्प्रदायिकाः॥ ४॥

वटकादीनां मात्रा ।—

कर्षप्रमाणं तन्मानं बलं दृष्ट्वा प्रयुज्यते ॥ ५ ॥

स यथा—

अर्शःप्रभृतिषु श्रीबाहुशालो गुडः ।—

इन्द्रवारुणिका मुस्तं शुण्ठी दन्ती हरीतकी ।
त्रिवृच्छटी विडङ्गानि गोक्षुरश्चित्रकस्तथा ॥ ६ ॥
तेजोह्वा च द्विकर्षाणि पृथक् द्रव्याणि कारयेत् ।
शूरणस्य पलान्यष्टौ * वृद्धदारश्चतुष्पलम् ॥ ७ ॥
चतुष्पलं स्यात् भल्लातः क्वाथयेत् सर्वमेकतः ।
जलद्रोणे चतुर्थांशं गृह्णीयात् क्वाथमुत्तमम् ॥ ८ ॥

अथ भक्षणमानमनुक्तानां दर्शयन्नाह, कर्षप्रमाणमिति ।—कर्षप्रमाणं कर्षमात्रम् । तन्मानमिति—तत् तेषां वटकादीनां मानं परिमाणम् । बलमिति—देहबलं दोषबलं व्याधिबलञ्च । बलग्रहणेन कर्षमानमत्र सामान्यं सूचितम्, अत एव दृष्ट्वा विचार्य्येत्यर्थः ; विचारणाऽत्र बलवद्भ्यामेव, मध्यमानान्तु कर्षमात्रैव ॥ ५ ॥

स यथेति कथनं गुटिकासमूहपरिपाटनार्थमभिहितमाचार्य्येण । तत्रादौ श्रीबाहुशालो नाम गुडस्तं दर्शयन्नाह, इन्द्रवारुणिकेति ।—अयं बाहुशालगुडोऽर्शोव्याधौ प्रशस्तः । तत्रेन्द्रवारुणिका चिर्भटी, तस्या मूलम् । दन्ती विटपविशेषः, तस्या अपि मूलम् । हरीतकीमूलमेव । शटी कर्चूरभेदः । तेजोह्वाऽत्र चव्यं, यत्र तेजोह्वा चविका च, तत्र तेजोह्वा ज्योतिष्मती ; एवं सर्वत्र । एतत् सर्वं प्रत्येकं द्विकर्षपरिमितं भवति । शूरणस्य पलान्यष्टाविति—शूरणः कन्दविशेषः ओलः, तस्याष्टौ पलानि भवन्ति । वृद्धदारः चतुष्पलमिति—विधारभेदः तस्य चतुष्पलानि । भल्लातमिति—भल्लातकफलानि, तानि चतुष्पलमितानि भवन्ति । एतत् सकलं पानीयद्रोणे सङ्क्वाथ्य चतुर्थांशं गृह्णीयात् । जलद्रोणमिति—चतुराढकपरिमितं जलं, तेन षट्पञ्चाशीत्यधिकशतद्वयपलानि जलपरिमाणं भवति । उत्तममिति—वस्त्रगालितादिकं, तेनाच्छता क्वथितस्येत्यर्थः । चतुर्थांशमिति—आढकमात्रम् ।

* चक्रसङ्ग्रहे वृद्धदारचतुष्पलमित्यत्र वृद्धदारःपलत्रयं, दन्ती इत्यत्र कन्दः, व्योषस्थाने नागकेसरः तथा भल्लातकस्थाने मरिच इति पाठान्तराणि, तथा मधुन उल्लेखो नास्ति ।

काथ्यद्रव्यात् त्रिगुणितं गुडं क्षिप्त्वा पुनः पचेत्।
सम्यक् पक्वञ्च तं ज्ञात्वा चूर्णमेतत् प्रदापयेत् ॥९॥
चित्रकत्रिवृतादन्ती-तेजोह्वाः पलिकाः पृथक्।
पृथक् त्रिपलिकाः कार्य्या व्योषैलाऽऽमलकत्वचः ॥१०॥
निक्षिपेत् मधु शीते च तस्मिन् प्रस्थप्रमाणतः।
एवं सिद्धो भवेच्छ्रीमान् बाहुशालगुडाभिधः ॥ ११ ॥
जयेदर्शांसि सर्वाणि गुल्मं वातोदरं तथा।
आढ्यवातं प्रतिश्यायं मन्दाग्निं क्षयपीनसम् ॥
हलीमकं पाण्डुरोगं प्रमेहञ्च रसायनम् ॥ १२ ॥

कासे मरिचादिगुटिका।—

मरिचं कर्षमात्रं स्यात् पिप्पली * कर्षसम्मिता।
अर्द्धकर्षो यवक्षारः कर्षयुग्मञ्च दाडिमम् ॥ १३ ॥
एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुडेन हि।
शाणप्रमाणां गुटिकां कृत्वा वक्त्रे धारयेत् ॥
अस्याः प्रभावात् सर्व्वेऽपि कासा यान्त्येव सङ्क्षयम् ॥१४॥

काथ्यद्रव्यात् त्रिगुणितं गुडमिति—गुडमेव त्रैगुण्यं ग्राह्यम्। काथ्यद्रव्यादिति—इन्द्रवारुणिकादितेजोह्वान्तात् त्रिगुणितं त्रिभागं, एतत् गुडं पादशेषक्वाथे क्षिप्त्वा पुनः पचेत् यावत् सान्द्रो भवति। अत्र चूर्णमाह, चित्रकेत्यादि—चित्रकश्चित्रकतरुः। त्रिवृत् निशोत्तम। दन्ती प्रसिद्धा। तेजोह्वा चवी। एतेषां द्रव्याणां पलप्रमाणम्। अन्यदप्याह, व्योषैलाऽऽमलकत्वच इत्यादि—व्योषं त्रिकटुकम्। त्वक् गुडत्वक्। इदमपि द्रव्यषट्कं त्रिपलप्रमाणं प्रत्येकम्। श्रीमान् बाहुशालो गुड एवं सिद्धो भवति, बाहुशाल आचार्यास्तैः प्रणीत निर्मितो गुड बाहुशालक इत्यर्थः। आढ्यवात ऊरुस्तम्भमाह। सन्ताप [illegible] प्रवलमित्यर्थः। रसायन इति प्रभावात्; तत् यथा—“यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्” इति ॥ ८—१२ ॥

इदानीं मरिचादिगुटिकां दर्शयितुं [illegible]। अत्र दाडिमं दाडिमफलत्वगिति [illegible] —अत्र वङ्गधारणात्

* “पिप्पल्याः कर्षार्द्धम्” तथा “दाडिमस्य फलम्” इति वङ्गवाग्भटौ

आमकासे गुडादिवटिका।—

गुडशुण्ठीशिवामुस्तैर्गुटिकां धारयेन्मुखे।
श्वासकासेषु सर्व्वेषु बिभीतं वाऽपि केवलम् ॥१५॥

तृष्णायाम आमलकादिगुटिका।—

आमलं कमलं कुष्ठं लाजाश्च वटरोहकः।
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे ॥
तृष्णां प्रवृद्धां हन्त्येषा मुखशोषञ्च दारुणम् ॥ १६ ॥

अजीर्णादौ सञ्जीवनीवटी।—

विडङ्गं नागरं कृष्णा पथ्याऽऽमलबिभीतकम्।
वचा गुडूची भल्लातं भद्विषञ्चात्र योजयेत् ॥ १७ ॥
एतानि समभागानि गोमूत्रेणैव पेषयेत्।
गुञ्जाभा गुटिका कार्य्या दद्यादार्द्रकजै रसैः ॥ १८ ॥
एकामजीर्णगुल्मेषु द्वे विसूच्यां प्रदापयेत्।

इदमौषधं धूमवदासत्याहुरेके। चक्रेण तु स्वसङ्ग्रहे एतत् चूर्णं वक्ष्यमाणं गुड इत्यादि- सूत्रोक्तं, वटीरूपं धारणादिति प्रभावे लिखितम्। वैद्यप्रसारकेऽपि गुटिकास्वरूप- मस्यामभ्युक्तम्, एतदामपायित्वात् लिखितम्। अस्या मरिचादिकाया वटिकायाः प्रभावादनन्यशक्ता। सर्वे कासा इति—पञ्चप्रकाराः ॥ १३।१४ ॥

गुडशुण्ठीति।—स्पष्टम् ॥ १५ ॥

अथामलक्यादिगुटिकामाह, आमलमिति।—आमलमामलकफलम्। कमल- मुत्पलं, तदभावे कमलबीजानि ग्राह्याणि। लाजाः भृष्टधान्योद्भवाः। वटरोहक इति—वटवृक्षप्ररोहः, स च वटरोहशब्दवाच्यः। मध्वेव गुटिकाकरणे मानं परि- भाषोक्तम्। धारयेन्मुखे इति—एतेन यथा यथा गुटिका द्रवति, तथा तथा गीलनीया, पुनरिमां सहसैवाभ्यवहरेदिति द्रष्टव्यम्। प्रवृद्धामिति—कैरपि योगैरनिवार्य्याम्। मुखशोषञ्च दारुणमिति—दारुणं दुःखकरम्, हन्तीत्यन्वयः ॥१६॥

अथ सञ्जीवनीगुटिकां दर्शयन्नाह, विडङ्गमिति।—अत्र नागरं शुण्ठी। कृष्णा पिप्पली। पथ्या हरीतकी। आमलमामलकफलम्। भल्लातं भल्लातकफलम्। भद्विषमिति—शुद्धं विषम्। एतेषां समानमात्रा बोद्धव्या। गोमूत्रेणैव गुटिकार्थं परिगतम्। गुञ्जाभा गुञ्जापरिमाणा वटी कार्य्या। आर्द्रकरसोऽत्रानुपानम्।

तिस्रश्च सर्पदष्टे तु चतस्रः सान्निपातिके ॥
वटी सञ्जीवनी नाम्ना सञ्जीवयति मानवम् ॥ १९ ॥

पीनसादौ व्योषादिगुटिका ।—

व्योषाम्लवेतसं चव्यं तालीशं चित्रकं तथा ।
जीरकं तिन्तिडीकञ्च प्रत्येकं कर्षभागिकम् ॥ २० ॥
त्रिसुगन्धं त्रिशाणं स्याद्गुडः स्यात् कर्षविंशतिः ।
व्योषादिगुटिका सेयं पीनसश्वासकासजित् ॥
रुचिस्वरकरी ख्याता प्रतिश्यायप्रणाशिनी ॥ २१ ॥

आमादौ गुडशुण्ठ्यादियोगचतुष्टयम् ।—

आमेषु सगुडां शुण्ठीमजीर्णे गुडपिप्पलीम् ।
कृच्छ्रे जीरगुडं दद्यादर्शःसु सगुडाभयाम् ॥ २२ ॥

अजीर्णगुल्मयोरेकैका वटी देया, विसूच्यां द्वे वट्यौ, सर्पदष्टे तिस्रो गुटिकाः, सन्निपाते चतस्र [illegible]। नाम्ना कृत्वा सञ्जीवनी कथिता, यतोऽस्याः प्रभावान्मानवो यदा मुमूर्षुस्तदा जीवतीति । विचारणाऽत्र न कार्या, "अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः" इति वचनात् ॥ १७—१९ ॥

इदानीं व्योषादिगुटिकामाह, व्योषेति ।—व्योषमत्र त्रिकटुकम् । अम्लवेतसं प्रसिद्धम् । चव्यं चविशब्दवाच्यम् । तालीशं स्वनामख्यातम् । तिन्तिडीकमिति—अम्लफलद्रव्यम् । त्रिसुगन्धं त्रिशाणमिति—एला त्वक् पत्रकं, तच्च मिलितं त्रिकं, न तु प्रत्येकम् । व्योषादितिन्तिडीकान्तं द्रव्यञ्च प्रत्येकं कर्षमात्रमित्यर्थः । गुडः स्यात् कर्षविंशतिरिति—गुडोऽत्र पुरातनो ग्राह्यः, कर्षविंशतिरिति—पञ्चपलानि, तेन सकलद्रव्यात् द्विगुणितो गुड इत्यर्थः ; तथा हि—"व्योषाचव्यकतालीशतिन्तिडीकाम्लवेतसम् । सचव्याजाजीतुल्यांशमेलात्वक्पत्रपादिकम् ॥ व्योषादिकमिदं चूर्णं पुराणगुडसंयुतम् ॥" इति ॥ २०।२१ ॥

अथ गुडचतुष्टयगुटिकां व्याचष्टे, आमेष्विति ।—गुडचतुष्टयगुटिका इति कोऽर्थः ? गुडेन सह चत्वारो योगाः कथिता इत्यर्थः । तद्यथा—आमेषु सगुडां शुण्ठीमित्येको योगः, आमेषु आमदोषेषु सगुडामिति—अत्र * गुडद्विगुणम्, एवं योगचतुष्टयेषु

* गुडोऽत्र तुल्य इति गूढार्थदीपिका ; चूर्णत्वात् युक्तमेतत् ।

अर्शःसु वृद्धदारकादिमोदकः ।—

वृद्धदारकभल्लात-शुण्ठीचूर्णेन योजितः ।
मोदकः सगुडो हन्यात् षड्विधार्शःकृतां रुजाम् ॥ २३ ॥

अर्शःसु शूरणपिण्डी ।—

शुष्कशूरणचूर्णस्य भागान् द्वात्रिंशदाहरेत् ।
भागान् षोडश चित्रस्य शुण्ठ्या भागचतुष्टयम् ॥ २४ ॥
द्वौ भागौ मरिचस्यापि सर्वाण्येकत्र चूर्णयेत् ।
गुडेन पिण्डिकां कुर्य्यादर्शसां नाशनीं पराम् ॥ २५ ॥

अर्शःसु शूरणवटकः ।—

शूरणो वृद्धदारश्च भागैः षोड़शभिः पृथक् ।
मुशलीचित्रकौ ज्ञेयावष्टभागमितौ पृथक् ॥ २६ ॥

षोडश्यन । पञ्चोर्णं गुडपिप्पलीमिति द्वितीयः ; पञ्चोर्णे विष्टम्भादिके । कफे क्षीर-गुडं दद्यादिति तृतीयो योगः ; कफे मूत्रकृच्छ्रे । अर्शःसु च सगुडामभयामिति चतुर्थो योग इति ॥ २२ ॥

इदानीं वृद्धदारकमोदकमाह, वृद्धदारकेति ।—वृद्धदारको विख्यातः, तदभावे मिश्रेता ग्राह्या, यतोऽस्या भेदो वृद्धदारक इति । एतेषां द्रव्यत्रयाणां चूर्णं समभाव-माहुः । सगुड इति—अत्र मोदकत्वेन गुडो द्विगुणितो ज्ञेयः ; केचित् नाद्रियन्ते, तत्सत्त्व चतुःसमवद्वर्णेन सम एव गुडो युज्यते, माध्येनापि किञ्चित् द्रवं दत्त्वा पश्चा मोदकाः कार्य्याः । रुजामिति—पीडाम ॥ २३ ॥

अथ शूरणपिण्डीमाह, शुष्कशूरणेति ।—शूरणः कन्दविशेषः प्रसिद्धः, तस्य शुष्कं कृत्वा चूर्णं कार्य्यं, द्वात्रिंशद्भागाः पञ्चदशभागाः (?) शूरणस्येत्यर्थः, चित्रकस्य चित्रक-मूलस्य त्वचः षोडशभागाः, शुण्ठ्याश्चत्वारो भागाः, मरिचस्य द्वौ भागौ गुड़ेन पिण्डिकां कुर्य्यादिति—सकलद्रव्यद्विगुणितेनेत्यर्थः । अर्शसामिति बहुवचनत्वेन षड्विधत्व-मित्यर्थः । परामित्यनेन विशिष्टत्वमस्या दर्शितम ॥ २४।२५ ॥

अथ शूरणवटकमाह, शूरण इति ।—शूरणः शुष्कशूरणचूर्णं, तस्य षोडशकर्ष-प्रमाणम् । वृद्धदारकोऽप्येवम् । मुशली तालमूली, मुषलीसञ्ज्ञकाख्या, सा अष्टकर्ष-

शिवा विभीतकी धात्री विडङ्गं नागरं कणा ।
भल्लातः पिप्पलीमूलं तालीशञ्च पृथक् पृथक् ॥ २७ ॥
चतुर्भागप्रमाणानि त्वगेला मरिचं तथा ।
पृथक् द्विभागमात्राणि ततस्तेनैव चूर्णयेत् ॥ २८ ॥
द्विगुणेन गुडेनाथ वटकान् कारयेद्बुधः ।
प्रज्वलाग्निकरा एते तथार्शोनाशना पराः ॥ २९ ॥
ग्रहणीं वातकफजां श्वासं कासं क्षयामयम् ।
प्लीहानं श्लीपदं शोथं प्रमेहञ्च भगन्दरम् ॥
निहन्युः पलितं वृद्धाः (?) तथा मेध्या रसायनाः ॥३०॥

कामलादौ मण्डूरवटकः ।—

त्रिफला त्र्यूषणं चव्यं पिप्पलीमूलचित्रकौ ।
दारु माक्षिकधातुश्च दार्वी मुस्तं विडङ्गकम् ॥ ३१ ॥
प्रत्येकं कर्षमात्राणि सर्वद्विगुणितं तथा ।
मण्डूरं चूर्णयेच्छुद्धं गोमूत्रेऽष्टगुणे क्षिपेत् ॥ ३२ ॥

शिवेति: अभया । त्रिवृत्कमदोमूर्धमप्यसमेव । शिवादितालीशान्तं नवद्रव्यं प्रत्येकं चतुःकर्षमितम् ; तत्र शिवा हरीतकी । धात्री आमलकी । कणा पिप्पली । भल्लातः भल्लातकफलानि । तालीशं पत्रकम् । त्वगेलामरिचमपि द्विकर्षमात्रं प्रत्येकम् । तेनैव चूर्णयेदित्यनेन चूर्णोक्तविधिना चूर्णयेदित्यर्थः । द्विगुणेन गुडेनेति —सकलचूर्णात् गुडो द्विगुणितो ग्राह्यः । ग्रहणीं वातकफजामिति —वातजां कफजां वातकफजां वा । क्षयामयं क्षयरोगम् । पलितं वार्द्धकम् । वृद्धा एके वृद्धा इति स्थाने * तुष्ट्या इति पठन्ति व्याख्यानयन्ति च । मेध्या इति—बुद्धिप्रदाः । रसायना इति—जराव्याधिविध्वंसकाः ॥ २९—३० ॥

इदानीं मण्डूरवटकानाह, त्रिफलेति ।—त्रिफला हरीतक्यादिकम् । त्र्यूषणं त्रिकटुकम् । दारु देवदारु । माक्षिकधातुः स्वर्णमाक्षिकम् । दार्वी दारुहरिद्रा । एके "दारुमाक्षिकधातुस्त्वक् दार्व्या मुस्तं विडङ्गकम्" इति पठन्ति ; तत्र दारुहरिद्रायाः

* तुष्ट्या इति पाठ एव युक्तियुक्तः तस्यान्तरदर्शनात् वृद्धा इति पाठस्य निरर्थकत्वाच्च ।

पक्त्वा च वटकान् कृत्वा दद्यात्तक्रानुपानतः।
कामलापाण्डुमेहार्शः-शोथकुष्ठकफामयान्॥
ऊरुस्तम्भमजीर्णञ्च प्लीहानं नाशयेदपि॥ ३३॥

विषमज्वरादौ पिप्पलीमोदकः।—

( क्षौद्राद्द्विगुणितं सर्पिर्घृताद्द्विगुणपिप्पली।
सिता द्विगुणिता तस्याः क्षीरं देयं चतुर्गुणम्॥
चातुर्जातं क्षौद्रतुल्यं पक्त्वा कुर्य्याच्च मोदकान्।
धातुस्थांश्च ज्वरान् सर्वान् श्वासं कासञ्च पाण्डुताम्॥
धातुक्षयं वह्निमान्द्यं पिप्पलीमोदको जयेत्॥ )

---

त्वगेव ग्राह्या श्रेष्ठत्वात्, काष्ठं त्वगभावे गृह्यते, न तु त्वक्‌शब्देन गुडत्वक् ग्राह्या, यतस्तन्त्रान्तरे चतुर्दशद्रव्यं मिलितम्। सर्वाद्द्विगुणितं मण्डूरमिति—समस्तमिलितात् त्र्यूषणादिद्रव्यचूर्णात् मण्डूरचूर्णं द्विगुणं देयमित्यर्थः; मण्डूरं लौहकिट्टं, लौहमलमित्यर्थः। यद्वा—पुराणमण्डूरमिति विख्यातं गुणाधिक्यात्; तथा हि—"शताब्दमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम्। अधमं षष्टिवर्षीयं ततो हीनं विषोपमम्॥" इति। केचित् लौहकिट्टात् पृथक् पार्थिवद्रव्यं मण्डूरमिति वदन्ति। शुद्धमिति, मण्डूरमित्यर्थः, "मण्डूरं चूर्णितं शुद्धम्" इति वचनात्। अत्र चूर्णमञ्जनसदृशं चूर्णीभूतम् एतादृशमेव श्रेष्ठं भवति। शुद्धमिति—वह्निना सन्तप्य गोमूत्रे निर्वापणादिना शुद्धः; अत एवोक्तं तन्त्रान्तरे—"निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते" इति। कर्त्तव्यतास्य—मण्डूरचूर्णमेव पृथक् गोमूत्रं पक्त्वा, आसन्नपाके च तस्मिन् त्रिफलादिचूर्णप्रक्षेपः, यतः चूर्णानां पाको नाप्नोति; अत्रार्थे कश्चित् श्लोकः—"प्रायो न पाकयुक्तानां भूरिचूर्णस्य तत्र हि। आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागतेः॥" पाकलक्षणमपि प्रसङ्गतो लिख्यते यथा—"रसो गन्धः शुभः पाके वर्त्तिः स्याद्गाढमर्दनात्" इति। अष्टगुणे गोमूत्रे इति—मूत्रम् मण्डूरादष्टगुणं भवति; तथा हि—"ग्राह्यं त्वष्टगुणं मूत्रं शुद्धमण्डूरचूर्णतः" इति। एके "मण्डूरं चूर्णयेत् सर्वं गोमूत्रेऽष्टगुणे क्षिपेत्" इति पठन्ति, तत्र सकलद्रव्यादष्टगुणं गोमूत्रं ग्राह्यम्; एतदसङ्गतम्, अयं पाठो बहुपुस्तकेषु न दृष्टः। कफामयानिति—श्वयथुकासप्रभृतीन्॥ ३१—३३॥

प्रमेहादौ चन्द्रप्रभागुग्गुलुः।—

चन्द्रप्रभा वचा मुस्तं भूनिम्बामृतदारुकम्।
हरिद्राऽतिविषा दार्वी पिप्पलीमूलचित्रकौ॥ ३४॥
धान्यकं त्रिफला चव्यं विडङ्गं गजपिप्पली।
व्योषं माक्षिकधातुश्च * द्वौ क्षारौ लवणत्रयम्॥ ३५॥
एतानि शाणमात्राणि प्रत्येकं कारयेत् बुधः।
त्रिवृद्दन्ती पत्रकञ्च त्वगेला वंशरोचना॥ ३६॥
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान्।
द्विकर्षं हतलौहं स्याच्चतुष्कर्षा सिता भवेत्॥ ३७॥
शिलाजत्वष्टकर्षं स्यात् † अष्टौ कर्षाश्च गुग्गुलोः।
एभिरेकत्र सङ्क्षुण्णैः कर्त्तव्या गुटिका शुभा॥ ३८॥
चन्द्रप्रभादि विख्याता सर्वरोगप्रणाशिनी।
प्रमेहान् विंशतिं कृच्छ्रं मूत्राघातं तथाऽश्मरीम्॥ ३९॥

इदानीं चन्द्रप्रभागुटिकां दर्शयन्नाह, चन्द्रप्रभेत्यादि।—‡चन्द्रप्रभा कर्पूरः; एके चन्द्रप्रभाशब्देन शटीं शतावरीं वा कथयन्ति संज्ञाशब्दत्वात्। भूनिम्बः कैरातः। अमृता गुडूची। दारुकं देवदारु। क्वचित् § "भूनिम्बामरदारुकम्" इति पाठो युक्तः, तत्रामरदारु देवदारु। दार्वी दारुहरिद्रा। व्योषं त्रिकटुकम्। माक्षिकधातुः स्वर्णमाक्षिकम्। द्वौ क्षाराविति—सर्जिकाक्षारयवक्षारौ। लवणत्रयमिति—सैन्धवं सौवर्चलं विड़ं लवणत्रयम्। त्रिवृत्त्रिपुटा। दन्तीति—दन्तीमूलत्वक्; तदभावे दन्तीबीजान्यपि मनाक् दद्यात् इति केषाञ्चित् सम्प्रदाये, न सर्वत्र। हतलौहं भस्मीकृतलौहचूर्णम्। शिलाजतु प्रसिद्धं, तच्चात्र शुद्धं ग्राह्यं, शुद्धि रस्यान्यत्र ज्ञातव्या विस्तरेण। शेषं द्रव्यं सुबोधम्। मात्राऽपि चैतस्या व्यक्ता

* रसेन्द्रे क्षारलवणयोरेकैकत्वं पठितं, तथा च "लवणक्षारनिर्युगम्" इति।

† रसेन्द्रे गुग्गुलोः कर्षद्वयमात्रा निर्दिष्टा।

‡ चन्द्रप्रभा इत्यस्य कर्पूरार्थः कुत्रापि कोषादौ न दृश्यते। रसेन्द्रे शटी पाठः।

§ अमरदारुकमित्येव पाठो युक्तः, रसेन्द्रे सुरदारुपाठदर्शनात् गुडूचीशब्दादर्शनाच्च।

विबन्धानाहशूलानि मेहनं ग्रन्थिमर्बुदम् ।
अन्त्रवृद्धिं कटीशूलं श्वासं कासं विचर्च्चिकाम् ॥ ४० ॥
अण्डवृद्धिं तथा पाण्डुं कामलाञ्च हलीमकम् ।
कुष्ठान्यर्शांसि कण्डूञ्च प्लीहोदरभगन्दरम् ॥ ४१ ॥
दन्तरोगं नेत्ररोगं स्त्रीणामार्त्तवजां रुजम् ।
पुंसां शुक्रगतान् दोषान् मन्दाग्निमरुचिं तथा ॥ ४२ ॥
वायुं पित्तं कफं हन्यात् बल्या वृष्या रसायनी ।
चन्द्रप्रभायां कर्षन्तु चतुःशाणो विधीयते ॥ ४३ ॥

गुल्मादौ काङ्कायनगुडिका ।—

* यमानी जीरकं धान्यं मरिचं गिरिकर्णिका ।
अजमोदोपकुञ्ची च चतुःशाणाः पृथक् पृथक् ॥ ४४ ॥
हिङ्गु षट्शाणिकं कार्य्यं क्षारौ लवणपञ्चकम् ।

---

सुबोधा ज्ञातव्या । चन्द्रप्रभादिविख्यातेति—चन्द्रप्रभेयं वटी आदिविख्याता पूर्वं प्रसिद्धेत्यर्थः, चन्द्रप्रभेवेत्यर्थः, अस्याः सततान्यासाच्चन्द्रस्येव प्रभा कान्ति-र्भवतीति, यद्वा, चन्द्रप्रभा नाम द्रव्यमादिर्यस्याः । सर्व्वरोगानिति—सर्व्वमिदं रोग जातमुक्तरोगसमूहात्, तमपि नाशयितुं योग्या भवतीति भावः । कृच्छ्रं मूत्र-कृच्छ्रम् । विबन्धो वातादीनामप्रवृत्तिः । आनाह उदरापूरः । मेहनमिति मृहणे-नेवापदंशशुक्रदोषादयोऽभिधीयन्ते । बल्या बलकरी । वृष्या शुक्रवृद्धिकरी । रसायनी जराव्याधिविनाशिनीत्यनेन पौनरुक्त्येन प्रभावोत्कृष्टत्वमस्या दर्शितम् । "चन्द्र-प्रभाया कर्षन्तु चतुःशाणो विधीयते" इति पादद्वयं क्षेपकमामनन्ति केचित ॥ ३४—४३ ॥

अथ काङ्कायनगुटिकाविवरणमाह, यमानीति ।—अत्र †गिरिकर्णिका "गाणियारी" शब्दवाच्या, लोके "इस्फन्द" इति प्रसिद्धः । उपकुञ्ची कृष्णजीरकः ।

---

* चक्रदत्तरसेन्द्रसाराद्युक्तकाङ्कायनेन सह एतस्य महानन्तरो दृश्यते ।

† गिरिकर्णिकाशब्दः श्वेतापराजितार्थे आस्फोतार्थे च आयुर्वेदटीकाकारैः व्यवह्रियते । वङ्गदेशे गाणियारीशब्दः अग्निमन्थगणिकारिकादिशब्दानामपभ्रंशार्थे प्रसिद्धः, न तु गिरिकर्णिकायाः, मन्ये आस्फोता एव टीकाकारस्य देशे "गाणियारी" "इस्फन्द" इति भाषया प्रसिद्धा इति ।

त्रिवृच्चाष्टमितैः शाणैः प्रत्येकं कल्पयेत् सुधीः ॥ ४५ ॥
दन्ती शटी पौष्करञ्च विडङ्गं दाडिमं शिवा।
चित्रोऽम्लवेतसः शुण्ठी शाणैः षोडशभिः पृथक् ॥ ४६ ॥
बीजपूररसेनैषां गुटिकां कारयेद्बुधः।
घृतेन पयसा मद्यैरम्लैरुष्णोदकेन वा ॥ ४७ ॥
पिवेत् काङ्कायनप्रोक्तां गुटिकां गुल्मनाशिनीम्।
मद्येन वातिकं गुल्मं गोक्षीरेण च पैत्तिकम् ॥ ४८ ॥
मूत्रेण कफगुल्मञ्च दशमूलैस्त्रिदोषजम्।
उष्ट्रीदुग्धेन नारीणां रक्तगुल्मं विनाशयेत् ॥
हृद्रोग ग्रहणीं शूलं क्रिमीनर्शांसि नाशयेत् ॥ ४९ ॥

आमवाते योगराजगुग्गुलुः।—

नागरं पिप्पली चव्यं पिप्पलीमूलचित्रकौ।
भृष्टं हिङ्ग्वजमोदा च सर्षपो जीरकद्वयम् ॥ ५० ॥

हिङ्ग्वत्र भर्जितं देयम्। क्षाराविति—यवक्षारः स्वर्जिकाक्षारः। लवणपञ्चकं प्रसिद्धम्। त्रिवृन्निशोतः। दन्ती प्रसिद्धा। शटी कर्चूरभेदः। पौष्करं पुष्करमूलं, तदभावे कुष्ठमेव। दाडिमं दाडिमबीजम्। शिवाऽत्र हरीतकी। चित्रश्चित्रकजटा। एतेषाम् उक्तमानतुलितानां चूर्णं कृत्वा गुटिकाकरणार्थं परिमितेन बीजपूररसेनाप्लाव्य मोदकाः कार्य्याः। घृताद्यनुपानं सामान्यमुक्त्वा विशेषानुपानं मद्यादिकं यदुक्तं तत् विशिष्टरोगनिवृत्त्यर्थं, न दोषः पौनरुक्ततया। मूत्रमत्र गोमूत्रम्। दशमूलैरिति—क्वथितदशमूलजलैः। काङ्कायनप्रोक्तामिति—काङ्कायनाचार्य्येण प्रोक्तां कथितां गुटिकामित्यर्थः। तन्त्रान्तरे गुटिकेयमर्शोविनाशिनी विहिता; तथा हि—*"काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभावना। कथितो वटको ह्येषः गुदजानां विनाशनः ॥" इति ॥ ४४—४९ ॥

अथ योगराजगुग्गुलुवटकमाह, नागरमिति।—नागरं शुण्ठी। भृष्टं हिङ्ग्विति—भर्जितं हिङ्गु देयम्, उत्क्लेदभयात्; यतः,—"चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत्" (शा० मध्य० ६ अ०) इति। अजमोदाऽत्र यमानी ग्राह्या, अन्तःपरि-

* श्लोकोऽयं चक्रदत्ते अर्शोऽधिकारोक्तकाङ्कायनमोदके विद्यते, तत्र च उत्तरार्द्धे "भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम्" इति पाठः। उक्तकाङ्कायनमोदकेन सह एतस्याः काङ्कायनगुडिकाया महान् भेदः।

रेणुकेन्द्रयवाः पाठा विडङ्गं गजपिप्पली ।
कट्‌काऽतिविषा भार्गी वचामूर्वे त्रिभागतः ॥ ५१ ॥
प्रत्येकं शाणकानि स्युर्द्रव्याणीमानि विंशतिः ।
द्रव्येभ्यः सकलेभ्यश्च त्रिफला द्विगुणा भवेत् ॥ ५२ ॥
एभिश्चूर्णीकृतैः सर्वैः समो देयश्च गुग्गुलुः ।
वङ्गं रौप्यञ्च नागञ्च लौहसारस्तथाऽभ्रकम् ॥ ५३ ॥
मण्डूरं रससिन्दूरं प्रत्येकं पलसम्मितम् ।
गुड़पाकसमं कृत्वा इमं दद्याद्यथोचितम् ॥ ५४ ॥
एकपिण्डं ततः कृत्वा धारयेत् घृतभाजने ।
गुटिकाः शाणमात्रास्तु कृत्वा ग्राह्या यथोचिताः ॥ ५५ ॥
गुग्गुलुर्योगराजोऽयं त्रिदोषघ्नो रसायनः ।
मैथुनाहारपानानां त्यागो नैवात्र विद्यते ॥ ५६ ॥

मार्जनत्वात् । क्षीरकद्वयमिति—श्वेतकृष्णभेदेन द्विविधम् । रेणुका प्रसिद्धा । गजपिप्पली चव्यफलम् । मूर्वा चोरस्नायुः । शेषं प्रसिद्धम् । एतत् विंशतिसङ्ख्यकं द्रव्यगणं विंशति शाणतुलितमित्यर्थः, प्रत्येकं टङ्कमितमाहुः । सकलद्रव्येभ्यस्तु त्रिफलाचूर्णं द्विगुणितं देयं, तच्च चत्वारिंशत् शाणमितमित्यर्थः । त्रिफलाऽप्यत्र सममात्रा बोद्धव्या, गणनायां तुलनायां वा साम्यत्वमस्याः । सर्वसमो गुग्गुलुर्देय इति—तेन षष्टिशाणमितो गुग्गुलुर्भवति । एकपिण्डमित्यादिवाक्येनास्य करणार्थं यावता पिण्डीभूतं स्यात् तावत्परिमाणेन घृतं ग्राह्यमिति वृद्धानां व्यवहारोऽस्ति । पिण्डमत्र कुट्टननिर्घातादिना, तत एव घृतभाजने धारयेत्, अतिस्निग्धत्वात् । गुटिकाः शाणमात्रास्त्विति—यद्यपि शाणपरिमिता गुटिका भवति, तथापि भक्षणविधौ यथोचिता ग्राह्या, तेन दोषादिकं वीक्ष्य देया इति तात्पर्यार्थः ; तथा ह्युक्तं— "चत्वारो माषका हीने मध्ये त्वष्टौ च माषकाः । श्रेष्ठे द्वादशकाः प्रोक्ताः कोष्ठं विज्ञाय तत्र विधा ॥" इति ; यद्वा—शोधनार्थश्च गुग्गुलोः कर्षः शमनार्थं तु माषचतुष्टय इति व्यवहारः । मैथुनाहारपानानामित्यादि—अस्याभ्यासे मैथुनादयो न त्याज्याः, मैथुनं स्त्रीसेवा ।* एके "मैथुनाहारपानाभ्यां प्रयोजनञ्चात्र विद्यात्"

* "एके" इत्यारभ्य "शरदि क्षरम्" इति यावत् व्याख्यानम् अस्वकृतम-प्रासङ्गिकञ्च ।

सर्वान् वातामयान् कुष्ठानर्शांसि ग्रहणीगदम्।
प्रमेहं वातरक्तञ्च नाभिशूलं भगन्दरम्॥ ५७॥
उदावर्त्तं क्षयं गुल्ममपस्मारमुरोग्रहम्।
मन्दाग्निं श्वासकासञ्च नाशयेदरुचिं तथा॥ ५८॥
रेतोदोषहरः पुंसां रजोदोषहरः स्त्रियाम्।
पुंसामपत्यजनको वन्ध्यानां गर्भदस्तथा॥ ५९॥
रास्नादिक्वाथसंयुक्तो विविधं हन्ति मारुतम्।
काकोल्यादिशृतात् पित्तं कफमारग्वधादिना॥ ६०॥
दार्वीशृतेन मेहांश्च गोमूत्रेण च पाण्डुताम्।
मेदोवृद्धिञ्च मधुना कुष्ठं निम्बशृतेन च॥ ६१॥
छिन्नाक्वाथेन वातास्रं शोथं शूलं कणाशृतात्।
पाटलाक्वाथसहितो विषं मूषिकजं जयेत्॥ ६२॥
त्रिफलाक्वाथसहितो नेत्रार्त्तिं हन्ति दारुणाम्।
पुनर्नवादिक्वाथेन हन्यात् सर्वोदराण्यपि॥ ६३॥

---

इति पठन्ति, एतत् सङ्गतं, तेन मैथुनादयो बाहुल्यमात्रं भवन्तीत्यर्थः। किन्तु उच्यते यतः,—"आहारमस्य नृणां दोषधात्वबलोचितम्। बुभुक्षितो नानपानमद्यादङ्गगुणसेवकः॥" इत्यादिवचनात् उचितं यथा मैथुनमपि; तथा हि—"सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे। त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः॥ प्रकामञ्च निषेवेत मैथुनं शिशिरागमे। शीते रात्रौ दिवा ग्रीष्मे प्रावृड्वर्जितवर्षणे। वसन्ते च दिवा रात्रौ ना स्मरेत् शरदि स्मरम्॥" इति। अस्यानुपानविशेषमाह, रास्नादिक्वाथसंयुक्त इत्यादि।—रास्नादिक्वाथः क्वाथकल्पनायां कथितः, स च बृहद्रास्नादिर्लघुर्वा। काकोल्यादि चूर्णकल्पनायां ज्ञातव्यः, तच्च जीवनीयादिगणसंज्ञम्, अस्य शृतेन क्वाथेनेत्यर्थः। आरग्वधादिनेति—आरग्वधादिगणक्वाथेनेत्यर्थः; अयमपि क्वाथकल्पनायाम्। दार्वीशृतेनेति—दार्वी दारुहरिद्रा, तस्याः शृतेन क्वाथेन। गोमूत्रेण च पाण्डुतामिति—अजाजं वा मूत्र प्रशस्तं व्यवहारात्। मधुना क्षौद्रेण। निम्बशृतेनेति—निम्बक्वाथेनेत्यर्थः। छिन्ना गुडूची, तस्याः क्वाथेन। पाटला प्रसिद्धा, तस्याः मूलत्वक् ग्राह्या। त्रिफला हरीतक्यादिकम्। पुनर्नवादिक्वाथः क्वाथकल्पनायां प्रसिद्धः॥ ५०—६३॥

वातरक्तादौ कैशोरगुग्गुलुः।—

त्रिफलायास्त्रयः प्रस्थाः प्रस्थैका चामृता भवेत्।
सङ्कुट्य लौहपात्रेण सार्द्धं द्रोणाम्बुना पचेत्॥ ६४॥
जलमर्द्धशृतं ज्ञात्वा गृह्णीयाद्वस्त्रगालितम्।
ततः क्वाथे क्षिपेच्छुद्धं गुग्गुलुं प्रस्थसम्मितम्॥ ६५॥
पुनः पचेदयःपात्रे दर्व्या सङ्घर्षयेन्मुहुः।
सान्द्रीभूतं ततो ज्ञात्वा गुडपाकसमाकृतिम्॥ ६६॥
चूर्णीकृत्य ततस्तत्र द्रव्याणीमानि निक्षिपेत्।

---

अधुना कैशोरगुग्गुलुवटकामाह, त्रिफलाया इत्यादि।—सम्मिलितत्रयस्य त्रय एव प्रस्थाः, तेन द्वादशकुडवा इत्यर्थः। प्रस्थैका चामृता भवेत् इति—अमृता गुडूची, तस्याः प्रस्थैकम्, एके "द्विप्रस्थममृता भवेत्" इति पठन्ति; अयमपि पाठः प्रचरति आदृतत्वात् ग्रन्थान्तरदर्शनाद्वा; तथा च * "द्वात्रिंशच्छिन्नरुहायाः पलानि देयानि यत्नतः" इति। सङ्कुट्येति त्रिफलागुडूचीमित्यर्थः। द्रोणाम्बुना पचेदिति—एतद्द्रव्यं चतुराढकपरिमितेन जलेन सार्द्धं परिपचेदिति क्वाथविधानेन, क्वाथार्द्धावशेषं शृतं वस्त्रगालितं गृह्णीयात्। अपरकार्य्यमाह, शुद्धं गुग्गुलुमित्यादि—शुद्धताऽस्य निष्पत्रादित्वेन सभरावं कृशोषितत्वात्; यद्वा, शुद्धं चात्युत्कृष्टमित्यामनन्ति, यतः गुग्गुलोः पञ्चजातयः, तद्यथा—"सुवर्णकः प्रथमो द्वितीयः कुमुदद्युतिः। तृतीयः पद्मरागस्तु चतुर्थश्चन्द्रमौलकः॥ पञ्चमो माहिषाख्यश्च नामतः शास्त्रकोविदैः॥" इति। तत्र माहिषाख्यं विहितम्, उक्तञ्च तन्त्रान्तरे—"वरमाहिषकोषनीटरसास्त्रमवर्णस्य गुग्गुलोः प्रस्थम्" इत्यादि। अयःपात्रे लौहपात्रे। दर्व्या सङ्घर्षयेन्मुहुरिति—दर्वी सञ्चालनक्रियाया प्रसिद्धैव, मुहुरिति—वारंवारं, कुतः? दग्धभयात्। गुडपाकसमाकृतिमिति—यथा गुडपाकं तथा गुग्गुलोः पाकमित्यर्थः; यतः,—"गुडवद्गुग्गुलोः पाकः † सुगन्धस्तु विशेषतः" इति। लक्षणमपि गुडपाकस्य तन्त्रान्तरे प्रथितं, तद्यथा—"तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः। क्षिप्तस्तु निम्नतां गच्छेत् पतितस्तु न शीर्य्यते॥ एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः॥" इति। अपरकार्य्यमाह, चूर्णीकृत्य ततस्तत्रेति।—तत

---

* पाठोऽयं चक्रपाणिसम्मतः, तथा च—"द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन" इति।

† "सुबन्धस्तु विशेषतः" इति चक्रपाठः।

त्रिफला * द्विपला ज्ञेया गुडूची पलिका मता ॥ ६७ ॥
षट्पलं त्र्यूषणं प्रोक्तं विडङ्गानां पलार्द्धकम्।
दन्ती कर्षमिता कार्य्या त्रिवृत् कर्षमिता स्मृता ॥ ६८ ॥
ततः पिण्डीकृतं सर्वं घृतपात्रे विनिक्षिपेत्।
गुटिकाः शाणमात्रेण युञ्ज्याद्दोषाद्यपेक्षया ॥ ६९ ॥
अनुपाने भिषक् दद्यात् कोष्णं नीरं पयोऽथवा।
मञ्जिष्ठादिशृतं वाऽपि युक्तियुक्तमुतापरम् ॥ ७० ॥
जयेत् सर्वाणि कुष्ठानि वातरक्तं त्रिदोषजम्।
सर्वव्रणानि गुल्मानि प्रमेहपिड़कास्तथा ॥ ७१ ॥
प्रमेहोदरमन्दाग्नि-कासश्वयथुपाण्डुजान्।
हन्ति सर्वामयान्नित्यमुपयुक्तो रसायनः ॥ ७२ ॥

इति गुडपाकादनन्तरं, तत्र इति—गुग्गुलुपाकद्रव्ये। त्रिफला द्विपला ज्ञेयेत्यादि—मिलितत्रिफलाया द्विपलमितं चूर्णं ग्राह्यम्। गुडूची पलपरिमिता, व्यवहारतस्तु गुडूच्याः सत्त्वमादाय क्षिपेदिति मनोहरः। त्र्यूषणं त्रिकटुकं, तच्च मिलितं षट्पलम्। विडङ्गचूर्णमप्यर्द्धपलम्। दन्तीमूलं कर्षप्रमाणम्। केचित्तु दन्तीबीजान्यत्र क्षिपन्ति, तन्न सर्वसम्मतम्। त्रिवृत्त्रिशोधः। ततः पिण्डीकृतमित्यादिना अत्र कर्त्तव्यविधिरपि योगराजवत् बोद्धव्यः। गुटिकाः शाणमात्रेणेति—शाणपरिमिता गुटिकाः कृत्वा दोषाद्यपेक्षया, न तु नियतशाणमात्रमेव; दोषापेक्षया यथा—कफे एककं, पित्ते द्विगुणं, वायौ त्रिगुणम् इति। कोष्ठापेक्षया यथा "चत्वारो माषका हीने मध्ये त्वष्टौ च माषकाः। श्रेष्ठे द्वादशकाः प्रोक्ताः कोष्ठं विज्ञाय तद्यथा॥" इति। ऋत्वपेक्षया यथा "प्रावृट्काले च ग्रीष्मे च घृतयुक्तं प्रदापयेत्। शरत्काले वसन्ते च दापयेत् त्रिफलायुतम्॥ हेमन्ते शिशिरे चैव गोमूत्रेण समायुतम्॥" इति। अनुपाने तु कोष्णं नीरं पयोऽथवेत्यादि—पयः क्षीरम्। माञ्जिष्ठादिशृतमिति—माञ्जिष्ठादिक्वाथं क्वाथकल्पनायां कथितम्। युक्तियुक्तमुतापरमिति—उताथवा अपरमनुपानं युक्तियुक्तं रोगसात्म्यं दद्यादिति सम्बन्धः; तथा चोक्तम्—"यस्य रोगस्य यत् सात्म्यं दद्यात् तदनुपानकम्" इति। एतच्चात्र

* "त्रिफलाऽर्द्धपला" इति चक्रसम्मतः पाठः। गूढार्थदीपिकाकारेणापि अयमेव पाठः समादृतः।

वासादिना नेत्ररोगदान् गुल्मादीन् वरुणादिना।
क्वाथेन खदिरस्यापि व्रणकुष्ठानि नाशयेत्॥
कैशोरकाभिधानोऽयं गुग्गुलुः कान्तिकारकः॥ ७३॥
अम्लं तीक्ष्णमजीर्णञ्च व्यायामं श्रममातपम्॥
मद्यं रोषं त्यजेत् सम्यग्गुणार्थी पुरसेवकः॥ ७४॥

भगन्दरादौ त्रिफलागुग्गुलुः।—

त्रिपलं त्रिफलाचूर्णं कृष्णाचूर्णं पलोन्मितम्।
गुग्गुलुं पञ्चपलिकं चोदयेत् सर्वमेकतः॥ ७५॥
ततस्तु गुटिकां कृत्वा प्रयुञ्ज्याद्वह्निपेक्षया।
भगन्दरं गुल्मशोथावर्शांसि च विनाशयेत्॥ ७६॥

---

वक्ष्यमाणमसि। वासादिना नेत्ररोगानिति—वासादिना वासादिक्वाथेन। वरुणादिना वरुणादिक्वाथेन। गुल्मादीनिति आदिग्रहणात् कृच्छ्राश्मरीप्रभृतीन्। कृच्छ्रं मूत्रकृच्छ्रम्। खदिरस्य क्वाथेनेति—खदिरो वृक्षविशेषः तस्य मूलत्वक्। कैशोर-गुग्गुलुरिति—किशोरो बालकः तस्य रूपं कैशोरकं, तेनास्याभ्यासे बालकस्येव रूपं भवतीत्यर्थः, अत एव कान्तिकारकः कथितः। अभ्यासे त्याज्यमाह, अम्लमित्यादि।—अम्लमम्लीका मातुलुङ्गादि। तीक्ष्णं राजिकादि। अजीर्ण-मन्नादिजम्। व्यायामं शरीरायासजनकं कर्म। श्रमं बह्वायासकृतकष्टं कर्म। आतप घर्मसेवा। मद्यं मद्यपानम्। रोषं क्रोधम्। सम्यक् त्यजेदिति यतः अम्लादीनि वातरक्तप्रकोपीणि भवन्ति। एके अम्लं तीक्ष्णमित्यादि श्लोकं न पठन्ति, क्षेपकोऽयमिति मन्यन्ते॥ ६४—७४॥

इदानीं त्रिफलागुग्गुलुवटकमाह, त्रिपलमित्यादि।—सम्मिलितफलत्रिकचूर्णं त्रिपलप्रमाणं ग्राह्यं, तेन हरीतकी पलमानं, विभीतकं पलप्रमाणं, आमलकमपि पलमानमिति। कृष्णा पिप्पली तस्याश्चूर्णं पलप्रमितमिति। गुग्गुलुं पञ्चपलिक-मिति—पञ्चपलप्रमाणं गुग्गुलुं सङ्कुट्य घृतेन सह सङ्कुट्य चूर्णेन सह मोदकाः कार्याः, अत एव चोदयेदित्युक्तं, घृतमत्र व्यवहारदर्शनात्। वह्न्यपेक्षया-त्यादिना भक्ष्यं मानं बोद्धव्यम्। गुल्मशोथानिति—गुल्मस्य शोथस्य। एके "भगन्दरं गुल्मशोथमर्शांसि च विनाशयेत्" इति पठन्ति, तत्र गुल्मेन जनितं शोथमिति॥ ७५।७६॥

प्रमेहादौ गोक्षुरादिगुग्गुलुः।—

अष्टाविंशतिसङ्ख्यानि पलान्यानीय गोक्षुरात्।
विपचेत् षड्गुणे नीरे क्वाथो ग्राह्योऽर्द्धशेषितः ॥ ७७ ॥
ततः पुनः पचेत्तत्र पुरं सप्तपलं क्षिपेत्।
गुडपाकसमाकारं ज्ञात्वा तत्र विनिक्षिपेत् ॥ ७८ ॥
त्रिकटु त्रिफला मुस्तं चूर्णितं पलसप्तकम्।
ततः पिण्डीकृतस्यास्य गुटिका सुखयोजिता ॥ ७९ ॥
हन्यात् प्रमेहं कृच्छ्रञ्च प्रदरं मूत्रघातकम्।
वातास्रं वातरोगांश्च शुक्रदोषं तथाऽश्मरीम् ॥ ८० ॥

कुष्ठादौ त्रिफलामोदकः।—

त्रिफलाऽष्टपला कार्य्या भल्लातञ्च चतुष्पलम्।
वाकुची पञ्चपलिका विडङ्गाना चतुष्पलम् ॥ ८१ ॥
हतलौहं त्रिकञ्चैव गुग्गुलुश्च शिलाजतु।

अथ गोक्षुरादिगुग्गुलुं दर्शयन्नाह, अष्टाविंशतीति।—गोक्षुरादीति—पञ्चाङ्ग गोक्षुरकस्याष्टाविंशतिपलानि ग्राह्याणि, तानि सङ्कुट्य षड्गुणे पानीये सङ्क्वाथ्यार्द्धावशेषो ग्राह्यः, षड्गुणता च गोक्षुरपरिमाणात्, अर्द्धावशेषो जलपरिमाणात्। ततः पुनः पचेदित्यादि—पुनः पचेदित्यर्द्धावशेषितं क्वाथम्। तत्रार्द्धावशेषिते पुरं गुग्गुलुं सप्तपलपरिमितम्। गुडपाकसमाकारमिति—यथा गुडपाको भवति तथा अयमपि कर्त्तव्यः, तच्च गुडपाकलक्षणं पूर्वमुक्तम्। तत्र विनिक्षिपेदिति—तत्र गुग्गुलुपाके विनिक्षिपेद्वक्ष्यमाणद्रव्याणीत्यर्थः। तानि कानि? इत्याह, त्रिकटु त्रिफला मुस्तमिति।—त्रिकटु त्र्यूषणम्। त्रिफला हरीतक्यादिकम्। मुस्तं प्रसिद्धम्। एतत् सकलं पलसप्तकं ग्राह्यं प्रत्येकं पलमात्रमित्यर्थः। गुटिका सुखयोजितेति—अस्य गुटिका माषमात्रा प्रकल्प्य यथादोषं भक्षणीया इति भावः। कृच्छ्रं मूत्रकृच्छ्रम्। वातरोगान् हनुस्तम्भाक्षेपकादीन् ॥ ७७—८० ॥

अथ त्रिफलामोदकमप्याह, त्रिफलेत्यादि।—* सम्मिलितफलत्रिकमष्टपलपरिमितं भवति। भल्लातं भल्लातकफलम्। हतलौहमिति—सम्यङ्मृतलौहचूर्णम्। "हतलौहं गुग्गुलुश्च शिलाजतु त्रिकत्रिकम्" इति पाठे—त्रिकत्रिकं त्रिपलमित्यर्थः,

* त्रिफला प्रत्येकमष्टपला इति गू० दी०।

एकैकं पलमात्रं स्यात् पलार्द्धं पौष्करं भवेत् ॥ ८२ ॥
चित्रकस्य पलार्द्धं स्याद्विशाणं मरिचं भवेत् ।
नागरं पिप्पली मुस्ता त्वगेलापत्रकुङ्कुमम् ॥ ८३ ॥
शाणोन्मितं स्यादेकैकं चूर्णयेत् सर्वमेकतः ।
ततस्तत् प्रक्षिपेच्चूर्णं पक्वखण्डे च तत्समे ॥ ८४ ॥
मोदकान् पलिकान् कृत्वा प्रयुञ्जीत यथोचितान् ।
हन्यात् सर्वाणि कुष्ठानि त्रिदोषप्रभवामयान् ॥ ८५ ॥
भगन्दरप्लीहगुल्मान् जिह्वातालुगलामयान् ।
शिरोऽक्षिस्थगतान् रोगान् हन्यात् पृष्ठगतानपि ॥ ८६ ॥
प्राग्भोजनस्य देयं स्यादधःकायस्थिते गदे ।
भेषजं भक्तमध्ये च रोगे जठरसंस्थिते ॥
भोजनस्योपरि ग्राह्यमूर्द्ध्वजत्रुगदेषु च ॥ ८७ ॥

अयं पाठस्त्वसङ्गत एव, किन्तु "हतलोहं त्रिवृच्चैव गुग्गुलुश्च शिलाजतु" इति पाठः साधुः; तत्र त्रिवृच्छिखीति, तेन लौहचूर्णादिशिलाजत्वन्तं * पलमात्रमाहुः। पौष्करं पुष्करमूलं, पलार्द्धं ग्राह्यम्। नागरादिकुङ्कुमान्तं द्रव्यसप्तकं शाणोन्मितं प्रत्येकमिति भावः। पक्वखण्डे च तत्समे इति— तत्समे सकलद्रव्यसम्भारसाम्ये, तेन + सप्तविंशतिपलानीत्यर्थः। यथोचितानिति— यथादोषापेक्षया। जिह्वातालुगलामयानित्यनेन जिह्वामयान्, ताल्वामयान्, गलामयान् एते मुखरोगे पठिताः। हन्यात् पृष्ठगतान् रोगानित्यर्थः। प्राग्भोजनस्येति—प्रातःकाले। अधःकायस्थिते गदे इति—गुदस्थादौ। जठरसंस्थिते उदरादौ। ऊर्द्ध्वजत्रुगदेष्विति—शिरोरोगादिषु। भोजनस्योपरि सायङ्काले ॥ ८१—८७ ॥

---

* प्रत्येकं पलमात्रमाहुः इत्येव पाठः करणीयः, अन्यथा लौहादीनां चतुर्णां मिलितानां पलमात्रमित्यर्थबोधापत्तेः।

+ त्रिफलादिकुङ्कुमान्तैर्द्रव्यैर्मिलितैः शाणोत्तरकर्षद्वयाधिकषड्विंशतिपलानि भवन्ति, न तु सप्तविंशतिपलानीति द्रष्टव्यम्।

गण्डमालादौ काञ्चनारगुग्गुलः।—

काञ्चनारत्वचो ग्राह्यं पलानां दशकं बुधैः।
त्रिफला षट्पला कार्य्या त्रिकटुः स्यात् पलत्रयम् ॥८८॥
पलैकं वरुणं कुर्य्यादेला त्वक्पत्रकं तथा।
एकैकं कर्षमात्रं स्यात् सर्वाण्येकत्र चूर्णयेत् ॥ ८९ ॥
यावच्चूर्णमिदं सर्वं तावन्मात्रस्तु गुग्गुलुः।
सङ्कुट्य सर्वमेकत्र पिण्डं कृत्वा च धारयेत् ॥ ९० ॥
गुटिकाः शाणमात्रेण प्रातर्ग्राह्या यथोचितम्।
गण्डमालां जयत्युग्रामपचीमर्बुदानि च ॥ ९१ ॥
ग्रन्थीन् व्रणांश्च गुल्मांश्च कुष्ठानि च भगन्दरम्।
प्रदेयश्चानुपानार्थं क्वाथो मुण्डितिकाभवः ॥
क्वाथः खदिरसारस्य पथ्याक्वाथोऽथ कोष्णकम् ॥ ९२ ॥

पुष्टौ माषादिमोदकः।—

निस्तुषं माषचूर्णं स्यात्तथा गोधूमसम्भवम्।
निस्तुषं यवचूर्णञ्च शालितण्डुलजं तथा ॥ ९३ ॥

अथ काञ्चनारगुग्गुलुं प्रकटयन्नाह, काञ्चनारत्वच इति।—काञ्चनारो वृक्षविशेषः प्रसिद्ध एव निजनाम्ना, तस्य त्वक् दशपलपरिमिता ग्राह्या। त्रिफलेति—सम्मिलितफलत्रिकं षट्पलप्रमितम्। त्रिकटोरपि मिलित्वा पलत्रयं भवति। वरुणोऽपि स्वनामप्रसिद्धो वृक्षविशेषः, तस्यापि त्वगेव ग्राह्या। एला त्वक् पत्रकमिति—सुगन्धत्रयं प्रत्येकं कर्षमात्रं देयम्। गुग्गुलरत्र सकलचूर्णसमः, तेन त्रिकर्षोत्तराणि विंशतिपलानि भवन्ति। पिण्डं कृत्वेत्यादिना घृतेन सह सङ्कुट्य स्निग्धभाण्डे धारयेदिति सम्प्रदायः। यथोचितमिति—यथादोषापेक्षया। अनुपानार्थं द्रव्याण्याह, क्वाथो मुण्डितिकाभव इति।—मुण्डितिका भूकदम्बकं, केदारमुण्डी इति लोके। खदिरः प्रसिद्धः, तस्य सारो मध्यभागस्थितकाष्ठविशेषः। पथ्या हरीतकी। कोष्णमिति—उष्णोदकं, यतः "कं शिरो जलमाख्यातम्" इति वचनम् ॥ ८८—९२ ॥

अथ माषादिमोदकमाह, निस्तुषमित्यादि।—माषचूर्णं निस्तुषं तुषरहितं ग्राह्यं, तथेति ग्रहणाद्गोधूमचूर्णमपि निस्तुषमित्यर्थः। शालिर्धान्यविशेषः, स च

सूक्ष्मञ्च पिप्पलीचूर्णं पलिकान्युपकल्पयेत् ।
तत एकीकृतं सर्वं भर्जयेद्गोघृतेन च ॥ ९४ ॥
अर्द्धमात्रेण सर्वेभ्यस्ततः खण्डं समं क्षिपेत् ।
जलञ्च द्विगुणं दत्त्वा पाचयेत शनैः शनैः ॥ ९५ ॥
ततः पक्वं समुद्धृत्य वृत्तान् कुर्वीत मोदकान् ।
भुक्त्वा सायं पलैकञ्च पिबेत् क्षीरं चतुर्गुणम् ॥ ९६ ॥
वर्जनीयौ विशेषेण क्षाराम्लौ द्वौ रसावपि ।
शतैव रमयेन्नारीर्बह्वीर्न च्यवते नरः ॥ ९७ ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण विरचितायां शार्ङ्गधरसंहितायां
मध्यखण्डे चिकित्सितस्थाने वटककल्पना नाम सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः ।

## अथ अवलेहकल्पना ।—

अवलेहस्य स्वरूपं पर्य्यायो मात्रा च ।—

क्वाथादीनां पुनः पाकात् घनत्वं सा रसक्रिया ।
सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात् पलोन्मिता ॥ १ ॥

षष्टिकी ग्राह्या, तस्य तण्डुलानि कृत्वा तज्जातं चूर्णं देयम् । पलिकानीति बहुवचनेन माषचूर्णादिपिप्पलीचूर्णान्तं द्रव्यं प्रत्येकं पलमात्रमाहुः कर्त्तव्यविधावेव । तत एकीकृतमित्यादि—चूर्णादर्द्धमात्रेण गोघृतेन चूर्णं मनाग्भर्जयित्वा तदनु सकलचूर्णसमानं खण्डं गृहीत्वा खण्डाद्द्विगुणितेन जलेन सह पक्त्वा पलप्रमिता मोदकाः कार्य्याः । सायं सन्ध्यासमये । पिबेत् क्षीरं चतुर्गुणमिति—पलप्रमाणं द्रव्यं भक्षयित्वा पलचतुष्टयं क्षीरमनुपेयमित्यर्थः । द्वौ रसौ विशेषेण वर्जनीयौ, यतः क्षाराम्लौ शुक्रच्युतिकरौ भवतः । न च्यवते नर इति—शुक्रहानिर्न भवतीति तात्पर्य्यार्थः ॥ ९३—९७ ॥

इति श्रीवाचस्पत्याख्यप्रकाशवैद्य-श्रीमाधवसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां मध्यखण्डे चिकित्सितस्थाने वटककल्पना नाम सप्तमाध्यायः समाप्तः ॥ ७ ॥

---

अधुनावलेहानां प्रथमतस्तत्स्वरूपविषयं दर्शयन्नाह, क्वाथादीनामिति ।—

अवलेहे सितागुडद्रवाणां मात्रा।—

सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः।
द्रवं चतुर्गुणं दद्यादिति सर्व्वत्र निश्चयः॥ २॥

सम्यक्पक्वावलेहलक्षणम्।—

सुपक्वे तन्तुमत्त्वं स्यादवलेहोऽप्सु मज्जति।
स्थिरत्वं पीड़िते मुद्रा-गन्धवर्णरसोद्भवः॥ ३॥

---

क्वाथादीनामिति * आदिग्रहणात् स्वरसफाण्टकल्कादयोऽभिधीयन्ते। घनत्वमिति—सान्द्रत्वं यावद्भवति तावत् पाकः कर्त्तव्य इति भावः। पाकस्तु क्वाथादीनां भवति, यतः प्रथमतः क्वाथविधिना पाकं कृत्वा पश्चात् पाकेन लेहः स्यादिति। तन्मात्रेति—तस्यावलेहस्य भक्षणार्थं मानं पलमितं बोद्धव्यम् इति सामान्यमानं भक्षणेऽभिहितम्॥ १॥

इदानीमनुक्तं सितादीनां परिमाणमाह, सितेति।—अनुक्तमानावलेहे सिता चतुर्गुणा देया, चतुर्गुणताऽत्र सकलद्रव्यादित्यर्थः। गुडस्तु द्विगुण इति चूर्णद्रव्यात्। द्रव तोयक्षीरादिकं चतुर्गुणम्, अत्रापि चूर्णादिति भावः। सर्व्वत्र निश्चय इति—स्वतन्त्रे परतन्त्रे वा॥ २॥

अथावलेहस्य सिद्धिलक्षणमाह, सुपक्व इति।—सम्यक् पक्वेऽवलेहे एतादृशं लक्षणं भवति, कीदृशं तदाह, तन्तुमत्त्वमित्यादि—दर्व्या सञ्चालनेन तन्तुसंयुत इव दृश्यते, तेन स्पृश्यमानोऽङ्गुलिग्राह्यो भवतीत्यर्थः। अप्सु मज्जति पानीयमध्ये यदा क्षिप्तस्तदा निमग्नो भवति। स्थिरत्वमिति—निश्चलत्वम्, एतेन द्रवरहित इत्यर्थः; तथा हि—"तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः। क्षिप्तस्तु निश्चलस्तिष्ठेत पतितस्तु न शीर्य्यते॥ एष पाको गुड़ादीनां सर्व्वेषां परिकीर्त्तितः॥" इति। पीड़िते मुद्रेति—तस्मिन्नङ्गुल्यादिपीड़िते सति मुद्रादीनामुद्भवो भवति,

---

* आदिग्रहणात् स्वरसफाण्टकल्कादयोऽभिधीयन्ते इति यदुक्तं तन्न सङ्गतं, यतः "क्वाथादयेत् पुनः पाकात् घनत्वं सा रसक्रिया" इत्यत्र पुनः-शब्देन द्वितीयवारपाको बोध्यते, स्वरसस्य पाक एव न भवति द्वितीयपाकस्तु सुतरां नास्त्येव, एवं पिष्टरूपस्य कल्कस्यापि प्रथमपाकरहितस्य पुनःपाकेन घनत्वसम्पादनं न सम्भवत्येव इति सुधीभिर्विभाव्यम्। आदिपदेन शीतफाण्टयोर्ग्रहणमिति वक्तुं युज्यते, यतः उष्णतोये निक्षेपात् तयोः प्रथमपाकः सम्पद्यते एव इति।

अवलेहे अनुपानम् ।—

दुग्धमिक्षुरसो यूषः पञ्चमूलीकषायजः ।
वासाक्वाथो यथायोग्यमनुपानं प्रशस्यते ॥ ४ ॥

स यथा—

कासे कण्टकार्यवलेहः ।—

कण्टकारीतुलां नीर-द्रोणे पक्त्वा कषायकम् ।
पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ॥ ५ ॥

* मुद्राऽत्र निम्नता ; यदुक्तं—"पीडिते तु यत्राऽङ्गुल्या निम्नता तत्र जायते" इति । गन्धवर्णरसोद्भव इति—सुगन्धोपेतः सुवर्णोपेत इति, याऽवलेहो भवति स सुपक्व इत्यर्थः ॥ ३ ॥

इदानीमवलेहेष्वनुपानमाह, दुग्धमिति ।—दुग्धमिति सामान्यग्रहणेन सर्वाणि क्षीराणि यथादोषं ग्राह्याणि । इक्षुरसग्रहणेन सर्वे इक्षुविकाराः ग्राह्याः । पञ्चमूली महती ह्रस्वा वा यथाव्याधिविहिता ग्राह्या । कषायज इति यूष इत्यत्र, तत्र पञ्चमूलस्य कषायेण कृत्वा यूषः सोऽनुपानमिति भावः । कषायग्रहणात् स्वरसक्वाथकल्कादयो ग्राह्याः । वासाक्वाथ इति—वासा आटरूषकः । यथायोग्यमिति—यत् यस्य दोषस्य योग्यं तत् यथायोग्यम्, एतेन दोषानुरूपमिति व्याध्यनुसारं कथितम्, तद्यथा—वातेऽम्लमधुरलवणप्रायाः स्निग्धादयः, पित्ते मधुरकषायतिक्तप्रायाः शीतादयः, कफे तिक्तोषणकषायप्रायाः रूक्षादयः । मात्रा यथा, तथा ह्युक्तम्—† "अनुपानं प्रयोक्तव्यं कफव्याधौ पलं भवेत् । पलद्वयन्तु पित्ते वाऽनिलजे च पलत्रयम् ॥" इति । यद्वा—"गण्डूषमात्रया देयं सदा क्रूरं तु पथ्य च । अनुपानं प्रयोक्तव्यं देशकालाद्यपेक्षया ॥" इति । अनुपानमिति—अनु पश्चात् पानं, तत् कुतः ? तदाह—"यथा जलगतं तैलं तत्क्षणादेव सर्पति । तथा भैषज्यमङ्गेषु प्रसर्पत्यनुपानतः ॥" इति ॥ ४ ॥

स यथेति ।—तं दर्शयन्नाह, कण्टकारीति—लघुकण्टकारिका, सा समूलफल-

---

* मुद्रा अङ्गुलीचिह्नम्, अङ्गुलीरेखाङ्क इति वृद्धाः ।

† चक्रसङ्ग्रहादौ—"अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् । पलद्वयन्त्व-निलजे पित्तजे तु पलत्रयम् ॥" इति पाठः ।

पृथक् पलानि चैतानि गुडूचीचव्यचित्रकाः।
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकः॥ ६॥
भार्गी रास्ना शटी चैव शर्करा पलविंशतिः।
प्रत्येकञ्च पलान्यष्टौ प्रदद्याद्घृततैलयोः॥ ७॥
पक्त्वा लेहत्वमानीय शीते मधुपलाष्टकम्।
चतुष्पलं तुगाक्षीर्य्याः पिप्पलीनां चतुष्पलम्॥ ८॥
क्षिप्त्वा निदध्यात् सुदृढे मृन्मये भाजने शुभे।
लेहोऽयं हन्ति हिक्कार्त्ति-श्वासकासानशेषतः॥ ९॥

अथचौषादौ च्यवनप्राशः।—

पाटलाऽरणिकाश्मर्य्य-विल्वारलुकगोक्षुराः।
पर्ण्यौ बृहत्यौ पिप्पल्यः शृङ्गी द्राक्षामृताभया॥ १०॥
बला भूम्यामली वासा ऋद्धिर्जीवन्तिका शटी।

आख्या ग्राह्या। नीरद्रोणे इति—चतुराढकपरिमिते पानीये। त्र्यूषणं प्रत्येकं पलप्रमाणमाहुः। धन्वयासकः दुरालभा। रास्ना सुरभी। शर्करा पलविंशतिरिति सुगमम्। घृततैलयोरिति मिलित्वा षोडशपलानि। घृतमत्र गोघृतम् छागं वा व्याधिविहितत्वात्। तैलं कटुतैलमेव वदन्त्येके, यतः "कासे श्वासे च हिक्कायां कटुतैलं प्रयोजयेत्" इति। क्वचिदस्य प्रयोगोऽपि दृश्यते, "गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत्। त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत्॥" इति। शीते मधु पलाष्टकमिति—मधु क्षौद्रमष्टपलप्रमाणं शीते हिमस्पर्शे विनिक्षिपेदित्यर्थः, यतः, —"उष्णार्त्तमुष्णैरुष्णे च तन्निहन्ति यथा विषम्" (सु० सू० ४५ अ०) इति वचनात्। अपराणि द्रव्याण्याह, चतुष्पलं तुगाक्षीर्य्या इत्यादि।—तुगाक्षीरी वांशी। पिप्पली प्रसिद्धा। सुदृढे स्रुतिविवर्ज्जिते। भाजने पात्रे। शुभे अभग्ने मङ्गलत्वात्। अयं लेहः कण्टकारीसंज्ञः। अशेषत इति—सम्पूर्णारिष्टदर्शनादपि श्वासक्षयादित्यर्थः (१)। एतेनास्य प्रामाण्यं दर्शितम्॥ ५—९॥

अधुना च्यवनप्राशावलेहमाह, पाटलेत्यादि।—पाटला प्रसिद्धा। अरणिः अग्निमन्थः। काश्मर्य्यः गाम्भारी। विल्वं प्रसिद्धम्। अरलुकः श्योनाकः। पर्ण्यौ द्वे तेन शालपर्णी पृश्निपर्णी चेति, तच्च द्वयं "कलशद्वय"शब्दवाच्यम्। बृहत्याविति—द्वे बृहत्यौ, कण्टकारीद्वयमित्यर्थः। शृङ्गी कर्कटाख्या। भूम्यामली तामलकी।

जीवकर्षभकौ मुस्तं पौष्करं काकनासिका ॥ ११ ॥
मुद्गपर्णी माषपर्णी विदारी च पुनर्नवा ।
* काकोल्यौ कमलं मेदे सूक्ष्मैलागुरुचन्दनम् ॥ १२ ॥
एकैकं पलसम्मानं स्थूलचूर्णितमौषधम् ।
एकीकृत्य महत्पात्रे पञ्चामलशतानि च ॥ १३ ॥
पचेद्द्रोणजले क्षिप्त्वा ग्राह्यमष्टावशेषितम् ।
ततस्तु तान्यामलानि निष्कुलीकृत्य वाससा ॥ १४ ॥

---

† ऋद्धी इति द्विवचनत्वेन ऋद्धिवृद्धी ग्राह्ये। जीवन्ती शाकविशेषः। जीवकर्षभकाविति द्वौ तेन जीवक ऋषभकश्चेति। काकनासिका "कौवाडोडी" इति लोके। विदारी कन्दविशेषः। काकोल्याविति द्रव्यद्वयं, तेन काकोली क्षीरकाकोली चेति। कमलमुत्पलं, तदभावे पद्मबीजं ग्राह्यम। मेदे द्वे मेदा महामेदा च। अगुरुः कृष्णागुरुः। चन्दनं श्वेतम्। स्थूलचूर्णितमिति—उदूखले मुषलादिभिः कुट्टितमित्यर्थः, न तु वस्त्रगालितम्। पञ्चामलशतानि चेति—आमलकफलानि गुडकानि पञ्चशतानि; अत्र आकृतिमानम्, एवं सर्वत्र पलादिमानाभावे; यथा वक्ष्यमाणे अगस्त्यहरीतक्यवलेहे "हरीतकीशतं भद्रम्" इत्यादि, एवं भल्लातकगुडे "भल्लातकसहस्रे द्वे" इति। यत्र पलादिमानमुक्तं तत्र तु पलादिमानेनैव व्यवहारः; यथा पूर्वोक्तबाहुशालगुडे—"चतुष्पलं स्याद्भल्लातः" इति। पचेदिति—वृद्धपरिपाटीव्यवहारात्, तद्यथा—अच्छिन्नामलकफल कर्पटे पोट्टली बद्धा क्वथनीयं, तेन तानि सुग्राहाणि स्युः। अष्टावशेषितमिति—अत्र यत् ग्रहणं तत् वृन्दटिप्पणकारमतमालोक्य कृतं, वृन्दे तु—"ज्ञात्वा गतरसं द्रव्यं रसं गृह्णीत गालितम्" इत्यस्य व्याख्यायाम अष्टभागावशेषेण द्रव्याणां गतरसत्वं स्यात् इति। केचित्तु "ग्राह्यं पादावशेषितम्" इति पठन्ति, तत्र ‡ सुश्रुते वाग्भटे च "पादशेषं

---

* चरकवाग्भटादौ काकोली तथा मेदा इति एकवचनान्तपाठ एव, न तु काकोलीद्वयं तथा मेदाद्वयम्। तथा कमलमित्यत्र उत्पलम् इति पाठः। उत्पलं नीलोत्पलम्।

† मूले "ऋद्धिः" इति एकवचनान्त एव पाठो दृश्यते, स च चरकादिसम्मतः। टीकाकारव्याख्या न समीचीना।

‡ सुश्रुते अयमंशो नास्ति।

दृढहस्तेन सम्पीड्य क्षिप्त्वा तत्र ततो घृतम्।
* पलसप्तमितं तानि किञ्चिद्भृष्टान्यवह्निना ॥ १५ ॥
ततस्तत्र क्षिपेत् क्वाथं खण्डश्चार्द्धतुलोन्मितम्।
लेहवत् साधयित्वा च चूर्णानीमानि दापयेत् ॥ १६ ॥
पिप्पली द्विपला देया तुगाक्षीरी चतुष्पला।
प्रत्येकञ्च त्रिभागं स्यात्त्वगेलापत्रकेशरम् ॥ १७ ॥
ततस्त्वेकीकृतं सर्वं क्षिपेत् क्षौद्रञ्च षट्पलम्।
इत्येतच्च्यवनप्रोक्तं च्यवनप्राशसंज्ञितम् ॥ १८ ॥
लेहं वह्निबलं दृष्ट्वा खादेत् क्षीणो रसायनम्।
बालवृद्धक्षतक्षीणा नारीक्षीणाश्च शोषिणः ॥ १९ ॥
हृद्रोगिणः स्वरक्षीणा ये नरास्तेषु युज्यते।
कासं श्वासं पिपासाञ्च वातासृमुरसो ग्रहम् ॥ २० ॥
वातपित्तं शुक्रदोषं मूत्रदोषञ्च नाशयेत्।
मेधा स्मृतिं स्त्रीषु हर्षं कान्तिं वर्णप्रसन्नताम् ॥
अस्य प्रयोगादाप्नोति नरो जीर्णविवर्जितः ॥ २१ ॥

रले" इत्यधिकम्। निष्कुलीकृत्येति—निष्कुलमिति बीजादिवर्जनात् पेषणाद्वा, तेन श्लिष्टत्वगादिरहितमित्यर्थः। समपलपरिमितेन सर्पिषा तद्भर्जनं कार्य्यं, चक्रदत्तोक्तं—"सिता मत्स्यण्डिकाभावे धात्र्याश्च स्वेदभर्जनम्। चतुर्भागजलं प्रायो दत्त्वा शतरसं भवेत् ॥" इति। † खण्डस्य क्वाथमिति—शीराशब्दवाच्यं, खण्डेनापि क्वथितं व्यवहरन्ति। क्षौद्रमत्र शीतीभूते दद्यात्। च्यवनप्रोक्तमिति—च्यवनो नाम मुनिस्तेन प्रोक्तं कथितम्। प्राश्यते इति प्राशः च्यवनस्य प्राश इति भावः। क्षीणो धातुक्षीणः। रसायनमिति—जराव्याधिनाशनम्। नरो जीर्णविवर्जित इति—नरोऽस्य सेवी पुरुषः जीर्णविवर्जितः जरारहितो भवतीत्यर्थः। यद्वा,

* चरकादौ "तैलसर्पिषोः पलद्वादशके" इति पाठः।

† खण्डस्य क्वाथमिति व्याख्यानमसाधु। मूले "ततस्तत्र क्षिपेत् क्वाथं खण्डश्चार्द्धतुलोन्मितम्" इति पाठः; ततः आमलकभर्जनानन्तरं तत्र भर्जितामलकं क्वाथं पूर्वोक्तं पाटलादीनां क्वाथम् अर्द्धतुलोन्मितं खण्डञ्च क्षिपेदित्येवास्य पाठस्य व्याख्या।

रक्तपित्ते कुष्माण्डावलेहः।—

निष्कलीकृत्य कुष्माण्ड-खण्डात् पलशतं पचेत्।
निक्षिप्य द्विगुणं नीरमर्द्धशिष्टञ्च गृह्यते॥ २२॥
तानि कुष्माण्डखण्डानि पीड़येद्दृढ़वाससा।
आतपे शोषयेत् किञ्चिच्छूलाग्रैर्बहुशो व्यधेत्॥ २३॥
क्षिप्त्वा ताम्रकटाहे च दद्यात् * अष्टपलं घृतम्।
तेन किञ्चिद्भर्जयित्वा पूर्वोक्तं तज्जलं क्षिपेत्॥ २४॥
खण्डात् पलशतं दत्त्वा सर्वमेकत्र पाचयेत्।
सुपक्के पिप्पली शुण्ठी जीरकं द्विपलं पृथक्॥ २५॥
पृथक् पलार्द्धं धान्याकं पत्रैलामरिचं त्वचम्।
चूर्णीकृत्य क्षिपेत्तत्र घृतार्द्धं क्षौद्रमावपेत्॥ २६॥

अजीर्णविवर्जी भवति, तदपि रोगमूलमेव; यतः,—"प्रायेणाहार-वैषम्यादजीर्णं जायते नृणाम्। तन्मूलो रोगसङ्घातस्तद्विनाशाद्विनश्यति॥" इति॥ १०—२१॥

अथ कुष्माण्डावलेहविवरणं दर्शयन्नाह, निष्कलीति।—निष्कलीकृत्येति—त्वग्बीजादिरहितानि कुष्माण्डशकलानि सङ्गृह्येत्यर्थः। द्विगुणं नीरमिति कुष्माण्ड-परिमाणात्, तेन कुष्माण्डशकलानि तुलापरिमितानि द्वितुलामितं नीरमिति, अर्द्धावशिष्टं क्वाथरूपं जलम्। शूलाग्रैरिति—काष्ठमयशङ्कुमुखैः। बहुशो व्यधेदिति—बहुच्छिद्राणि कुष्माण्डशकलानि कारयेदिति भावः, एतच्च—छेदपाद्यां पूर्वं निष्कुलीकृतं तदनु कृतच्छेदं पश्चात् संस्वेद्य क्षौमेण वेष्टयित्वा पीडयेत्, आतपे मनाक् संशोष्य पिष्ट्वा पलशतं गृहीत्वा पक्तव्यम्। तेन किञ्चिद्भर्जयित्वेति—किञ्चिदेव यथापाकं भर्जयेत्; तथा हि "सुपक्कसर्पिषि कुष्माण्डे पाको गन्धेन सूद्यते" इति। तज्जलमिति—अर्द्धावशेषितं पूर्वोक्तं क्वाथम्। खण्डात् पलशतमिति—शर्करा-पलशतम्। घृतार्द्धं क्षौद्रमावपेदिति—क्षौद्रं मधु घृतमानादर्द्धं क्षिपेदिति भावः। वपेदिति ग्रहणेन शीतीभूते तस्मिन् पश्चात् मेलयेदित्यर्थः।

* चक्रदत्तायुर्वेदसारादौ घृतप्रस्थमित्युक्तम्।

खादेदग्निबलं दृष्ट्वा रक्तपित्ती क्षयी ज्वरी ।
शोषतृष्णावमिच्छर्दि-श्वासकासक्षतातुरः ॥ २७ ॥
कुष्माण्डकावलेहोऽयं बालवृद्धेषु युज्यते ।
उरःसन्धानकृद्वृष्यो बृंहणो बलकृन्मतः ॥ २८ ॥

अर्शोरोगे खण्डशूरणावलेहः ।—

युक्त्या कुष्माण्डखण्डस्य शूरणं विपचेत् सुधीः ।
अर्शसां मूढवातानां मन्दाग्नीनाञ्च युज्यते ॥ २९ ॥

कासे अगस्त्यहरीतक्यवलेहः ।—

हरीतकीशतं भद्रं यवानामाढकं तथा ।
पलानि दशमूलस्य विंशतिञ्च नियोजयेत् ॥ ३० ॥
चित्रकः पिप्पलीमूलमपामार्गः शटी तथा ।
कपिकच्छुः शङ्खपुष्पी भार्गी च गजपिप्पली ॥ ३१ ॥
बला पुष्करमूलञ्च पृथक् द्विपलमात्रया ।

आतुरशब्दः शोषादिभिः प्रत्येकमभिसम्बध्यते । बालवृद्धेषु युज्यते इति—सौम्यत्वात् धातुपोषकत्वाच्च । वृष्यः शुक्रवृद्धिकरः । बृंहणो धातुवृद्धिकरः । बलकृदोजसो वृद्धिकर इति ॥ २२—२८ ॥

इदानीं खण्डशूरणावलेहमाह, युक्त्येति ।—कुष्माण्डखण्डस्य युक्त्या कर्त्तव्यविधिना शूरणमपि शूरणावलेहः कर्त्तव्यः । सुधीरिति ग्रहणेन पूर्वोक्तकुष्माण्डखण्डे यद्द्रव्यं यन्मानं या कर्त्तव्यता तत् सकलं विचार्य्य तेनैव प्रकारेण शूरणावलेहः साध्यः । विशेषेण मूढवातानां मन्दाग्नीनाञ्च युज्यते ॥ २९ ॥

अथागस्त्यहरीतक्यवलेहं दर्शयन्नाह, हरीतकीशतमित्यादि ।—हरीतकीशतं हरीतकीगुटिकाशतं, न तु हरीतकीपलशतं, "सङ्ख्या फलानां शतशः पलानाम्" इति वचनात् । भद्रमिति—श्रेष्ठं, हरीतकीफलशतं, तेन नवादिगुणसहितमित्यर्थः ; तथा चोक्तं—"नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाऽम्भसि । निमज्जेत् या प्रशस्तत्वात् गुणकृत् सा प्रकीर्त्तिता ॥" इति । यवानामाढकमिति—यवोऽन्नविशेषः, तस्य चतुःषष्टिपलानि । केचित्तु "हरीतकीशतं भद्र यवानामाढकं तथा" इति पठन्ति, तत्र भद्रयवा इन्द्रयवा इति व्याख्यानयन्ति, एतन्न मनोहरति, सर्वेषां सम्प्रदायविरोधात् ;

पचेत् पञ्चाढ़के नीरे यवैः स्विन्नैः शृतं नयेत् ॥ १२ ॥
तत्राभयाशतं दद्यात् क्वाथे तस्मिन् विचक्षणः ।
सर्पिस्तैलाष्टकपलं क्षिपेत् गुड़तुलां तथा ॥ १३ ॥
पक्वा लेहत्वमानीय सिद्धे शीते पृथक् पृथक् ।
क्षौद्रञ्च पिप्पलीचूर्णं दद्यात् कुड़वमात्रया ॥ १४ ॥
हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः ।
क्षयं कासं ज्वरं श्वासं हिक्कार्शोऽरुचिपीनसान् ॥ १५ ॥
ग्रहणीं नाशयेदेष वलीपलितनाशनः ।
बलवर्णकरः पुंसामवलेहो रसायनम् ॥
विहितोऽगस्त्यमुनिना सर्वरोगप्रणाशनः ॥ १६ ॥

तस्मात् हरीतकीशतं भद्रमिति पाठः साधुः । दशमूलस्य विंशतिपलानि प्रत्येकं द्विपलमित्यर्थः । शेष द्रव्यं प्रसिद्धम् । यवैः स्विन्नैरिति उपलक्षणे तृतीया । यवस्विन्नताऽत्र चतुर्भागावशेषे जले एव भवति, तेन चतुर्भागावशिष्टमेव ग्राह्यम् ; तन्त्रान्तरेऽप्युक्तं—"जलाढकैः पञ्चभिरङ्घ्रिशेषं क्वाथं नयेत्" इत्यादि । पक्वा लेहत्वमानीयेति—व्यवहारात् हरीतकीशतस्य कर्पटे पोट्टलं बद्धा क्वथनं, पश्चादुत्स्विन्नहरीतकीशतस्य घृततैलयोर्भर्जनं तद्दृढार्थम् ; यथा तन्त्रान्तरे क्वाथ-सिद्धहरीतक्या हरीतकीभर्जनमुक्तं, तदनु क्वाथे गुड़तुलां लोड़यित्वा पाकः कर्त्तव्यः, अवतरणसमये पिप्पलीचूर्णप्रक्षेपः, शीतीभूते चापरेऽह्नि मधुदानमिति वृद्धाना मतम् । सुगन्धार्थं मनाक् चातुर्जातमिति केचित् ; तदुक्तं—"पिप्पली-चूर्णकुड़वं चातुर्जातावचूर्णितम्" इति । सर्पिस्तैलाष्टकपलमिति यदुक्तं * तन्मिलित्वा ग्राह्यम् । हरीतकीद्वयं खादेत् तेन लेहेन नित्यश इति—यद्यपि गुड़स्य भक्षणमानं नोक्तं, तथापि हरीतकीद्विकग्रहणेन लेहस्य † पलमानं भवत्येव ; यथा तन्त्रान्तरे भार्गीगुड़े "भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत्" इति, तेनात्र हरीतकीभक्षणविधानात् गुडपलं भक्ष्यमिति । अन्ये तु गुल्मोच्छेदे हरीतकीन्यायात् गुड़ं द्विपलमाहुः ; एतत् सर्वमेव व्याधिबलाबलत्वात् प्रचरति । अगस्त्यमुनिविहित-त्वेनास्य सिद्धफलत्वमुच्यते ॥ १०—१६ ॥

* शिवदासेन पृथगष्टपलमानमिति व्याख्यातम् ।

† सुश्रुते कर्षनाममुक्तं, शिवदासेनापि तथैव व्याख्यातम् ।

अर्शोरोगादौ कुटजावलेहः।—

कुटजत्वक्‌तुला द्रोणे जलस्य विपचेत् सुधीः।
कषायं पादशेषञ्च गृह्णीयात् वस्त्रगालितम्॥ ३७॥
त्रिंशत् पलं गुड़स्यात्र दत्त्वा च विपचेत् पुनः।
सान्द्रत्वमागतं दृष्ट्वा चूर्णानीमानि दापयेत्॥ ३८॥
रसाञ्जनं मोचरसं त्रिकटु त्रिफलां तथा।
लज्जालु चित्रकं पाठां विल्वमिन्द्रयवं त्वचम्॥ ३९॥
भल्लातकं प्रतिविषां विड़ङ्गानि च बालकम्।
प्रत्येकं पलसम्मानं घृतस्य कुड़वं तथा॥ ४०॥
सिद्धशीते ततो दद्यान्मधुनः कुड़वं तथा।
जयेदषोऽवलेहस्तु सर्वाण्यर्शांसि वेगतः॥ ४१॥
दुर्नामप्रभवान् रोगानतीसारमरोचकम्।
ग्रहणीं पाण्डुरोगञ्च रक्तपित्तञ्च कामलाम्॥ ४२॥
अम्लपित्तं तथा शोथं कार्श्यञ्चैव प्रवाहिकाम्।
अनुपाने प्रयोक्तव्यमाजं तक्रं पयो दधि॥
घृतं जलं वा जीर्णे च पथ्यभोजी भवेन्नरः॥ ४३॥

इदानीं कुटजावलेहमाह, कुटजत्वगिति।—कुटजो वृक्षविशेषः तस्य त्वक् छल्ली, सा पलशतपरिमितः ग्राह्या। पादशेषमिति—चतुर्थांशं कषायं वस्त्रपूतं कृत्वा ग्राह्यम्। कुत्रचिदेतन्न प्रचरति, किन्तु पादशेषमिति—पादस्य चतुर्थांशस्य यच्छेषं चतुर्भागं तत् ग्राह्यम्, एतेनाष्टभागावशेषं कथितम्; तथा च तन्त्रान्तरे—"कुटजत्वक्‌पलशत जलद्रोणे विपाचयेत्। अष्टभागावशेषन्तु कषायमवतारयेत॥ वस्त्रपूत तत. क्वाथं पचेल्लेहत्वमागतम॥" इति। त्रिंशत्पलं गुडस्यात्रेति—अत्र क्वाथे गुडस्य पुरातनस्य त्रिंशत् पलं दत्त्वा पुनर्विपचेदिति यावत् सान्द्रत्वं भवति। चूर्णार्थमपराणि द्रव्याण्याह, रसाञ्जनमिति—रसाञ्जनं प्रतीतं, तच्च दार्वीक्वाथसमुद्भवमिति प्रसिद्धिः। मोचरसं शाल्मलीवेष्टकम। इन्द्रयवं त्वचमिति—इन्द्रयवं कुटजबीजं, त्वक् गुडत्वक्। दुर्नामप्रभवान् रोगानिति—गुल्मोदरप्रभृतीन्। अनुपाने प्रयोक्तव्यमिति

रक्तातीसारादौ कुटजाष्टकम्।—

कुटजत्वक्तुलामार्द्रां द्रोणनीरे विपाचयेत्।
पादशेषं शृतं नीत्वा चूर्णान्येतानि दापयेत्॥ ४४॥
लज्जालुधातकी विल्वं पाठा मोचरसस्तथा।
मुस्तं प्रतिविषा चैव प्रत्येकं स्यात् पलं पलम्॥ ४५॥
ततस्तु विपचेद्भूयो यावद्दर्वीप्रलेपनम्।
जलेन छागदुग्धेन पीतो मण्डेन वा जयेत्॥ ४६॥
सर्वातिसारान् घोरांस्तु नानावर्णान् सवेदनान्।
असृग्दरं समस्तञ्च सर्वाशांसि प्रवाहिकाम्॥ ४७॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण विरचितायां शार्ङ्गधरसंहितायां मध्यखण्डे चिकित्सितस्थानेऽवलेहकल्पनानामाष्टमोऽध्यायः॥ ८॥

---

# नवमोऽध्यायः।

## अथ स्नेहपरिभाषा।—

स्नेहस्य पाकविधिर्मात्रा च।—

कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव वा।

---

—आजं तक्रम्, आजं पयः, आजं दधि, आजं घृतञ्चेति। जलं पानीयं तक्रादीनामभावात्; एतत् सकलमनुपानं यथासात्म्यं निषेवेतेत्यर्थः। जीर्णे चेति—द्रव्ये (?) परिणते सति पथ्यभोजी भवेन्नर इति भावः; यतः,—"औषधशेषे भुक्तम्" इत्यादिवाक्यानुरोधात्॥ ३९—४३॥

कुटजाष्टकावलेहमाह, कुटजेति।—अयं कुटजाष्टकावलेहो व्याख्यायां सुगम एवावगन्तव्यः। कार्य्यविधिस्तु पूर्ववत् बोद्धव्यः। दर्वीप्रलेपनम् इत्यवलेहस्य संसिद्धिलक्षणं सूचितं पूर्वोक्तावलेहविधौ ज्ञातव्यम्॥ ४४—४७॥

इति श्रीवाक्यव्याख्यप्रकाशवैद्य-श्रीमाधसिंहात्मजेनाढमल्लेन विरचितायां शार्ङ्गधरदीपिकायां मध्यखण्डे चिकित्सितस्थानेऽवलेहकल्पनानामाष्टमोऽध्यायः॥ ८॥

---

अथ स्नेहेति।—तत्र तावत् प्रथमतः परिभाषामस्य व्याचष्टे। इदानीं

चतुर्गुणे द्रवे साध्यं तस्य मात्रा पलोन्मिता ॥ १ ॥

स्नेहपाकार्थं क्वाथसाधनविधिः।—

निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम्।
पादशिष्टं गृहीत्वा च स्नेहं तेनैव साधयेत् ॥ २ ॥

क्वाथ्यस्य मृदुमध्यादिभेदेन जलपरिमाणम्।—

चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम्।
तथा च मध्यमे द्रव्ये दद्यादष्टगुणं पयः॥
अत्यन्तकठिने द्रव्ये नीरं षोडशिकं मतम् ॥ ३ ॥

क्वाथ्यद्रव्यस्य परिमाणभेदेन जलपरिमाणम्।—

कर्षादितः पलं यावत् क्षिपेत् षोडशिकं जलम्।

---

स्नेहकल्पनां दर्शयन्नाह, कल्कादिति।—अनुक्ते कल्कात् कल्कयोग्यद्रव्यात् घृतं तैलं वा चतुर्गुणं ग्राह्यं, न तु दृषदि पेषितात् कल्कात्। द्रवमपि चतुर्गुणं स्नेहपरिमाणात्, द्रवं तोयादि। तस्य मात्रा पलोन्मितेति—तस्य संसिद्ध-स्नेहस्य पानार्थं पलोन्मिता पलप्रमाणा मात्रा ज्ञेया इति, अनुक्तेषु मानमिदं सामान्यम्। परिभाषेयमपि सामान्यस्नेहपाकविधौ बोद्धव्या; तथा हि—"कल्का-च्चतुर्गुणः स्नेहः स्नेहात् क्वाथश्चतुर्गुणः। क्वाथ्याच्चतुर्गुणं वारि क्वाथः क्वाथ्यसमो मतः॥" इति। विशेषोऽपि क्वचिद्दृश्यते, यथा तन्त्रान्तरे वासाघृते बलाद्ये घृते वा; तद्यथा—"बलाद्यष्टगुणैस्तोयैः क्वथितं क्वाथदुग्धयोः। प्रत्येकं द्विगुणो भागो भिषक् सर्पिषि निक्षिपेत्॥" इति ॥ १।२ ॥

इदानीं द्रव्यविशेषे क्वाथनिमित्तं जलमानमाह, चतुर्गुणमिति।—अत्र चतुर्गुण-प्रभृतिकं द्रव्यपरिमाणात् बोद्धव्यं, यावत्परिमाणं क्वाथ्यद्रव्यं भवति तावत्परिमाणा-च्चतुर्गुणितं जलं ग्राह्यमित्यर्थः। मृदु कठिनं कठिनतरञ्च द्रव्यं तत्रैवानुमानतो-ऽवगन्तव्यम्। तथा च मध्यमे द्रव्ये दद्यादष्टगुणं पय इति—मध्यमे मृद्वादिसङ्घाते पयः पानीयं, यत्र मृदुकठिनतरद्रव्यमेकत्र मिलित्वा क्वाथ्यं तत्राष्टगुणं पानीयं दत्त्वा पादशेषं ग्राह्यमिति सर्वत्र; तथा हि—"मृद्वादिक्वाथ्यसङ्घाते मानानुक्तेश्चिकित्सकाः। मध्यस्थोभयभागित्वाद्दिशन्त्यष्टगुणं जलम्॥" इति ॥ ३ ॥

अथ मतान्तरे परिमाणविशेषमाह, कर्षादित इति।—कर्षादित इत्यादि-

तदूर्द्धं कुड़वं यावद्भवेदष्टगुणं पयः ॥
प्रस्थादितः क्षिपेन्नीरं खारी यावच्चतुर्गुणम् ॥ ४ ॥

स्नेहपाके जलादिद्रवभेदेन कल्कस्य परिमाणम्।—

अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम्।
कल्कस्यांशं तत्र दद्यात् चतुर्थं षष्ठमष्टमम् ॥ ५ ॥
दुग्धे दध्नि रसे तक्रे कल्को देयोऽष्टमांशकः।
कल्कस्य सम्यक् पाकार्थं तोयमत्र चतुर्गुणम् ॥ ६ ॥

---

परिमाणं सामान्यद्रव्यविषयं वर्त्तते, अन्यथा स्वतन्त्रविरोधः, यावत् क्वाथ्यद्रव्यं कर्षादिपरिमाणात् पलं भवति तावत्तत्र षोड़शांशं जलं दत्त्वा क्वाथः पादशेषो ग्राह्यः, षोड़शिकमत्र क्वाथ्यद्रव्यपरिमाणात्। ततस्तु पलादुपरि यावत् कुडवं क्वाथ्यद्रव्यपरिमाणं भवति तावत्तत्र पयः पानीयमष्टगुणं भवेत् क्वाथ्यद्रव्यादित्यर्थः; अत्र क्वाथः चतुर्थांशः ग्राह्य इति सर्वत्र। प्रस्थादित इति—प्रस्थादिपरिमाणात् यावत् खारी भवति तावत्तत्र चतुर्गुणं नीरं पानीयं प्रक्षिप्य सङ्क्वाथ्य च पादशेषो ग्राह्य इति तात्पर्य्यार्थः। आदिशब्दात् आढ़कद्रोणसूर्पद्रोणीप्रभृतयो ग्राह्याः। यद्वा, प्रस्थस्यादिः प्रस्थादिस्तस्मात्, तेन शरावमपि गृह्यते, शरावादित इत्यर्थः ॥ ४ ॥

अपरमप्यनुक्रमाह, अम्बुक्वाथेति।—अत्र स्नेहपाके पानीयादित्रयाणां द्रव्याणां मध्ये यदा एकेन पाकः स्यात् तदा कल्कस्य कल्कद्रव्यस्य चतुर्थांशं षष्ठांशम् अष्टमांशं यथाऽनुक्रमेण देयम्; अनुक्रमो यथा—यदि अम्बुना केवलेन पाकस्तर्हि कल्कद्रव्यस्य चतुर्थांशं देयं, स्नेहपरिमाणादित्यर्थः। यदा केवलेन क्वाथेन पाकस्तदा कल्कद्रव्यस्य षष्ठांशं देयम्, अत्रापि स्नेहपरिमाणादित्यर्थः। यत्र तु केवलस्वरसेनैव साध्यते स्नेहः तत्र कल्कद्रव्यस्याष्टमांशं देयं, स्नेहमानादिति अत्रापि सम्बन्धः इत्यनुक्रमः। अपरमपि, दुग्धे इति—अत्रापि एकद्रव्यसाध्यता सूच्यते, तदा कल्कद्रव्यं स्नेहपरिमाणादष्टमांशं देयमिति भावः। कल्कस्येति—यत्र तु अन्यद्रवैः केवलकल्कैनैव साध्यते स्नेहस्तदा चतुर्गुणं * कल्कद्रव्यचतुर्गुणं तोयं

---

* कल्कद्रव्यचतुर्गुणं जलमिति व्याख्या न समीचीना साम्प्रदायिकसिद्धान्त-विरोधात्; चतुर्गुणता तु स्नेहपरिमाणादेव इति सर्वेषां सिद्धान्तः। गूढ़ार्थकारेणापि इयमेव व्याख्या समादृता; तथा च—"कल्कस्य सम्यक् पाकार्थं चतुर्गुणं स्नेहादित्यर्थः" इति।

क्षीरादिद्रवेण स्नेहपाके द्रवपरिमाणम्।—

द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्॥ ७॥

केवलकल्कसाध्यस्नेहपाकपरिभाषा।—

द्रव्येण केवलेनैव स्नेहपाको भवेत् यदि।
तत्राम्बुपिष्टः कल्कः स्याज्जलञ्चात्र चतुर्गुणम्॥ ८॥

कल्कोल्लिखविरहितस्नेहपाकपरिभाषा।—

* क्वाथेन केवलेनैव पाको यत्रेरितः क्वचित्।
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते॥ ९॥

---

निक्षिपेदिति सर्वत्र सम्यक् पाकार्थं बोद्धव्यम्; एतेन किमुक्तम्? यदा क्षीरादिभिः प्रत्येकेन स्वकल्केन पाकस्तदा चतुर्गुणं चतुर्थांशं पानीयं देयम्; पानीयं विना पाको नाप्नोति सर्वसतम्॥ ५।६॥

इदानीमनुक्तमानद्रवाणां मानमाह, द्रवाणीति।—यत्र स्नेहपाकार्थं द्रवाणि क्षीरतक्ररसमूत्रक्वाथादीनि अन्यान्यपि पञ्चादीनि पञ्चप्रभृतीनि भवन्ति, अनुक्तमानानीति विषयः, तत्र तानि द्रवाणि स्नेहसमानि प्रत्येकमाहुराचार्याः, यथा वक्ष्यमाणत्रिफलाघृतं। अर्वाक् द्रवं चतुस्त्रवा, तर्हि स्नेहपरिमाणाच्चतुर्गुणं ज्ञेयं प्रत्येकमित्यर्थः। एके यथापूर्वं चतुर्गुणमिति पठन्ति, तत्रापि स एवार्थः। कुत्रचित् द्रव्याणीति पाठो दृश्यते, सोऽसङ्गत एव॥ ७॥

अथ केवलद्रव्यस्य स्नेहपाकार्थं मानमाह, द्रव्येणेति।—अत्र द्रव्यं स्नेहाच्चतुर्थांशं, कल्कार्थं वारि तावद्देयं यावता कल्कः स्यात्, यतः पेषणे जलस्य परिमाणं न स्यात्। जलञ्चात्र चतुर्गुणमिति—अत्र कल्के जलं पानीयं चतुर्गुणं देयं, स्नेहमानादित्यर्थः। एके द्रव्यमानाच्चतुर्गुणं जलमिति व्याख्यानयन्ति, तन्न मनोहरं कल्कद्रव्याल्पत्वात्॥ ८॥

अपरमप्याह, क्वाथेनेति।—यत्र स्नेहे क्वचिदिति—अनुक्ते केवलेन क्वाथेन

---

* परिभाषेयं न सर्वैः समाद्रियते।

† त्रिफलाघृतस्य दृष्टान्तोऽयं न युज्यते, यतः परिभाषेयमनुक्तद्रवमानविषयिणी, त्रिफलाघृते तु सर्वेषामेव द्रवाणां मानोल्लेखो दृश्यते।

अकल्कस्नेहपाकपरिभाषा ।—

**कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ॥ १० ॥**

पुष्पकल्कस्नेहपाकपरिभाषा ।—

**पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम् ।**
**स्नेहे स्नेहाष्टमांशश्च पुष्पकल्कः प्रयुज्यते ॥ ११ ॥**

कृत्वा पाकः कथितः, तत्र स्नेहे क्वाथ्यद्रव्यस्य कल्कः कार्यः, * कल्कार्थञ्च चतुर्गुणं जलमिति ; तेन येनैव द्रव्येण क्वाथः क्रियते, तेनैव तत्पादमितेन च द्रव्येणायमपि कृत्वाऽत्र चतुर्गुणेन च जलेन सह साध्यः, पूर्वं क्वाथेन साध्यः पश्चात् कल्केनेत्यर्थः ॥ ९ ॥

अथ केवलद्रवसाधनमाह, कल्कहीन इति ।—यः स्नेहो घृततैलादिकः कल्कहीनः कल्करहितो भवेत्, सः केवले द्रवे साध्यः ; द्रवमत्र चतुर्गुणं स्नेहपरिमाणात् ॥ १० ॥

इदानीं पुष्पकल्कस्य परिमाणमाह, पुष्पकल्क इति ।—यः पुष्पकल्कसंज्ञः स्नेहः तत्र स्नेहे तोयं पानीयं चतुर्गुणं देयं, चतुर्गुणता च स्नेहपरिमाणात् । सः पुष्पकल्कः स्नेहाष्टमांशः प्रयुज्यते स्नेहस्याष्टमांशं तेन साध्यो योज्य इत्यर्थः । पुष्पाणि यथा—नागकेशर-कुङ्कुम-लवङ्ग-दमनक-सुरपुष्प-चम्पकोत्पल-पुण्डरीक-केतकी-जाती-कुसुमप्रभृतीनि । एके पुष्पकल्कः प्रयुज्यते इत्यस्य स्थाने पत्रकल्कः प्रयुज्यते

* पाकार्थे क्वाथे सत्यपि पुनः कल्कार्थं चतुर्गुणं जलमिति यदुक्तं तन्न समीचीनं, सुश्रुतविरोधात्, सुश्रुते येन केनापि द्रवेण सहैव कल्कपाकविधानात्, तथा च—"स्नेहाच्चतुर्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः तदैकध्यं संसृज्य विपचेत् इत्येष स्नेहपाककल्पः" इति । किञ्च परिभाषायामपि केवलस्वरसक्षीरमांसाद्यैः सह पाके कल्कस्य वीर्य्याधानार्थं चतुर्गुणजलेन पाकव्यवस्था चास्ति, न तु क्वाथेन सह पाके, तथा च—"स्वरसक्षीरमांसाद्यैः पाको यत्रेरितः क्वचित् । चतुर्गुणं जलं तत्र वीर्य्याधानार्थमावपेत् ॥ न मुञ्चति रसं द्रव्यं क्षीरादिभिरुपस्कृतम् । कल्कस्य सम्यक् पाकार्थं जलं तत्र चतुर्गुणम् ॥" इति । किञ्च केवलक्वाथेन सह पाके क्वाथ्यद्रव्यस्य कल्कोऽपि ग्राह्य इति परिभाषाऽपि चरकादिविरुद्धा, यत्र स्नेहे नानाविकारारिभिः विधते तत्रैव कल्कक्वाथयोरुभयोर्विधिर्दृश्यते ; तथा च—"यथाधिकारमेकीकृतगणैः स्यात् स्नेहसंविधौ । तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना ॥" इति ।

स्नेहपाकसिद्धिलक्षणम् ।—

वर्त्तिवत् स्नेहकल्कः स्यात् यदाऽङ्गुल्या विमर्दितः ।
शब्दहीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा ॥ १२ ॥
यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि ।
गन्धवर्णरसोत्पत्तिः स्नेहसिद्धिस्तदा भवेत् ॥ १३ ॥

स्नेहस्य त्रिविधपाकलक्षणम् ।—

स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ।
ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् ॥ १४ ॥
मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले ।
ईषत्कठिनकल्कश्च स्नेहपाको भवेत् खरः ॥ १५ ॥

दग्धामपक्वस्नेहयोः दोषः ।—

तदूर्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः ।
आमपाकश्च निर्वीर्यो वह्निमान्द्यकरो गुरुः ॥ १६ ॥

---

इति पठन्ति व्याख्यानयन्ति, तत् पक्वकल्कं प्रक्षेपमाहुः, यथा हि—"गन्धनिर्य्यास-पुष्पाणां सिद्धशीतेऽवतारिते । प्रक्षेपो गन्धहार्थं पक्वकल्कन्तु तद्विदुः ॥" इति ॥ ११ ॥

इदानीं स्नेहानां संसिद्धलक्षणान्याह, वर्त्तिवदिति ।—यदा स्नेहे परिपाचितः कल्कः अङ्गुल्या विमर्दितो वर्त्तिसदृशो भवति तदा सिद्धो ज्ञेयः । अथवा स एव कल्कः यदाऽग्नौ निक्षिप्तः शब्दरहितो भवति तदा सिद्धो ज्ञातव्यः इति सामान्यम् । अपरमपि विशेषमाह—यदा स्नेहस्य पाकान्ते तैले फेनोद्गमो भवति सर्पिषि च फेनशान्तिर्भवति तदा सिद्धलक्षणं बोद्धव्यम् । गन्धवर्णरसोत्पत्तिरपि यदा तदा स्नेहसिद्धिः स्यात्; वर्णादिकमपि तैले सर्पिषि च ज्ञातव्यम् ॥ १२।१३ ॥

अधुना त्रिविधस्नेहपाकस्य लक्षणमाह,—स्नेहपाक इति । ईषत्सरसकल्क इति ।—यदा कल्के सान्द्रता किञ्चित् भवति अग्नौ निक्षिप्ते सति चटचटाशब्दो भवति तदा मृदुपाको ज्ञेयः । यदा नीरसः कल्को भवति कोमलश्च नातिकठिनो नातिमृदुरिति तदा मध्यपाकः । यदा किञ्चित् कठिनकल्को जातः नीरसश्च भवति तदा खरपाक इति । एतेषां परीक्षणमनुमानतोऽवगन्तव्यं गुरुमुखादर्शनाद्वा ॥ १४।१५ ॥

दग्धामपक्वस्नेहयोर्दोषमाह, तदूर्ध्वमिति ।—तदूर्ध्वं खरपाकादूर्ध्वं यदा स्नेहकल्कः

पाकविशेषेण स्नेहस्य उपयोगिता ।—

नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु ।
अभ्यङ्गार्थं खरः प्रोक्तो युञ्ज्यादेवं यथोचितम् ॥ १७ ॥

व्यस्य व्यस्य पक्वघृतादीनां गुणाधिक्यम् ।—

घृततैलगुडादींश्च साधयेन्नैकवासरे ।
प्रकुर्वन्त्युषिता ह्येते विशेषाद्गुणसञ्चयम् ॥ १८ ॥

स यथा—

विषमज्वरादौ षट्पलघृतम् ।—

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
ससैन्धवैश्च पलिकैर्घृतप्रस्थं विपाचयेत् ॥ १९ ॥

---

कठिनतरो भवति तदा दग्धो ज्ञेयः, स च सर्वकर्मसु निष्फलः स्यात् दाहकरश्च भवति । आमपाकश्चेति—आमपाकोऽपरिपाककल्कः स्नेहो निर्वीर्यो भवति निःशेषेण वीर्यरहित इत्यर्थः । वह्निमान्द्यकृदयोगी गुरुश्च भवति ॥ १६ ॥

इदानीं तस्य त्रिविधपाकस्य गुणमाह, नस्यार्थमिति ।—नस्यविषये मृदुपाकः स्नेहः । मध्यपाकस्तु सर्वकर्मसु युज्यते, सर्वकर्म नस्याभ्यङ्गपानादिकम् । खरपाकस्तु केवलाभ्यङ्गे विहितः नान्यकर्मसु । यथोचितमिति—यथायोग्यं युञ्ज्यादित्यर्थः । एके "नस्याभ्यङ्गे खरः प्रोक्तः" इति पठन्ति, तन्न सर्वमतं, नस्ये तु सौम्यमाहुः ॥१७॥

स्नेहस्तु किमेकाहेनैव साध्यः, उत दीर्घदिवसैः ? तद्विषयमाह, घृतेति ।—घृततैले प्रसिद्धे, गुडोऽवलेहः ; आदिग्रहणात् बृहत्सम्भारा ये चान्ये प्रयोगाः तान् सर्वान् एकस्मिन्नेव वासरे न साधयेत् न पाचयेत् इत्यर्थः । कुत इत्याह, प्रकुर्वन्ति इत्यादि ।—एते स्नेहादयस्तु यदा उषिताः सन्ति तदा गुणसञ्चयं प्रकुर्वन्ति, अत एव बहुदिवसैः क्वाथ्या साधनीया इति भावः । तन्त्रान्तरेषु एतत् बहुद्रव्यसम्भार-विषयम्, अल्पसम्भारेऽपि स्वल्पमपि स्नेहं किञ्चिद्दिवसापायापरेऽह्नि सिद्धोऽवतार्यः, गुडादिकमपि चापरेऽह्नि मधुदानादिकमुक्तं कुर्यात्, नैवं सर्वमतविरोधः ॥ १८ ॥

स इति ।—स यथेत्यनेन तं स्नेहपाकसमूहं दर्शयति ग्रन्थकारः । तत्रादौ तावत् घृतकल्पनां दर्शयन्नाह, यतस्तैलादिभ्यो घृतकल्पः पूर्वाचार्यैर्दर्शितः, तथैवात्रापि लिखितः । प्रथमतः षट्पलकघृतव्याख्यानमाह, पिप्पलीति ।—अत्र पिप्पल्यादिकं पञ्चद्रव्यं पञ्चकोलसंज्ञं बोद्धव्यम् ; ततस्तन्त्रान्तरे पञ्चकोलघृतमस्य नाम प्रसिद्धम् ।

क्षीरं चतुर्गुणं दत्त्वा तत् सिद्धं प्लीहनाशनम् ।
विषमज्वरमन्दाग्नि-हरं रुचिकरं परम् ॥ २० ॥

ग्रहण्यादौ चाङ्गेरीघृतम् ।—

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा नागरं धान्यं पाठा बिल्वं यमानिका ॥ २१ ॥
द्रव्यैश्च पलिकैरेतैश्चतुःषष्टिपलं घृतम् ।
घृताच्चतुर्गुणो देयः चाङ्गेरीस्वरसो बुधैः ॥ २२ ॥
तथा चतुर्गुणं दत्त्वा दधि सर्पिर्विपाचयेत् ।
शनैः शनैर्विपक्वं तच्चाङ्गेरीघृतमुत्तमम् ॥ २३ ॥
तत् घृतं कफवातघ्नं ग्रहण्यर्शोविकारनुत् ।
हन्त्यानाहं गुदभ्रंशं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ २४ ॥

ग्रहण्यादौ मसूरघृतम् ।—

मसूराणां पलशतं नीरद्रोणे विपाचयेत् ।
पादशेषं शृतं नीत्वा दत्त्वा बिल्वपलाष्टकम् ॥ २५ ॥

---

अत्र चव्यमिति—विटपविशेषः, यस्य फलं गजपिप्पलीति श्रुतिः । पलिकैरिति—पलप्रमाणता प्रत्येकमाहुः, अत एव क्षीरषट्पलकघृतमिदं चतुर्गुणक्षीरेण सह षट्पलप्रमाणकद्रव्यैश्च साधितमित्यर्थः । अत्र चतुर्गुणं नीरमपि देयं, सम्यक्पाकार्थमित्यस्मत्सम्प्रदायाभिप्रायः । घृतप्रस्थमिति—षोडशपलमितम् । क्षीरस्य चतुर्गुणताऽत्र घृतपरिमाणात् । तत् सिद्धमिति—सिद्धताऽस्य परिभाषोक्तविधानात् ॥ १९।२० ॥

अथ चाङ्गेरीघृतमाह, पिप्पलीति ।—अत्र हस्तिपिप्पली गजपिप्पली । श्वदंष्ट्रा गोक्षुरकः । नागरं शुण्ठी । बिल्वमत्र बिल्वशलाटुः । पलिकैरिति—पलप्रमाणं प्रत्येकम् । चाङ्गेरीस्वरस इति—चाङ्गेरी प्रसिद्धा, सा चाम्लरसा आमचाङ्गेरीति लोके प्रसिद्धा, तस्याः स्वरस इति—सद्योरसः । बुधैरिति ग्रहणेन सद्योरसाभावात् क्वाथोऽपि देयः । दधि चतुर्गुणं घृतपरिमाणात् । शनैः शनैः पक्वमिति—मन्दपावकपाचितमिति भावः, दग्धभयात् ॥ २१—२४ ॥

अथ मसूराद्यं घृतमप्याह, मसूराणामिति ।—मसूरोऽन्नविशेषः प्रसिद्धः । नीरद्रोणे जलद्रोणे, * चतुःषष्टिकुडवपरिमितं भवति । बिल्वं पलाष्टकमितं

---

* जलद्रोणे चतुःषष्टिकुडवपरिमितमिति यदुक्तं तन्न समीचीनम्, द्रोणस्य

घृतप्रस्थं पचेत्तेन सर्वातीसारनाशनम्।
ग्रहणीं भिन्नविट्कञ्च नाशयेच्च प्रवाहिकाम्॥ २६॥

रक्तपित्तादौ कामदेवघृतम्।—

* अश्वगन्धा पलशतं तदर्द्धं गोक्षुरं स्मृतम्।
शतावरी विदारी च शालपर्णी बलाऽमृता॥ २७॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा।
काश्मर्य्याश्च फलञ्चैव माषबीजं तथैव च॥ २८॥
पृथक् दशपलान् भागान् चतुर्द्रोणेऽम्भसि पचेत्।
द्रोणशेषे रसे तस्मिन् पचेच्चैव घृताढ़कम्॥ २९॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम्।
पत्रकं नागपुष्पञ्च आत्मगुप्ताफलं तथा॥ ३०॥

भवति; बिल्व बिल्वमज्जा, तच्च कल्कीकृतं जलेन सह देयम्। कर्त्तव्यविधावपि मसूराः कर्पटबद्धाः क्वाथ्याः, मृद्वग्निना च साधनं कार्य्यम्॥ २५।२६॥

इदानीं कामदेवघृतविवरणं दर्शयन्नाह, अश्वगन्धेति।—अश्वगन्धामूलं पलशतं ग्राह्यम्। तदर्द्धं गोक्षुरमिति—पञ्चाशत्पलं, गोक्षुरोऽत्र पञ्चाङ्गो ग्राह्यः। † अपराणि द्रव्याण्यपि दशपलमिति प्रत्येकमाह; तानि कानि इत्याह, शतावरीत्यादि—सुगमम्। तत्र तु अश्वत्थशुङ्गानीति—पिप्पलशुङ्गानि सिद्धानि। काश्मरी गाम्भारी, तस्या फलानि। पद्मबीजं प्रसिद्धं "कमलगटा" शब्दवाच्यम्। माषबीजमिति—माषं प्रतीतम्। एतत् सकलं पानीयद्रोणचतुष्टये संक्वाथ्य पादशेषं वस्त्रगालितं ग्राह्यम्। अपराण्यपि कल्कयोग्यानि द्रव्याण्याह, मृद्वीकेत्यादि—मृद्वीका द्राक्षा। पद्मकं

शब्देन चतुःषष्टिकुडवग्रहणं शुष्कद्रव्ये एव बोद्धव्यं न तु द्रवार्द्रयोः, अतः जल-द्रोणशब्देन चतुःषष्टिशरावपरिमितमित्येवार्थः साधुः।

* चक्रोक्तकामदेवघृते "बलाऽमृता" इत्यत्र "बला तथा" "घृताढकम्" इत्यत्र "घृतप्रस्थम्" "पद्मकम्" इत्यत्र "बालकम्" इति पाठान्तराणि।

† शिवदासेन "शतावर्य्यादीनां बलान्तानां प्रत्येकं पञ्चाशत्पलानीत्यर्थः, अश्वत्थशुङ्गादीनाञ्च पञ्चानां पृथक् दशपलानि, ततो मिलित्वा पलशतचतुष्टयं क्वाथ्ये प्रतिशतं जलद्रोणं देयः; तुलाद्रव्ये जलद्रोण इत्युक्तेः" इति व्याख्यातम्।

नीलोत्पलं सारिवे द्वे जीवनीयो गणस्तथा।
पृथक्कर्षसमान् भागान् शर्करायाः पलद्वयम् ॥ ३१ ॥
रसस्य पौण्ड्रकेक्षूणामाढकैकं समाहरेत्।
चतुर्गुणेन पयसा घृताढकं विपाचयेत् ॥ ३२ ॥
घृतमेतन्निहन्त्याशु रक्तपित्तमुरःक्षतम्।
हलीमकं पाण्डुरोगं वर्णभेदं स्वरक्षयम् ॥ ३३ ॥
मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलञ्च नाशयेत्।
एतत् सर्पिः प्रयोक्तव्यं बह्वन्तःपुरवासिनाम् ॥ ३४ ॥

काष्ठविशेष, तत्तु चम्पकवत् वृक्षविशेषः। आत्मगुप्ता कपिकच्छुः तस्याः फलानि। नीलोत्पलं नीलकमलवाच्यं, तदभावे कमलबीजं ग्राह्यम्। सारिवे द्वे इति— कृष्णसारिवा शुक्लसारिवेति, ते "चफाई" शब्दवाच्ये, कृष्णसारिवा कलहंसवत्-पत्रा सुगन्धा, शुक्लसारिवा जम्बूवत्पत्रा व्रतती। जीवनीयो गण इति— जीवनीयो * जीवन्ती शाकविशेषः, तदादिसंज्ञको जीवनीयो गणः, तथा हि— "जीवन्ती मुद्गपर्णीयुक्ताकाकोल्यौ जीवकर्षभौ। मेदे द्वे यष्टीमधुको जीवनीयो गणो मतः ॥" इति। तस्याप्रसिद्धत्वात् तत्साम्यगुणद्रव्याणि योज्यानि इति वृद्ध-वैद्यानां सम्मतम्। एतानि महोकादीनि द्रव्याणि पृथक् कर्षप्रमाणानि ग्राह्याणि। शर्करायाः पलद्वयमिति— केचित् सिद्धे आसन्न शर्करायाः प्रक्षेपमाहुः। रसस्य पौण्ड्रकेक्षूणामिति— † पौण्ड्रको विख्यातः इक्षुविशेषः, इक्षुः सामान्यः, स च श्रीरितैलप्रदर्शितो यथालाभं ग्राह्यः। ननु इक्षुग्रहणेनैव पौण्ड्रकग्रहणप्राप्तिः,

* जीवनीये जीवन्ती शाकविशेषः इत्यादि व्याख्या न समीचीना, तन्त्रान्तरे "जीवकर्षभकौ मेदे काकोल्यौ मुद्गपर्णिके। जीवन्ती मधुकञ्चेति जीवनीयो गणो मतः ॥" इत्युक्तत्वेन जीवकशब्दस्य प्रथमग्रहणात्, जीवन्तीशब्दस्य प्रथमोल्लेखात् वा न जीवनीयगणः परन्तु जीवनीयशक्तिवर्द्धकत्वात् गणस्यास्य जीवनीय इति संज्ञा ज्ञातव्या।

† रसस्य पौण्ड्रकेक्षूणाम् इत्यत्र पौण्ड्रकशब्दः इक्षुविशेषणं, बह्वीषु इक्षुजातिषु पौण्ड्रकसंज्ञकेक्षूणां रस इत्यर्थः चक्रादिसम्मतः, न तु पौण्ड्रकेक्षुरसः शीतेक्षु-अज्ञातसामान्येक्षुरसश्च इत्यर्थः, "रसस्य पौण्ड्रकेक्षूणामाढकं तत्र दापयेत्" इति चक्रसङ्ग्रहः।

स्त्रीणाञ्चैवाप्रजातानां दुर्बलानाञ्च देहिनाम् ।
श्रेष्ठं बलकरं वर्ण्यं हृद्यं पुष्टिरसायनम् ॥ ३५ ॥
ओजस्तेजस्करं हृद्यमायुष्यं प्राणवर्द्धनम् ।
संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम् ॥ ३६ ॥
सर्वरोगविनिर्मुक्तो पयःसिक्तो यथा द्रुमः ।
कामदेव इति ख्यातं सर्पिरुक्तं महागुणम् ॥ ३७ ॥

उन्मादादौ पानीयकल्याणकं घृतम् ।—

त्रिफला द्वे निशे कौन्ती सारिवे द्वे प्रियङ्गुका ।
शालपर्णी पृश्निपर्णी देवदार्वेलवालुकम् ॥ ३८ ॥
नतं विशाला दन्ती च दाडिमं नागकेशरम् ।
नीलोत्पलैला मञ्जिष्ठा विडङ्गं कुष्ठपद्मकम् ॥ ३९ ॥
जातिपुष्पं चन्दनञ्च तालीसं बृहती तथा ।
एतैः कर्षसमैः कल्कैर्जलं दत्त्वा चतुर्गुणम् ॥ ४० ॥

तत कथं भिन्नग्रहणम् ? उच्यते—पौण्ड्रकग्रहणं गुणप्राबल्यात् कृत, यतः,—"पौण्ड्रकः शीतलः स्निग्धो बृंहण. कफकृत सरः" इति, तस्मात् पौण्ड्रको विशेषणाव पाचनीयः (?)। अस्य रसस्याढकं प्रत्येकं द्विराढकग्रहणात् (?) घृताढकमेक, गोदुग्धं चतुराढकमिति ॥ २७—३७ ॥

अथ पानीयकल्याणकं घृतम् आह, त्रिफलेति।—त्रिफलाऽत्र हरीतकी-प्रभृतिफलत्रयम्। द्वे निशे हरिद्राद्वयम्। कौन्ती रेणुका। सारिवे द्वे कृष्णशुक्लभेदेन। प्रियङ्गुर्लताविशेष. तस्याः फलानि। शालपर्णी पृश्निपर्णी चेति कवराद्वयशब्दवाच्यम्। एलवालुकं स्वनामख्यातं, तच्च कुष्ठगन्धि कट्फलसदृशम्। नतं तगरपादिका। विशालेन्द्रवारुणी। दन्ती प्रसिद्धा। दाडिमं दाडिमफलं बीजानि च। नीलोत्पलं नीलकमलं, तदभावे पद्मबीजं द्रव्यं ग्राह्यम्। एला बृहत्फला। जाती मालती तस्याः कुसुमानि। चन्दनं श्वेतम्। तालीशं स्वनामप्रसिद्धम्। बृहती बृहत्कण्टकारिका; एतानि कर्षमात्राणि प्रत्येकम्। जलं पानीयं चतुर्गुणं देयं घृतपाकोपात्।

घृतप्रस्थं पचेद्धीमानपस्मारे ज्वरे क्षये।
उन्मादे वातरक्ते च कासे मन्दानले तथा॥ ४१॥
प्रतिश्याये कटीशूले तृतीयकचतुर्थके।
मूत्रकृच्छ्रे विसर्पे च कण्डूपाण्ड्वामये तथा॥ ४२॥
विषद्वये प्रमेहेषु सर्वथैवोपयुज्यते।
वन्ध्यानां पुत्रदं भूत-यक्षरक्षोहरं स्मृतम्॥ ४३॥

वातरक्ते अमृताघृतम्।—

अमृताक्वाथकल्काभ्यां सक्षीरं विपचेत् घृतम्।
वातरक्तं जयत्याशु कुष्ठं जयति दुस्तरम्॥ ४४॥

कुष्ठादौ महातिक्तकं घृतम्।—

सप्तच्छदः प्रतिविषा सम्पाकः कटुरोहिणी।
पाठा मुस्तमुशीरञ्च त्रिफला पर्पटस्तथा॥ ४५॥

घृतप्रस्थमिति—* कुडवचतुष्टयप्रमितं गव्यं घृतं भवति। केवलपानीयपादपाचनात् पानीयकल्याणकमस्य संज्ञा स्यात्॥ ३८—४३॥

अमृताद्यघृतविवरणमप्याह, अमृतेति।—अमृता गुडूची तस्याः क्वाथकल्काभ्यां कृत्वा सक्षीरं घृतं विपाच्य वातरक्तादिके देयम्; तेन क्वाथश्चतुर्गुणजलेन सिद्धः, स च घृताच्चतुर्गुण इति परिभाषाया प्रतीतः। कल्को दृषदि पेषितः, स च घृतांशः तेन कल्कद्रव्यं घृताच्चतुर्थांशं देयमित्यर्थः। सक्षीरमिति—चतुर्गुणं क्षीरं घृतपरिमाणात्। केचित्तु † सहसमं क्षीरमिति पठन्ति, एतदपि सङ्गतं, न विरुद्धं द्रवान्तरत्वात्। कल्केऽपि चतुर्गुणं पानीयं दत्त्वा पाचनीयमिति व्यवहारः। अस्य पानमाहुरभ्यङ्गञ्च॥ ४४॥

इदानीं महातिक्तकघृतमाह, सप्तच्छद इति।—सप्तच्छदः सप्तपर्णशब्दवाच्यः, स च प्रायशोऽपचसदृशो युग्मपत्रः। प्रतिविषा अतिविषा। सम्पाको राजवृक्षः तस्य

* प्रस्थेन कुडवचतुष्टयग्रहणं शुष्कद्रव्ये एव बोद्धव्यं, द्रवार्द्रयोस्तु शरावचतुष्टयमिति ज्ञेयम्।

† परिभाषासिद्धत्वात् वृद्धव्यवहाराच्च एतदेव मतं सङ्गतमिति। कल्केऽपि चतुर्गुणं पानीयमित्यादि यदुक्तं तत्र सर्वसम्मतं, तत्तु प्रागेव प्रदर्शितमिति।

पटोलनिम्बमञ्जिष्ठाः पिप्पली पद्मकं * शटी ।
चन्दनं धन्वयासश्च विशाले द्वे निशे तथा ॥ ४६ ॥
गुडूची सारिवे द्वे च मूर्वा वासा शतावरी ।
त्रायन्तीन्द्रयवौ यष्टी भूनिम्बश्चाक्षभागिकाः ॥ ४७ ॥
घृतं चतुर्गुणं दद्याद्धृतादामलकीरसः ।
द्विगुणः सर्पिषश्चाथ जलमष्टगुणं भवेत् ॥ ४८ ॥
तत् सिद्धं पाययेत् सर्पिर्वातरक्तेषु सर्वथा ।
कुष्ठानि रक्तपित्तञ्च रक्तार्शांसि च पाण्डुताम् ॥ ४९ ॥
हृद्रोगगुल्मवीसर्प-प्रदरं गण्डमालिकाम् ।
क्षुद्ररोगान् ज्वरांश्चैव महातिक्तमिदं जयेत् ॥ ५० ॥

कुष्ठादौ कासीसाद्यं घृतम् ।—

कासीसं द्वे निशे मुस्तं हरितालं मनःशिलाम् ।
कम्पिल्लकं गन्धकञ्च विडङ्गं गुग्गुलुं तथा ॥ ५१ ॥
सिक्थकं मरिचं कुष्ठं तुत्थकं गौरसर्षपान् ।
रसाञ्जनञ्च सिन्दूरं श्रीवासं रक्तचन्दनम् ॥ ५२ ॥

फलम् । चन्दनं श्वेतम् । विशाले द्वे इति—इन्द्रवारुणीद्वयम् । द्वे निशे इति—हरिद्राद्वयम् । सारिवे द्वे इति—शुक्लकृष्णभेदेन । मूर्वा चोरस्नायुः । वासा आटरूषकः । त्रायन्ती त्रायमाणा । शेषं द्रव्यं प्रसिद्धम् । अक्षभागिकाः कर्षप्रमाणाः प्रत्येकम् । घृतं चतुर्गुणमिति पूर्वद्रव्यसम्भारात् । आमलकीफलस्वरसो द्विगुणो घृतपरिमाणात् । स्वरसाभावे क्वाथोऽपि देयः न दोषः । जलं पानीयञ्चाष्टगुणं देयं सम्यक्पाकार्थं सर्पिषो घृतपरिमाणात् । एतत् सिद्धं महातिक्तं नाम घृतं वातरक्तादिषु प्रशस्तम् ॥ ४५—५० ॥

अधुना कासीसाद्यघृतविवरणमाह, कासीसमिति ।—कासीसं द्रव्यविशेषः [illegible], अस्य भेदः पुष्पकासीसं, तच्च किञ्चित् पीतम् । द्वे निशे द्वे हरिद्रे । कम्पिल्लको रोरीशब्दवाच्यो द्रव्यविशेषः, कम्पिल्लेत्यपरे । सिक्थकं मधूच्छिष्टम् ।

* चरकवाग्भटचक्रदत्तेषु शटी इत्यत्र यथा तथा विशाला इत्येकवचनान्त एव पाठः, न तु विशाले इति ।

हरिमेदं निम्बपत्रं करञ्जं सारिवां वचाम्।
मञ्जिष्ठां मधुकं मांसीं शिरीषं लोध्रपद्मकम्॥ ५३॥
हरीतकीं प्रपुन्नाडं चूर्णयेत् कार्षिकान् पृथक्।
ततस्तच्चूर्णमालोड्य त्रिंशत्पलमिते घृते॥ ५४॥
स्थापयेत्ताम्रपात्रे च घर्मे सप्त दिनावधि।
अस्याभ्यङ्गेन कुष्ठानि दद्रुपामाविचर्चिकाः॥ ५५॥
शूकदोषा विसर्पाश्च विस्फोटा वातरक्तजाः।
शिरःस्फोटोपदंशाश्च नाडीदुष्टव्रणानि च॥ ५६॥
शोथो भगन्दरश्चैव लूताः शाम्यन्ति देहिनाम्।
शोधनं रोपणञ्चैव सवर्णकरणं घृतम्॥ ५७॥

व्रणशोधे जात्यादिघृतम्।—

जातीनिम्बपटोलञ्च द्वे निशे कटुरोहिणी।
मञ्जिष्ठा मधुकं सिक्थं करञ्जोशीरसारिवाः॥ ५८॥

---

रसाञ्जनं दार्वीक्वाथोद्भवम्। सिन्दूरं प्रसिद्धम्। श्रीवासः निर्य्यासद्रव्यं, सरलशब्दवाच्यम्। हरिमेदो विट्खदिरः गोजग्रशब्दवाच्यः। करञ्जो वृहत्करञ्जो वृक्षविशेषः, लोके चोला इति प्रसिद्धः। सारिवा आस्फोता "आफोई" इति लोके। मांसी गन्धमांसी जटाविटपः। पद्मकं पद्मकाष्ठम्। प्रपुन्नाडः चक्रमर्दबीजानि। एतानि पृथक् कर्षप्रमितानि चूर्णीकृत्य त्रिंशत्पलपरिमिते घृते आलोड्य ताम्रपात्रे निधाय घर्मे धारयेत् यावत् सप्त दिनानि भवन्ति; एतच्चादर्वाप्रसिद्धं सूर्य्यपाकसंज्ञमिति बोद्धव्यम्। अन्यत्सम्प्रदाये तु कल्कार्हं द्रव्यं कल्कीभूतं कृत्वा चतुर्गुणेन पानीयेन सह घृतं विपाच्य पश्चात् प्रक्षेपयोग्यं द्रव्यं चूर्णीकृत्य तत्र प्रक्षिप्य आलोड्य घर्मे सप्तदिनं यावत् धारयेत् एवं सिद्धो भवति। कल्कार्थं द्रव्यं यथा—हरिद्रामुस्तरक्तचन्दनेरिमेदनिम्बपत्रकरञ्जसारिवावचामञ्जिष्ठामधुकमांसीशिरीषलोध्रपद्मकहरीतकीप्रभृतिकं, शेषं प्रक्षेपार्थं ज्ञेयम्॥ ५३—५७॥

इदानीं जात्यादिकं घृतमाह, जातीत्यादि।—जातीनिम्बपटोलमित्यत्र त्रयाणां पत्राणि ग्राह्याणि तन्त्रान्तरदर्शनात्, तथा च—"जातीनिम्बपटोलानां नक्तमालस्य पल्लवाः" इत्यादि। द्वे निशे द्वे हरिद्रे, तेन हरिद्रा दारुहरिद्रा। कटुरोहिणी कटुकीशब्दवाच्यम्। मधुकं यष्टीमधु। सिक्थं मदनकम्। करञ्जो

तुत्थञ्च विपचेत् सम्यक् कल्कैरेभिर्घृतं बुधः ।
अस्य लेपाद्विरोहन्ति सूक्ष्मनाडीव्रणा अपि ॥
मर्माश्रिताः क्लेदिनश्च गम्भीराः सरुजो व्रणाः ॥ ५९ ॥

अथ विन्दुघृतम् ।—

चित्रकं शङ्खिनी पथ्या काम्पिल्लस्त्रिवृतायुगम् ।
वृद्धदारश्च सम्पाको दन्ती च त्रिफला तथा ॥ ६० ॥
कोशातकी देवदाली नीलिनी गिरिकर्णिका ।
सातला पिप्पलीमूलं विडङ्गं कटुकी तथा ॥ ६१ ॥
हेमक्षीरी च विपचेत् कल्कैरेभिः पिचून्मितैः ।
घृतप्रस्थं स्नुहीक्षीरं षट्पलन्तु पलद्वयम् ॥ ६२ ॥
अर्कक्षीरस्य मतिमांस्तत् सिद्धं गुल्मकुष्ठहृत् ।

---

वृहत्करञ्जः, तस्य पत्राणि फलानि वा । उशीरं सुगन्धद्रव्यम् । सारिवा आस्फोता । तुत्थं हरितपाषाणवत् खनिजद्रव्यविशेषः, एतत् साम्यमानम् । कल्कद्रव्यात् घृतं चतुर्गुणं साध्यम् । अत्र कल्कपाचनार्थं चतुर्गुणितं जलं देयम् । एके सिक्थतुत्थयोः सिद्धे प्रक्षेपमाहुः ; तथा च—"प्रक्षेपं कारयेद्धीमान् सिद्धे सिक्थकतुत्थयोः" इत्यादि । जातीकाद्य गौराद्यञ्च तैलमपि पच्यते ; तथा च चक्रः,—"गौराद्यं जातीकाद्यञ्च तैलमेवं प्रसाध्यते । तैलं सूक्ष्मानने दुष्टे व्रणे गम्भीर एव च ॥" इति ॥ ५८।५९ ॥

अधुना विन्दुघृतमाह, चित्रकमिति ।—अत्र चित्रकं प्रसिद्धम् । शङ्खिनी यवतिक्ता, शङ्खपुष्पीशब्दवाच्या । कम्पिल्लकः कवीला विख्याता, "रोरी" शब्दवाच्यमिति केचित् । त्रिवृतायुगमिति—श्वेतकृष्णभेदेन "निशोत" द्वयम् । वृद्धदारः महाश्यामो दीर्घपत्रः, स च विधाराशब्दवाच्यः । सम्पाकः कृतमालकः । दन्ती "दन्तिवीज" इति लोके, तस्याः फलं जयपालशब्दवाच्यम् । त्रिफला हरीतक्यादिकम् । कोशातकी घोषाली । देवदाली वल्लीविशेषः । गिरिकर्णिका "ओफन्द ईश्वफन्द" इति प्रसिद्धः । सातला सेहुण्डभेदः, "घटघर" लोके । हेमक्षीरी कटुक. केचित् स्वर्णक्षीरीशब्दवाच्यमिति वदन्ति । पिचून्मितैरिति—कर्षप्रमाणैः प्रत्येकम् । अत्र कल्कार्थं तोयं चतुर्गुणं देयं व्यवहारात् ; तथा च—"सुधार्कयोस्तु पयसा प्राक्कल्पानुपचितः । चतुर्गुणं जलं देयं पाकार्थं विन्दुसर्पिषि ॥" ( वृन्द० ) इत्यादि । स्नुहीक्षीरं सेहुण्डस्य क्षीरं षट्पलपरिमितं देयम्, अर्कक्षीरन्तु पलद्वयमात्रं वदन्ति केचित् ।

हन्ति शूलमुदावर्त्तं शोथाध्मानं भगन्दरम् ॥ ६३ ॥
शमयत्युदराण्यष्टौ निपीतं बिन्दुसङ्ख्यया।
गोदुग्धेनोष्णदुग्धेन कौलत्थेन स्रुतेन वा ॥ ६४ ॥
उष्णोदकेन वा पीत्वा बिन्दुवेगैर्विरिच्यते।
एतद्बिन्दुघृतं नाम नाभिलेपाद्विरिच्यते ॥ ६५ ॥

नेत्ररोगे त्रिफलाघृतम्।—

त्रिफलाया रसप्रस्थं प्रस्थं वासारसोद्भवम्।
भृङ्गराजरसप्रस्थं प्रस्थमाजं पयः स्मृतम् ॥ ६६ ॥
दत्त्वा तत्र घृतप्रस्थं कल्कैः कर्षमितैः पृथक्।
त्रिफला पिप्पली द्राक्षा चन्दनं सैन्धवं बला ॥ ६७ ॥
काकोली क्षीरकाकोली मेदा मरिचनागरम्।
शर्करा पुण्डरीकञ्च कमलञ्च पुनर्नवा ॥ ६८ ॥
निशायुग्मञ्च मधुकं सर्वैरेभिर्विपाचयेत्।
नक्तान्ध्यं नकुलान्ध्यञ्च कण्डूं पिल्लं तथैव च ॥ ६९ ॥

---

अश्वत्थमदाये तु अष्टपलपरिमितं स्नुहीक्षीरम्, एतत्परिमाणन्तु अर्कक्षीरमपि। बिन्दुसङ्ख्यया निपीतमिति—"बिन्दुः स्यात्तर्जनीपर्वद्वयमग्नाङ्गुलो मितः" इति, व्यवहारात चतुष्कनिषेधो ज्ञेयः। बिन्दुवेगैरिति—यावत्सङ्ख्यान् बिन्दून् पिबेत् तावन्मात्रमेव विरिच्यते इत्यर्थः। "नाभिलेपाद्विरिच्यते" इत्यनेनास्य प्रभावोत्कृष्टत्वं दर्शितम् ॥ ६०—६५ ॥

इदानीं त्रिफलाघृतव्याख्यानमाह, त्रिफलेति।—त्रिफलाया रसप्रस्थमिति, स्वरसाभावे क्वाथः कल्को वा प्रचरति। वासारसोद्भवं प्रस्थमिति—वासा आटरूषकः। भृङ्गराजो मार्कवः भृङ्गराजशब्दवाच्यः। आजं पयश्छागीदुग्धम्। एके "प्रस्थमाजं पयः स्मृतम्" इत्यस्याग्रे "शतावर्या गुडूच्याश्च आमलक्या रसं तथा। प्रस्थं प्रस्थं समाहृत्य सर्वैरभिघृतं पचेत् ॥" इति पठन्ति व्याख्यानयन्ति च। कल्कैरिति कल्कयोग्यद्रव्याणां, तद्यथा—त्रिफला हरीतक्यादिकम्। चन्दनं श्वेतम्। पुण्डरीकं श्वेतकमलम्। कमलं सामान्यतोन रक्तं नालं वा। निशायुग्ममिति—हरिद्राद्वयम्। मधुकं मधुयष्टी। एतत् घृतं भोजनादौ भोजनमध्ये भोजनान्ते च

नेत्रस्रावञ्च पटलं तिमिरं काचकं जयेत्।
अन्येऽपि प्रशमं यान्ति नेत्ररोगाः सुदारुणाः॥
त्रैफलं घृतमेतद्धि पाने नस्यादिषूचितम्॥ ७० ॥

व्रणशोथे गौराद्यं घृतम्।—

द्वे हरिद्रे स्थिरा मूर्वा सारिवा चन्दनद्वयम्।
मधुपर्णी च मधुक-पद्मकेशरपद्मकम्॥ ७१ ॥
उत्पलोशीरमेदाभिस्त्रिफलापञ्चवल्कलैः।
कल्कैः कर्षमितैरेतैर्घृतप्रस्थं विपाचयेत्॥ ७२ ॥
विसर्पलूताविस्फोट-विषकीटव्रणापहम्।
गौराद्यमिति विख्यातं सर्पिर्विषहरं परम्॥ ७३ ॥

शिरोरोगे मायूरघृतम्।—

* बलामधुकरास्नाभिर्दशमूलफलत्रिकैः।
पृथक् द्विपलिकैरेभिर्द्रोणनीरेण पाचयेत्॥ ७४ ॥
मयूरं पक्षपित्तान्त्र-शकृत्पादास्यवर्जितम्।
पादशेषं शृतं नीत्वा क्षीरं दत्त्वा च तत्समम्॥ ७५ ॥

---

विहितम्; तथा च तन्त्रान्तरे—"ऊर्द्धपानमधःपानं मध्ये पानञ्च शस्यते" इति। शर्कराऽत्र सिद्धे प्रक्षेपमाहुरेके। नस्याभ्यादयो नेत्ररोगे विख्याताः॥ ६६—७०॥

अधुना गौराद्यं घृतमाह, द्वे हरिद्रे इति।—हरिद्रा दारुहरिद्रा। स्थिरा शालपर्णी। मूर्वा चोरस्नायुः। सारिवा चास्फोता। चन्दनद्वयमिति—श्वेतरक्तभेदेन। मधुपर्णी यष्टीमधुभेदः। मधुकं मधुयष्टी। केचित्तु मधुयष्ट्या एव भागद्वयं ग्राह्यं द्विःपाठात्। पद्मकः काष्ठविशेषः। पञ्चवल्कलैरित्यस्याग्रे "जातीनिम्बपटोलञ्च करञ्जं तिक्तसिक्थकम्" इति पठन्ति, तत् बहुपुस्तकेषु न दृश्यते। अत्रापि कल्कपाकार्थं पानीयं चतुर्गुणमिति देयं, परिभाषामतानुसारतः। गौराद्यमिति—गौरा हरिद्रा॥ ७१—७३॥

अथ मयूराद्यं घृतमाह, बलेति।—बला। मधुकं यष्टीमधु। रास्ना सुरभि। दशमूलं प्रसिद्धम्। फलत्रिकं हरीतक्यादि। पृथक् द्विपलिकैरभिरित्यस्य स्थाने

---

* बला इत्यादिस्थले "दशमूलबलारास्नामधुकैस्त्रिपलैः सह" इति पाठः चक्रवाग्भटसम्मतः। "शकृत्पादास्यवर्जितम्" इत्यत्र "यकृत्पादास्यवर्जितम्" इति पाठान्तरम्।

घृतप्रस्थं पचेत् सम्यक् जीवनीयै: पिचून्मितै:।
तत् सिद्धं शिरस: पीड़ां मन्यापृष्ठग्रहं तथा ॥ ७६ ॥
अर्दितं कर्णनासाक्षि-जिह्वागलरुजो जयेत्।
पाने नस्ये तथाऽभ्यङ्गे कर्णपूरेषु युज्यते ॥
हेमन्तकालशिशिर-वसन्तेषु च शस्यते ॥ ७७ ॥

योनिव्यापत्सु वृहत्फलघृतम्।—

त्रिफला मधुकं कुष्ठं द्वे निशे कटुरोहिणी।
विड़ङ्गं पिप्पली मुस्तं विशाला कट्फलं वचा ॥ ७८ ॥
द्वे मेदे द्वे च काकोल्यौ सारिवे द्वे प्रियङ्गुका।
शतपुष्पा हिङ्गु रास्ना चन्दनं रक्तचन्दनम् ॥ ७९ ॥

---

केचित् त्रिपलिकैरिति पठन्ति मानयन्ति च। पञ्चपलात्मकत्वादावर्जितं मयूरमेकं द्रोणनीरेणेति—चतुराढ़कमितेन पानीयेन, व्यवहारत: किन्तु अधिकं जलं देयं, यत: मयूरेण सह द्रव्याणां क्वाथविधानं भवति। तथा च चक्र:,—"दशमूलादिना तुल्यो मयूर इह गृह्यते" इति। एवं मिलित्वा यावत् क्वाथ्यं भवति तावज्जलं देयम्; तत्र "क्वाथ्याच्चतुर्गुणं वारि" इत्यादि परिभाषया जल-व्यवस्थेति पूर्वव्याख्यापचार:। क्षीरं दत्त्वा च तत्सममिति—क्वाथसमम्; एके * घृतसमं क्षीरमिति मन्यन्ते, तदपि सङ्गतं द्रवान्तरत्वात्। जीवनीयै: पिचु-म्मितैरिति—जीवनीयो मधुरगण:, स यथालाभं ग्राह्य:। पिचुम्मितै: कर्षप्रमाणै: प्रत्येकं, जीवनीयस्तु कल्करूप इत्याहु:। एतत् घृतं पानाभ्यञ्जनस्यादिषु योज्यम्। सेव्यमिदं हिमशिशिरवसन्तेषु इति, अन्यथा दोषकृत् स्यात्; तथा सुश्रुत:—"हेमन्त-काले शिशिरे च सेव्यं वसन्तकाले च मयूरसर्पि:। ग्रीष्मादिदाहे विषभक्षणाच्च वर्षाशरद्ग्रीष्मसुखेष्वपथ्यम्॥ आहारजातं हि विहङ्गमस्य कीटाश्च सर्पाश्च सरीसृपाश्च। पिपीलिकामत्कुणमक्षिकाश्च तेनाशुकालेष्वहितो मयूर:॥ तथैव काले जलदाभिरामे विसृज्य शुक्रञ्च बलञ्च बर्ही। क्षामत्वमायात्यतिदोषभावात् अरण्यजं तेन विवर्जनीयम्॥" इति॥ ७४—७७॥

इदानीं वृहत् फलघृतमाह, त्रिफलेति।—विशालेन्द्रवारुणी। द्वे मेदे इति—

---

* एतदेव चरकादिसम्मतम्।

जातीपुष्पं तुगाक्षीरी कमलं शर्करा तथा।
अजमोदा च दन्ती च कल्कैरेतैश्च कार्षिकैः॥ ८०॥
जीववत्सैकवर्णाया घृतप्रस्थञ्च गोः क्षिपेत्।
चतुर्गुणेन पयसा पचेदारण्यगोमयैः॥ ८१॥
सुतिथौ पुष्यनक्षत्रे मृण्मये ताम्रजे तथा।
ततः पिबेच्छुभदिने नारी वा पुरुषोऽथवा॥ ८२॥
एतत् सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते।
पुत्रानुत्पादयेद्धीमान् वन्ध्याऽपि लभते सुतम्॥ ८३॥
अनायुषं या जनयेत् या च सूता पुनः स्थिता।
पुत्रं प्राप्नोति सा नारी बुद्धिमन्तं शतायुषम्॥ ८४॥
एतत् फलघृतं नाम भारद्वाजेन भाषितम्।
अनुक्तं लक्ष्मणामूलं क्षिपेदत्र चिकित्सकः॥ ८५॥

योनिव्यापत्सु स्वल्पफलघृतम्।—

त्रिफलां द्वे सहचरे गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम्॥ ८६॥

मेदा महामेदा। द्वे च काकोल्याविति—काकोली क्षीरकाकोली। सारिवे द्वे इति—सारिवा कृष्णसारिवा "माव" इति लोके। प्रियङ्गुर्लताविशेषः। रास्ना सुरभी। जाती सुमनाः तस्याः पुष्पम्। तुगाक्षीरी वांशी। कमलमुत्पलम्। दन्ती जयपालमूलम्। शेषं द्रव्यं सुबोधम्। एतेषां प्रत्येकं कर्षप्रमितानां कल्कमाहुः। जीववत्सा एकवर्णा या गौस्तस्या घृतमिति, जीववत्सायाश्चमिति सम्बन्धत्वात्। चतुर्गुणेन पयसेति—घृतपरिमाणात्। आरण्यगोमयैरिति—मन्दपावकपाचनत्वात्। अनुक्तं लक्ष्मणामूलमिति क्वचित पठ्यते: लक्ष्मणा श्वेतकण्टकारिका, अन्ये अश्वबिटपमाहुः; यथा हि—"पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छिता सदा। लक्ष्मणा पुत्रजननी वस्तगन्धाकृतिर्भवेत्॥ शरत्काले भवति सा फलपुष्पान्विता सदा। गृह्णीयात् * पुष्पमूलार्कें हस्तार्कें चाभिमन्त्र्य च॥" इत्यादि॥ ७८—८५॥

अथ लघुफलघृतमाह, त्रिफलामिति।—सहचरे द्वे पीतरक्तभेदेन। शुकनासा

* पुष्पमूलार्कें हस्तार्कें इत्यत्र पुष्यमूलर्क्षे हस्तर्क्षे इति पाठकल्पनं समीचीनम्।

कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरे चतुर्गुणे।
तत् सिद्धं पाययेन्नारीं योनिशूलनिपीड़िताम् ॥ ८७ ॥
पिच्छिता चलिता या च निःसृता विवृता च या।
पित्तयोनिश्च विस्रस्ता षण्डयोनिश्च या स्मृता ॥ ८८ ॥
प्रपद्यन्ते हि ताः स्थानं गर्भं गृह्णन्ति चासकृत्।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ ८९ ॥

विषमज्वरादौ पञ्चतिक्तकं घृतम्।—

वृषनिम्बामृताव्याघ्री-पटोलानां शृतेन च।
कल्केन पक्वं सर्पिस्तु निहन्याद्विषमज्वरान् ॥
पाण्डुं कुष्ठं विसर्पञ्च कृमीनर्शांसि नाशयेत् ॥ ९० ॥

इति श्रीदामोदरसूनुना श्रीशार्ङ्गधराचार्य्येण विरचितायां शार्ङ्गधरसंहितायां मध्यखण्डे चिकित्सितस्थाने घृतकल्पना नाम नवमोऽध्यायः ॥ ९ ॥

---

शोभाक:। रास्ना सुरभि:। शेषं द्रव्यं सुगमम्। एतत् सकलं घृतचतुर्थांशं ग्राह्यं, कल्कं कृत्वा क्षीरचतुर्गुणेन सह घृतं साध्यम्, अत्र कल्कार्थं चतुर्गुणं पानीयं देयं, चतुर्गुणं स्नेहपरिमाणात्। एतत् घृतं योनिदोषेषु प्रायशः प्रचरति। पिच्छिता चलितेत्यादयो योनिगदविशेषा: कथिता:, ते तु तत्रैव बोद्धव्या: ॥ ८६—८९ ॥

अथ पञ्चतिक्तकघृतमाह, वृषेति।—वृष: आटरूषक:, निम्ब: प्रसिद्ध:, अमृता गुडूची, व्याघ्री कण्टकारिका, पटोल: प्रसिद्ध:, एतेषां शृतेन क्वाथेन, क्वाथार्थं द्रव्यं स्नेहद्विगुणम् ; पानीयमत्र चतुर्गुणं, क्वाथचतुर्थावशेषो ग्राह्य:। कल्केनेति।—वृषादीनामपि कल्केन पाकमाहु:, कल्कार्थं घृतचतुर्थांशं द्रव्यमष्टममाहु:। * पानीयमप्यत्र चतुर्गुणं शोभनपाकार्थम्। अस्य पानाभ्यङ्गमाहु:। इति घृतं समाप्तम् ॥ ९० ॥

इति श्रीवात्स्यान्वयप्रकाशवैद्य-श्रीभावसिंहात्मजेनाढ़मल्लेन विरचितायां शार्ङ्गधर-दीपिकायां मध्यखण्डे चिकित्सितस्थाने घृतकल्पना नाम नवमोऽध्यायः ॥ ९ ॥

---

* मतमेतत् सुश्रुतादिविरुद्ध, तत्तु प्रदर्शितमेव।

# दशमोऽध्यायः ।

---

## तैलकल्पना ।—

### विषमज्वरादौ लाक्षादितैलम् ।—

लाक्षाढकं क्वाथयित्वा जलस्य चतुराढकैः ।
चतुर्थांशं शृतं नीत्वा तैलप्रस्थे विनिक्षिपेत् ॥ १ ॥
मस्त्वाढकञ्च गोदध्नस्तत्रैव विनियोजयेत् ।
शतपुष्पामश्वगन्धां हरिद्रां देवदारु च ॥ २ ॥
कटुकीं रेणुकां मूर्वां कुष्ठञ्च मधुयष्टिकाम् ।
चन्दनं मुस्तकं रास्नां पृथक्कर्षप्रमाणतः ॥ ३ ॥
चूर्णयेत्तत्र निक्षिप्य साधयेन्मृदुवह्निना ।
अस्याभ्यङ्गात् प्रशाम्यन्ति सर्वेऽपि विषमज्वराः ॥ ४ ॥
कासश्वासप्रतिश्याय-त्रिकपृष्ठग्रहास्तथा ।
वातं पित्तमपस्मारमुन्मादं यक्षराक्षसान् ॥ ५ ॥
कण्डूं शूलञ्च दौर्गन्ध्यं गात्राणां स्फुरणं जयेत् ।
पुष्टगर्भा भवेदस्य गर्भिण्यभ्यङ्गतो भृशम् ॥ ६ ॥

### जीर्णज्वरे अङ्गारकतैलम् ।—

( मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी ।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥

---

इदानीं तैलकल्पनायां प्रथमतो लाक्षादितैलमाह, लाक्षाढकमिति ।—अत्र लाक्षारसः तैलाच्चतुर्गुणो ज्ञेयः, लाक्षाया आढकमपि निर्य्यासत्वाद्द्रुततरम् । मस्त्वाढकमपि तैलाच्चतुर्गुणं ज्ञेयमित्यर्थः; गोदध्न इति—गोदधिसम्भवं मस्तु, न तु दध्याढकमपि तैलं पचनीये, यतस्तन्त्रान्तरेऽपि—"लाक्षारसं समादाय तैलप्रस्थाच्चतुर्गुणम् । मस्तुनश्चाढकं दद्यात्तुल्यैरौभय कार्षिकैः ॥" इत्यादि । दधिग्रहणमत्र दधिसम्भवमस्तुप्राप्तिनिमित्तं कृतं, यतः मस्तु सप्तविधं भवति;

आरनालाढ़के तत्र तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोचनम्॥)

* वातव्याधौ नारायणतैलम्।—

अश्वगन्धां बलां बिल्वं पाटलां बृहतीद्वयम्।
श्वदंष्ट्राऽतिबला निम्बं श्योनाकञ्च पुनर्नवा॥ ७॥
प्रसारणीमग्निमन्थं कुर्य्याद्दशपलं भिषक्।
चतुर्द्रोणे जले पक्त्वा पादशेषं शृतं नयेत्॥ ८॥

† "स्वाद्वम्लमथवाऽत्यम्लमन्दजातं तथा घृतक्षीरभवं सरञ्च। यथारसैवं दधि सम्यगाऽऽख्यम् वर्गे स्मृता मस्तुमुखास्तथैव॥" (सु० सू० ४५ अ०) इति। द्रव्याण्यत्र प्रसिद्धानि। केचित्तु "कुष्ठञ्च मधुयष्टिकाम्" इत्यस्याग्रे "मञ्जिष्ठापद्मकोशीर-मालीलोहितचन्दनम्" इति पठन्ति व्याख्यानयन्ति च। "कल्कात्तैलं चतुर्गुणम्" इति परिभाषया यद्व्यवहरणं तदनुक्तकल्कपरिमाणार्थं मनोहरम्। चूर्णयेदिति—अत्र चूर्णविलम्बितत्वात् प्रथमं चूर्णीभूतं कृत्वा पश्चात् दृषदि पेषितं कुर्य्यादिति भावः। विकपृष्ठग्रहा इति—‡ तृतीयकज्वरभेदः कथितः, यतः,—"कफपित्तात् त्रिकग्राही पृष्ठात् वातकफात्मकः" (च० चि० ज्वर०) इति वचनात्। यद्यपि पूर्वं विषमज्वरग्रहणेनैव तृतीयकज्वर-प्राप्तिस्तथाऽपि विशेषेण तृतीयकज्वरनाशनेऽस्य प्रभावः इत्यदोषः। अस्य तैलस्याभ्यङ्गात् गर्भिणी स्त्री पुष्टगर्भा भवेत् इति, पाठान्तरस्येति केचित्॥ १—६॥

अथ नारायणतैलव्याख्यानमाह, अश्वगन्धामिति।—अत्राश्वगन्धादीनि प्रसिद्धानि,

* नारायणतैले निम्बशब्दः पारिभद्रार्थकः "पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः" इति कोषात् तन्त्रान्तरे पारिभद्रपाठदर्शनाच्च। चक्रदत्ते कल्कोक्त-बला-स्थाने पुनर्नवा इति पाठः।

† शाकोऽयं सप्तविधदधिजातस्य सप्तविधमस्तुनः श्वयोनित्व गुणवत्त्वप्रदर्शनपरः न तु दधीतरद्रव्यजातमस्तुनः पोषणपरः। मस्तु तु दधिनिःसृतजलार्थे एव [illegible] यत्तु सुश्रुतेन कूर्चिकादधिलकजं मस्तुद्वयं मस्तुत्रयं वा उक्तं तत्तु नातिप्रसिद्धम्।

‡ त्रिकपृष्ठग्रहाः तृतीयकज्वरभेद इत्यादि यदुक्तं तत्र सङ्गतं, त्रिकपृष्ठग्रहस्तु वातव्याधावपि एव, यदि त्रिकपृष्ठग्रहशब्देनैव तृतीयको लभ्यते, तदा वातव्याधि-निर्णयकथने पार्श्वपृष्ठशिरोग्रहः इत्यत्रापि पृष्ठशिरोग्रह इत्यनेन तृतीयक एव ज्ञापितो भवितुमर्हति, यतः,—"पृष्ठात् वातकफात्मकः। वातपित्ताच्छिरोग्राही त्रिविधः स्मृतस्तृतीयकः॥" इति सुधीभिर्विभाव्यम्।